ISSN : 2347- 9469

# पौर्णमासी

# POURṆAMĀSĪ

विशेषज्ञ-समीक्षिता वार्षिकी राष्ट्रिय-बहुभाषि-शोधपत्रिका
A Peer Reviewed Multilingual Yearly National Research Journal



केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः
श्रीसदाशिवपरिसरः, पुरी, ओडिशा
२०२०-२१

ISSN : 2347- 9469

# पौर्णमासी

विशेषज्ञ-समीक्षिता वर्षिकी राष्ट्रिय-बहुभाषि-शोधपत्रिका

संरक्षकः
**प्रो. परमेश्वरनारायणशास्त्री**
कुलपतिः

मुख्यसम्पादकः प्रकाशकश्च
**प्रो. खगेश्वरमिश्रः**
निदेशकः

सम्पादकः
**डॉ. सुशान्तकुमारराजः**
सहाचार्यः, साहित्यविभागः




**केन्द्रीयसंस्कृतविश्वविद्यालयः**
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः
श्रीसदाशिवपरिसरः, पुरी, ओडिशा
२०२०-२१

ISSN : 2347- 9469

# POURṆAMĀSĪ

## A PEER REVIEWED MULTILINGUAL YEARLY NATIONAL RESEARCH JOURNAL

*Chief Patron :*
**Prof. Parameswar Narayan Shastry**
Vice-Chancellor

*Chief Editor & Publisher*
**Prof. Khageswar Mishra**
Director

*Editor :*
**Dr. Sushanta Kumar Raj**
Asso. Professor, Dept. of Sahitya




CENTRAL SANSKRIT UNIVERSITY
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan, Deemed University)
Under M.H.R.D. Govt. of India
SHREE SADASHIVA CAMPUS, PURI (ODISHA)

**2020-21**

# सम्पादकमण्डली



**पुण्यश्लोकः पण्डितहरिहरदाशमहोदयः**

आविर्भावः - .../१०/१८४२ तिरोभावः - ०९/०२/१८७४

(पुरीसंस्कृतविद्यालयस्य प्रतिष्ठाता - १८६५)



**महामहोपाध्यायः पण्डितसदाशिवमिश्रमहोदयः**

आविर्भावः - ११/०६/१८५७, तिरोभावः - २७/०८/१९२९

(पुरीसंस्कृतमहाविद्यालयस्य प्रतिष्ठाता - ०१.०४.१९१८)

**प्रो. पी.एन्.शास्त्री**
कुलपतिः
केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली ।
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्,
मानितविश्वविद्यालयः)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः



**Prof. P.N. Shastri**
Vice- Chancellor
Central Sanskrit University
Established by an Act of Parliament
Formerly Rashtriya Sanskrit Sansthan,
Deemed to be University
Under Ministry of Education, Govt. of India

RSKS/VC/Msg/2020-21/138

Date 10.03.2021



**श्रीः**

केन्द्रियसंस्कृतविश्वविद्यालयस्य श्रीसदाशिवपरिसरे प्रतिवर्षमिवास्मिन् वर्षेऽपि **पौर्णमासी** इति वार्षिकी पत्रिका प्रकाश्यते। इयं पत्रिका प्रतिवर्षं निरवच्छिन्नतया प्रकाश्यते इति विज्ञाय सन्तोषमनुभवामि। परिसरे अध्ययनरताः छात्राः, शोधच्छात्राः, अध्यापनकुशलाः आचार्याः च स्वलेखैः पौर्णमासीं भूषयन्तीति मोदमनुभवामि। यथा सम्भाषणं तथा लेखनमपि भाषाकौशलस्य संवर्धनाय सहकरोति। लेखनमाध्यमेन तत्रापि सरल-मानक-संस्कृतभाषया स्वाभिप्रेतं विषयं निरूपयितुं वार्षिकी पत्रिकेयं सदैव महत्त्वमावहति। विशेषतः प्रथमवारं लेखितुं प्रवृत्ताः लेखकाः पौर्णमासीमिमां संसेव्य प्रवर्त्तेरन्। आचार्याणां प्रोढाः लेखाः छात्राणां प्रतिभाप्रकाशकाः विविधाः लेखाः च पत्रिकायाम् अन्तर्भवन्तीति मन्ये। अत्र कार्ये निरताय परिसरनिदेशकाय प्रकाशकवृन्दाय च शुभाशीर्वचनानि विज्ञापयामीति।

इति

प.ना. शास्त्री

(पि.एन्.शास्त्री)

**प्रो. एस. सुब्रमन्यशर्मा**
कुलसचिव:
राष्ट्रियसंस्कृतसंस्थानम् (मा.वि.
नवदेहली






# शुभाशंसा

भारतीयभाषाणां जननी संस्कृतभाषा सर्वदा सर्वमान्या चकास्ति । भारतसर्वकार: अस्या: भाषाया: संरक्षणे बद्धादर: सन् राष्ट्रियसंस्कृतसंस्थानमाध्यमेन विविधानि कार्याणि करोति । भारते संस्थानस्य परिसरेषु उत्कलप्रदेशे पुरीनगरे विद्यमान: श्रीसदाशिवपरिसर: प्रमुखोऽस्ति । अत्र प्रवीणा: अध्यापका: स्वज्ञानवैभवं स्वशिष्येषु सञ्चारयन्त: धन्यं मन्यन्ते आत्मानम् ।

परिसरस्य वार्षिकी पत्रिका **'पौर्णमासी'** प्रतिवर्षमिव ऐषमोऽपि प्रकाश्यमानास्ति । छात्रा: निजप्रतिभां लेखमाध्यमेन अत्र प्रकाशयन्ति । अध्यापका: अपि शोधपूर्णलेखान् अत्र प्रकाश्य छात्राणां महोपकारं साधयन्ति । **'पौर्णमासी'** इति पत्रिकाया: प्रकाशनेन परिसर: पूर्णप्राण इव राजते ।

अहम् एतादृश्या: पत्रिकाया: दीर्घाजीवित्वं कामये, पत्रिकासंपादकमण्डल्या:, परिसरस्य प्राचार्यस्य चोद्यमम् अस्यां दिशि श्लाघ्यं मन्ये । मम शुभाशंसां पुन: पुन: विनिवेद्य श्रीजगन्नाथस्य चरणकमलतले प्रार्थये यत् सर्वेषां मङ्गलमस्तु ।

।। इति ।।

**प्रो. एस. सुब्रमन्यशर्मा**
**कुलसचिव:**
केन्द्रीयसंस्कृतविश्वविद्यालय:,
नवदेहली ।

**प्रो. खगेश्वरमिश्रः**
निदेशकः
केन्द्रीयसंस्कृतविश्वविद्यालयः
संसदः अधिनियमेन स्थापितः
(प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः)
भारतसर्वकारस्य मानवसंसाधनविकासमन्त्रालयाधीनः
श्रीसदाशिवपरिसरः, पुरी (ओडिशा)



**Prof. Khageswar Mishra**
Director
CENTRAL SANSKRIT UNIVERSITY
Established by an Act of Parliament
(Formerly Rashtriya Sanskrit Sansthan, Deemed University)
Under M.H.R.D. Govt. of India
SHREE SADASHIVA CAMPUS, PURI (ODISHA)



# पुरोवाक्

समग्रे विश्वे भारतस्य कीर्तिः आध्यात्मिकक्षेत्रसम्बद्धतया वर्तत इति विदन्त्येव मनीषिणः। तेषु पुण्यक्षेत्रत्वेन पूर्वस्यां दिशि पुरुषोत्तमक्षेत्रमिदं प्रथतेतराम् । तेनैव क्रमेण शास्त्रसंरक्षणं गुरुशिष्यपरम्परयैव सम्भवतीत्युद्देश्येन विश्वविद्यालयस्य स्थापनां विधाय विविधप्रान्तेषु शास्त्रशिक्षणं प्रावर्ति । तत्र केन्द्रीयसंस्कृतविश्वविद्यालयस्य सर्वबृहत्परिसरत्वेन पुरीस्थश्रीसदाशिवपरिसरः सर्वमान्यः ।सुरसरस्वतीसमुपासकानां सहृदयानां हृदयाह्लादिनी शेमुषीमतां विदुषां चेतोहारिणी, निरन्तरं, ज्ञानार्जनतत्पराणामन्तेवासिनामुपाध्यायानाञ्च जीवनवाहिनी वरिवर्ति **पौर्णमासी**। स्वयं कार्यानुष्ठानेनाधिगतोऽनुभव एव शिक्षेति शिक्षाविदां सम्मतं मतमाश्रित्य शिक्षणकार्यकलापाः समायोज्यन्ते विद्यालयेषु । तेषु च कलापेषु शिक्षार्थिनां बौद्धिकरचनात्मककौशलानां विकासाय क्रियमाणं पत्रिकाप्रकाशनमप्यन्यतमत्वं भजते । चिन्तनतर्कणोत्प्रेक्षणप्रतिपादनादीनां बौद्धिककौशलानां निरूपकाः छात्राणामध्यापकानाञ्च प्रबन्धाः, कल्पनाभावनाविलासितानां वाच्यलक्ष्यव्यङ्ग्यानां रसभावादीनां समुन्मेषकाः प्राकाश्यं नीयन्ते यथापूर्वमस्यां पत्रिकायाम् । संस्कृतांग्ल–हिन्दी–ओडिआभाषासु समुपनिबद्धा निबन्धाश्छात्राणां विभिन्नासु भाषासु रचनाकौशलमुपस्कुर्वन्ति ।

पत्रिकासम्पादनसमितेः श्रीसदाशिवपरिसरस्य विविधविभागाध्यक्षाणां, प्राध्यापकानां, कार्यालयीयानाञ्च साङ्घिकप्रयासेन पत्रिकेयं प्राकाश्यं नीयत इति तेभ्य सर्वेभ्योऽपि अवसरेऽस्मिन् साधुवादा आविष्क्रियन्ते ।

इत्थम्
खगेश्वरमिश्रः
12/03/2021
**प्रो. खगेश्वमिश्रः**
निदेशकः



# सम्पादकीयम्

सर्वे जानीमहे वयं यत् त्रितापप्रपीडितेऽस्मिन् असारसंसारे सुखेनाल्पश्रमेणापि निरन्तरानन्दप्राप्तये सर्वेऽपि प्रवीणजना: प्रमुखत: साहित्यरससारसमुपासका: सम्पद्यन्ते। तदेव साहित्यं काव्यरूपं शास्त्ररूपं प्रबन्धरूपञ्चेति मौलिकभेदाधारेण नैकभाषानिवद्धरचनाधारेण च अनन्तरूपतां प्राप्नोतीति विदितचरमेव। विविधविद्याविद्योतितान्त:करणै: नवनवोन्मेषशालिप्रतिभामद्भि: विद्वद्भि: गवेषकैश्च प्रणीता नैकविधा गवेषणधर्मिप्रबन्धा:, मानवानामन्त:करणाच्छादिताज्ञानान्धकारदूरीकरणपूर्वकम् अनन्ताज्ञानानन्दप्रदाने समर्था: सम्पद्यन्ते। एतादृशप्रबन्धानात्मसात्कृत्वा सन्ति निर्मिता: निर्माणाधीनाश्च राष्ट्रियान्त:राष्ट्रियाश्च शोधपत्रिका:, यासां परमोपादेयता सर्वत्राध्ययनाध्यापनगवेषणरतपाठकसंसदि समनुभूयतेऽङ्गीक्रियते च।

पुण्यश्लोकानां पण्डितश्रीहरिहरदाशमहोदयानां प्रगाढप्रयत्नेन १८६५ख्रीष्टाब्दे विनिर्मितप्राथमिकसंस्कृतानुष्ठानस्य, पण्डितश्रीसदाशिवमिश्रमहोदयानां निरन्तरोद्यमेन १९१८ख्रीष्टाब्दे संस्कृतमहाविद्यालयरूपेण प्रतिष्ठितस्य, तत: भारतसर्वकारेण श्रीसदाशिवकेन्द्रीयविद्यापीठरूपेणाङ्गीकृतस्य, तदनन्तरं (२००२ ख्रीष्टाब्दत:) मानवसंसाधनविकासमन्त्रालयेन प्रतिष्ठितस्य राष्ट्रियसंस्कृतसंस्थानाख्यमानितविश्वविद्यलयस्य श्रीसदाशिवपरिसररूपेण च विकसितविद्यानिकेतनस्य, अद्यत्वे २०२० ख्रीष्टाब्दस्य अप्रेलमासस्य त्रिंशद्दिनाङ्कत:(३०.०४.२०२० दिनाङ्कत:) भारतसर्वकारस्य मानवसम्बलविकासमन्त्रालयाधीनं राष्ट्रियसंस्कृतसंस्थानमिदं, संसद: २०२० तमाधिनियमेन **केन्द्रीयसंस्कृतविश्वविद्यालयरूपेण** प्रतिष्ठितेरनन्तरं तदन्तर्गतश्रीसदाशिवपरिसरस्यास्य **पौर्णमासी**ति ख्यातनाम्नी वार्षिकी-राष्ट्रियशोधपत्रिका निरन्तरं सकलसहृदयहृदयारविन्दमुन्मीलयितुं समर्था आसीदस्ति स्थास्यति चेति नास्ति काऽपि विप्रतिपत्ति:।

**कुमारमूर्णिमा** इति संस्कृतानुष्ठानस्यास्य प्रथमप्रतिष्ठातिथिरित्याधारेणाथवा प्रतिष्ठापकस्य जन्मतिथिरपि **पूर्णिमा** इत्याधारेण यद्यपि पत्रिकेयं सार्थकनाम्नी वर्तते, तथापि पूर्णिमा तिथिर्यथा पूर्णचन्द्रमयूखबलेन जगति विद्यमानान् अन्धकारान् दूरीकर्तु समर्था भवति तथैवेयं **पौर्णमासीपत्रिका** नूतनप्रबन्धसम्बलितज्ञानज्योतिर्बलेन सकलपाठकानामन्त:करणगताज्ञानान्धकार-दूरीकरणपूर्वकमसीमानन्दप्रदाने समर्था भवतीति मे विश्वास:। राष्ट्रियस्तरमान्यताप्राप्तेयं चतुर्भाषानिवद्धप्रबन्धसम्बलितशोधपत्रिका सम्प्रति २०२०-२१ तमे शिक्षावर्षे नैजं प्राकट्यं विधित्सतीति असीममोदं प्रकटीकरोति श्रीसदाशिवपरिवारोऽयम्।

गते २०१९-२० तमे शिक्षावर्षे प्रथमतया केन्द्रीयसंस्कृतविश्वविद्यालयरूपेण मान्यताप्राप्तेरनन्तरं श्रीसदाशिवपरिसरस्यास्या प्रथमराष्ट्रियशोधपत्रिकारूपेणेयम् अस्मत्सम्पादनया प्रकाशिताऽभूत्। ऐषमोऽपीयं पौर्णमासी प्रथमतया विविधविषयविशेषज्ञै: समीक्षीता सती यथावत् प्राकाश्यं नीयत इति आनन्दोऽनुभूयते। अस्या: पत्रिकाया: ये शुभचिन्तका:, प्रवीणविद्वांस:, अधिकारिण:, प्राक्तनच्छात्रा:, अधुनाध्ययनरता: छात्रा:, गवेषका:, अध्यापकाश्च स्वोपादेयलेखाभि: मर्य्यादां वर्द्धितवन्त: तेषां कृते अनुष्ठानपक्षत: पत्रिकाया: संपादनमण्डलीपक्षत: कृतज्ञता ज्ञाप्यते।

शिक्षानुष्ठानानामन्तेवासिषु सर्जनात्मकमनोवृत्ते: परिपुष्टये विविधशैक्षिककार्यक्रमाणां मध्ये पत्रिकाणां प्रमुखभूमिका

वर्तते। सन्दर्भेऽस्मिन् परिसरस्य वार्षिकी मुखपत्रिका **पौर्णमासीयं** निरन्तरं नियमितरूपेण प्रकाश्यमाना अभिनवसर्जनवृद्ध्यर्थं सर्वदा संप्रशंसिता। संस्कृत-ओडिआ-आङ्गल-हिन्दी-भाषाभि: विरचितानां प्रबन्धानां तत्तद्भाषाभिज्ञानां सहकर्मिणां सहयोगेन एव सफलतया सपांदनं सहजं संजातम्। अत एव सर्वेषां पत्रिकासम्पादनसमितिसदस्यानां कृते साधुवादान् विज्ञापयामि।

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्राक्तनकुलपतय: **प्रो. अभिराजराजेन्द्रमिश्र**महोदया:, डॉ. राजेन्द्रप्रसाद-केन्द्रीय-कृषिविश्वविद्यालयस्य कुलाधिपतय: **प्रो. प्रफुल्लकुमारमिश्र**महाभागा:, तिरुपतिस्थराष्ट्रियसंस्कृतविद्यापीठस्य तथा भूवनेश्वरस्थितस्य कीस् विश्वविद्यालयस्य प्राक्तनकुलपतय: **प्रो.हरेकृष्णशतपथि**महोदया:, श्रीजगन्नाथसंस्कृतविश्वविद्यालयस्य कुलपतिचरा: प्रो.नीलकण्ठपतिमहोदया:, झारखण्डराज्यस्थितस्य कोल्हाणविश्वविद्यालयस्य कुलपतय: प्रो. गङ्गाधरपण्डा**महोदया:**, परिसरस्यास्य साहित्यविभागाध्यक्षा: **प्रो. सूर्य्यमणिरथ**महोदया:, अस्मद्विश्वविद्यालयस्य प्राक्तन-आंग्लोविभागमुख्या: **प्रो. एस.वी.आर. रमणमूर्त्ति**महोदयाश्च तत्तद्विषयविशेषज्ञरूपेण शोधप्रबन्धानां निरीक्षणपूर्वकं समुपयुक्तमार्गदर्शनं विधाय पत्रिकाया: अस्या: गौरवं वर्धयामासु। अत: तेभ्य: विविधविद्याधुरन्धराचार्येभ्योऽहं सर्वथा बलवदाधमण्यप्रकटीपूर्वकं कार्तज्ञ्यमाविष्करोमि। परिसरनिदेशकानां धर्मप्राणाचार्यणां प्रो. खगेश्वरमिश्रमहोदयानां निरन्तरप्रोत्साहनेन साधुप्रचेष्टया च **पौर्णमासी** पत्रिकेयं प्राकाश्यमायातीति कृत्वा तेषां चरणकमलयो: सततं प्रणतिततिसमर्पणेन सह धन्यवादान् प्रदास्यामि पत्रिकासमितिपक्षत:।

अवसरेऽस्मिन् श्रीसदाशिवपरिसरस्य आचार्योपाचार्य-सहाचार्य-संविदाध्यापक-कर्मचारिभ्यस्तेषां साहाय्यार्थं विज्ञापयामि धन्यवादान्। ये ये आचार्या: अध्यापका: छात्राश्च स्वकीयं लेखं प्रदाय पौर्णमास्या: कलेवरं समवर्द्धयन्, ते सर्वेऽपि धन्यवादभाजनतां लभन्ते। पत्रिकाया: प्रकाशनकार्ये **डॉ. गणपतिशुक्लमहोदय: डॉ. सुशान्तकुमारराय: डॉ.वसन्तकुमारमुद्रा डॉ.अजयकुमारदाश: डॉ. कृष्णचन्द्रकवि: डॉ. ज्योतिप्रकाशनन्द: डॉ. नवीनकुमारप्रधान: डॉ. स्वागतिकामहान्ति डा.रेखामिश्रा श्रीमतीरश्मिमिश्र**प्रमुखा: विविधभाषासाहित्यनिपुणा: प्राध्यापका: निरन्तरं साहाय्यं कृतवन्त:, अतस्तेभ्योऽहं आन्तरिकधन्यवादं वितनोमि।

शोधच्छात्राणां युवाध्यपकानां वा लेखेषु संरचनादोषात् मुद्रणदोषात् दृष्टिदोषाद्वा सम्भावितास्त्रुटय: सुधीभि: उदारतया क्षन्तव्या:। परिशेषे नीलकन्दरनाथस्य श्रीजगन्नाथस्य श्रीचरणकमलयो: प्रणामाञ्जलिं विनिवेद्य पौर्णमासी सुरभारतीपरम्परायां देदीप्यमाना स्यादित्याशास्य विरमत्ययं जन:।

**दिनाङ्क: - १७.०३.२०२१**

**डॉ. सुशान्तकुमारराज:**
**सम्पादक:**

# विषयानुक्रमणिका

## हिन्दि विभाग



## English Section

## ଓଡିଆ ବିଭାଗ





# पुराणेषु भगवत्स्वरूपविमर्शः

प्रो. मिनतिरथः

भारतीयवाङ्मयेषु "भग "शब्दस्यानेकार्थाः सन्ति । अणिमाद्यैश्वर्यं वीर्यं यशः, श्रीः, ज्ञानं, वैराग्यं चेति षड् ईश्वरीयविभूतयः भग इति कथ्यन्ते । षडैश्वर्यसम्पन्नः ईश्वरःभगवान् शब्दवाच्यः । तद्यथा विष्णुपुराणे–

**ज्ञानं शक्तिर्बलैश्वर्यं वीर्यं तेजांस्यशेषतः ।**
**भगवच्छब्दवाच्यानि विना हेयैर्गुणादिभिः ।।**[१]

तथा च – **उत्पत्तिं प्रलयं चैव प्राणिनामगतिं गतिम् ।**
**वेत्ति विद्यामविद्याञ्च स वाच्यो भगवानिति ।।**[२]

पुराणेषु निर्गुणं निर्द्धर्मकं विशुद्धं ज्ञानात्मकं परतत्त्वं ब्रह्मेति शब्द्यते । अन्तर्यामित्वमयमायाशक्तिप्रचुरचिच्छक्तिविशिष्टं परमात्मेति, तथा च परिपूर्णं सर्वशक्तिविशिष्टं सगुणं ब्रह्मभगवानिति कथ्यते ।

एकमेव ज्ञानात्मकं परतत्त्वं ज्ञाने नब्रह्म, योगेन परमात्मा तथा च भक्त्या भगवद्रूपेण प्रतीयते । वस्तुतः ब्रह्म परमात्मा भवगवानिति शब्देषु कोऽपि भेदो नास्ति । अस्य दृष्टान्तो यथा माघकाव्ये –

**यस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम् ।**
**विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यवबोधि सः ।।**

परतत्त्वस्य ब्रह्मणः स्वरूपमीमांसादृष्ट्या सर्वाणि पुराणानि एकस्यैव परमतत्त्वस्य प्रतिपादनं कुर्वन्ति । ब्रह्म-विष्णु-महेश्वराणां नामरूपादीनां भेदे सत्यपि तत्त्वतः ते एकस्यैव परब्रह्मणःनामान्तराणि रूपान्तराणि च सन्ति । परन्तु तत्त्वम् एकमेवास्ति । तच्च तत्त्वं शैवपुराणानुसारेण भगवान् सदाशिवः शाक्तपुराणानुसारेण महामाया देवीभगवता तथा च वैष्णवपुराणानुसारेण भगवान् विष्णुरेवास्ति । पुराणप्रतिपादिताःब्रह्मविष्णुमहेश्वराःपरब्रह्मणः सगुणसाकारमूर्तयः सन्ति ।

तद्यथा– **ब्रह्माविष्णुस्तथा रुद्रो महेशानःसदाशिवः ।**
**मूर्त्तयस्तस्य विज्ञेया याभिर्विश्वमिदं ततम् ।।**[३]

एकस्यैव ब्रह्मणः पुराणेषु भिन्ननामरूपादिभिः एतादृशमुपस्थापनं केवलमुपासकानां रुच्यनुसारेण तथा उपासनायाः सौविध्यानुसारं कल्पित विद्यते । पुराणानुसारेण ब्रह्मणः स्वरूपं सच्चिदानन्दमयमस्ति । "सत् शब्दःअसत्निवर्त्तकः । "चित्ह्ल शब्दःजगतःनिवर्तकः । त्रिलिङ्गवर्ती "सत्शब्दःपुरुषस्य कृते प्रयुक्तः । पुनश्च सत्शब्दःप्रकाशवाचकः । अतःशैवपुराणानामनुसारेण प्रकाशमयः परब्रह्मशिवाभिधः । ज्ञानस्य वाचकः "चिद्शब्दः स्त्रीलिङ्गे प्रयुक्तः । सत् (शिवः) तथा चित् (शक्तिः) अनयोः संयोगात् आनन्दः । अतःपरब्रह्मशिवःअसत्निवर्तकःसच्चिदानन्दस्वरूपोऽस्ति ।

शाक्तपुराणानामनुसारेण देवी एवापरमं तत्त्वमस्ति, यैव निर्गुणा, नित्या, सर्वव्यापिका, कल्याणमयी, योगगम्या जाग्रत्स्वप्नसुषुप्तिभ्यः परायां तुरीयावस्थायां विराजते । सृष्टिकार्यार्थं परब्रह्मस्वरूपा सा नित्या सनातनी सगुणरूपं धत्ते । सर्गादौ तस्याः तिस्रः शक्तयः लक्ष्मी-सरस्वती-कालीरूपेण प्रकटी भवन्ति । तत्र रचनायै रजगुणशक्तेः पालनाय सत्त्वगुणशक्तेःतथा संहाराय च तमोगुणशक्तेरावश्यकता भवति । अनयैव दृष्ट्यासरस्वत्याः ब्रह्मणा सह, लक्ष्म्याः विष्णुना साकं, काल्याश्च शिवेन सार्द्धं सम्बन्धो भवति । अनयैव च दृष्ट्या शाक्तपुराणेषु ब्रह्मविष्णुमहेश्वराः निर्गुणायाः मूलतत्त्वस्वरूपिण्याः देव्याः सगुणमूर्त्तिरूपेण वर्णिताः सन्ति ।

वैष्णवदर्शनस्योपजीव्यभूतेषु श्रीमद्भागवतविष्णवादिवैष्णवपुराणेषु विष्णुरेव परब्रह्मेति प्रतिपादिता वर्तते । उपनिषत्प्रतिपादितं ज्ञानात्मकं ब्रह्म पुराणेषु निर्गुण-निर्द्धर्मक-निराकारस्वरूपेण सह सगुण-साकार-सधर्मकरूपमपि विभर्ति ।

वैष्णवपुराणेषु निर्गुण निर्द्धर्मकं निर्विशेषं विशुद्धं ज्ञानात्मकं परतत्त्व ब्रह्मवासुदेवः इति शब्द्यते । सर्गकाले तद् ज्ञानात्मकं निर्गुणं ब्रह्म आत्मसृष्टैः पञ्चभूतैः ब्रह्माण्डं विरचय्य तस्मिन् स्वांशेन विष्टः सन् पुरुषाभिधानमवाप । तद्यथा श्रीमद्भागवते –

**भूतैर्यदा पञ्चभिरात्मसृष्टैःपुरं विराजं विरचय्य तस्मिन् ।**
**स्वांशेन विष्टः पुरुषाभिधानमवाप नारायण आदिदेवः ।।**[४]

व्यक्तस्वरूपोऽयं सर्वव्यापी पुरुषस्तदा "विष्णुः इति कथ्यते । त्रिगुणातीतत्वात् महत्त्वात् च सोऽपि पुराणे "महाविष्णुः इति उच्यते । स एव महतःस्रष्टा प्रकृतिप्रवर्तकः कारणार्णवशायी महाविष्णुःसमष्टिब्रह्माण्डस्यान्तर्यामिरूपेण आद्यःमहापुरुषावतारोऽस्ति । तद्यथा श्रीमद्भागवते -

**स एष आद्यःपुरुषःकल्पे कल्पे सृजत्यजः ।**
**आत्मन्यात्मनात्मानं स संयच्छति पाति च ।।**

आद्यपुरुषावतारेण प्रवर्तिता प्रकृतिः अहंकारपञ्चतन्मात्रैकादशेन्द्रियैः व्यष्टिब्रह्माण्डं विरचयति । अस्मिन् विराड् व्यष्टिब्रह्माण्डे गर्भोदशायी विष्णुः अन्तर्यामिरूपेणाधितिष्ठति । व्यष्टिब्रह्माण्ड-स्यान्तर्यामिरूपेण अयं तस्यादिदेवस्य द्वितीयपुरुषावतारः । तस्य नाभिह्रदात् जीवानामाधिष्ठानरूपं पद्ममाविर्भवति । तस्मात्पद्माद् ब्रह्माऽऽविर्भूय सृजति । ब्रह्मणारचितेषु सर्वभूतेषु स एव आदिदेवः अन्तर्यामिपुरुषरूपेणाधितिष्ठति । क्षीरोदशायी अयमेव जीवान्तर्यामी तस्य ब्रह्मणः तृतीयपुरुषावतारः ।

तथा च विष्ण्वादिवैष्णवपुराणेषु वर्णितं यत् सृष्टिकर्मणि कदाचित् आवश्यकतानुसारं परंब्रह्म आत्मानं चतुर्द्धा विभज्य सृष्ट्यादीन् करोति । तद्यथा – **व्यूहात्मानं चतुर्द्धा वै वासुदेवादिमूर्त्तिभिः ।**
**सृष्ट्यादीन् प्रकरोत्येष विश्रुतात्मा जनार्दनः ।।**

तथा चोक्तं मार्कण्डेयपुराणे –

**मूलकारणं वासुदेवाख्यं व्यूहमुख्योक्तम् ।**
**द्वितीया पृथिवींमूर्द्धाशेषाख्या धारयत्यधः ।।**
**तामसीसा समाख्याता तिर्य्यग्त्वे समुपाश्रिता ।**
**तृतीया कर्मकुरुते प्रजापालनतत्परा ।**
**सत्त्वोद्रिक्ता तु सा ज्ञेया धर्मसंस्थानकारिणी ।।**
**चतुर्थी जलमध्यस्था सा शेते पन्नगतल्पगा ।**
**राजस्यास्तद्गुणःसर्गसाकरोति सदैव हि ।।**[५]

वैष्णवतिलके श्रीमद्भागवते वासुदेवाख्यनिर्गुणब्रह्मणः वैवश्वतमन्वन्तरे अष्टाविंशतितमे द्वापरे श्रीकृष्णरूपेण धरावतरणं वर्णितमस्ति । स च सच्चिदानन्दमयः परिपूर्णतमः श्रीकृष्णः स्वयं परब्रह्मवासुदेव इति स्वीकृतोऽस्ति श्रीमद्भागवतादिषु वैष्णवपुराणेषु ।

षडैश्वर्यसम्पन्नः कन्दर्पकोटिलावण्यः पूर्णानन्दमयः पूर्णज्ञानात्मकःसच्चिदानन्दमयः, परिपूर्णरूपः वासुदेवःश्रीकृष्णे हि स्वयं भगवानिति श्रीमद्भागवतादिषु पुराणेषु बहुचर्चितः ।

**ज्ञानं विशुद्धं परमार्थमेकमनन्तरं स्व बहि ब्रह्म सत्यम् ।**
**प्रत्यक् प्रशान्तं भगवच्छब्दसंज्ञं यत् वासुदेवं कवयो वदन्ति ।**[६]

तथा च – **एष वै भगवान् साक्षादाद्यो नारायणः पुमान् ।**
**मोहयन् मायया लोकं गूढश्चरति वृष्णिषु ।।**[७]

तथा च – **एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ।**[८]

तथा च – **परिपूर्णतमं ब्रह्मगोविन्दो गरुडध्वजः ।**[९]

श्रीमद्भागवतानुसारेण श्रीकृष्णनामामहापुरुष कलानियमेन श्रीरामादिमूर्त्तिषु तिष्ठन भुवनेषु विविधरूपेणावतरति । पुन: अष्टाविंशतिद्वापरान्ते स्वयं भगवान् श्रीकृष्ण: पूर्णरूपेण आत्मानमप्रकटयत् ।[१०] पद्मपुराणे वल्लवीकान्त: श्रीकृष्ण: देवताप्रोक्ताऽस्ति । भविष्यपुराणं श्रीकृष्णस्य विलासमयं स्वरूपं प्राकटयत् । श्रीराधा च निराकारस्य ब्रह्मण: विलासीनीशक्तिरुक्ताऽस्ति ।[११] भगवान् श्रीकृष्ण: न केवलं पुराणमूर्द्धन्यै: श्रीमद्भागवतादिभि: महापुराणै: परब्रह्मरूपेण कीर्तित: वेदोपनिषत्सु च तस्य भगवत्त्वं सुस्वीकृतम् । वैदिकवाङ्मये श्रीकृष्णकथायां वर्णितानां बहूनां पात्राणामुल्लेखो यत्र तत्रावाप्यते । यथा– गो-गोप-व्रज-वृषभानु-राधा-रोहिणी-कृष्णार्जुनादीनां लीलासम्बन्धिन: शब्दा अपि वेदेषु समुपलभ्यन्ते । अत: श्रीकृष्णलीलाया: बीजं वेदमन्त्रेभ्यो गृहीतमिति निश्चप्रचम् ।

**त्वं नृ चक्ष्वा वृषभानुपूत्रीकृष्णस्वग्ने अरुणो विभाहि ।।** [१२]

तथैव - **विष्णुर्गोपापरमं पातिपाथ:, प्रिया धामान्यमृता दधान** [१३] इति मन्त्रे गोपरूपस्य विष्णोर्वर्णनप्रसङ्गे गोपरूपधारिणो भगवत: श्रीकृष्णस्य चर्चाविहिता विद्यते । ता वां वस्तुन् मुरमगमध्यै यत्र गावोभूरिशृङ्गा आयास: इति मन्त्र: सायणेन कृष्णकथापरत्वेन व्याख्यात: ।[१४] यास्केनापि निरूक्ते तदुरुगायस्य विष्णोर्महामते: परमं पदं परार्ध्यस्य मवभातिभूरि इत्युक्तम्।

श्रुतौ पृथिवीकृष्णाप्रोक्ताऽस्ति । सूर्यमण्डलमपि कृष्ण: कथितोऽस्ति। निरुक्तमपि – त्रीन् पृथिवी-सूय–चन्द्रमस: कृष्णान्मनुते । शतपथे यज्ञोऽपि कृष्ण एव प्रोक्तो विद्यते ।

गोपालपूर्वतापिन्युपनिषदि भगवान्श्रीकृष्ण: परमदेवता:गोपीजनबल्लभादिभि: विशेषणै: विभूष्यते । ब्रह्मसंहितानुसारं कोटि-कोटिब्रह्मण: क्षित्यादिपृथग्भूतेषु योऽधितिष्ठति तस्य निष्कलानन्तांश-स्वरूपस्य ब्रह्मण: गोविन्दस्य या प्रभावशालिनीप्रभाऽस्ति तां वयं आराधयाम इति लिखितं वर्त्तते । श्रीचैतन्यचरितामृते गौरसुन्दरेणोक्तम्–कृष्णमाधुर्य्यै: एकस्वाभाविकबल:। **कृष्ण आदिनरनारी करये चञ्चल ।।**

**कृष्णावलोकन विना नेत्रे फल नाइ आन ।**

**येइ जन कृष्ण देखे सेइ भाग्यवान् ।।**

कृष्णकर्णामृते विल्वमङ्गलेनोक्तम् –

**सन्त्ववतारा: बहव: पुष्करनाभस्य सर्वतो भद्रा: ।**

**कृष्णादन्य: कोवालतास्वपि प्रेमदो भवेत् ।।**

भगवान्श्रीकृष्ण: निर्देशभावरहित: प्रकृते: पर: निर्गुण: ब्रह्मैव । केचित् तं कर्मरूपमिति वदन्ति । योगेश्वरा: तं महापुरुषरूपेण, भक्तास्तं सगुणब्रह्मरूपेण च वर्णयन्ति । पुरा मुनय: तं योगरूपेण वर्णितवन्त: । केषांचित् मतानुसारेण स एव जगत: कर्त्ता । एवं प्रकारकै: विभिन्नै: स्तुतिवाक्यै: यो बोधगम्यो भवति, योऽशेषसाक्षी सर्वभूतहृदयेषु विराजमान: स परमेश्वर एव भगवान् श्रीकृष्ण: नान्य: इति श्रीमद्भागवतादिनाम्पुराणानां दृढाभिमतम् ।इति शम्।

**–पादटीका -**

१.वि.पु.६-५-७९। २. वि.पु.६-५-७८ । ३. शि.पु.वा.सं., उ.भा.३/२२ ।
४. भा.११.४.३ । ५.मा.पु.५.४६-५१ ६. भा.पु.१/२/११ ।
७.श्री.भा.१/१/१५ । ८. भा. १/२/२८ । ९. ब्र.वै.कृ.ज.ख.१३/७८ ।
१०.श्री.भा.– १०/२/४० । ११. भ.पु.प्र.प.१/२५६ । १२. ऋ.सं.३/१५/३
१३. ऋ.सं ३/५५/६ । १४. ऋ.सं ११/१५१/६ ।

पुराणेतिहासविभागमुख्या
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी



# वैशेषिकदर्शनस्य मूलतत्त्वम्

प्रो. ललितकुमारसाहुः

महर्षिकणादो वैशेषिकदर्शनस्य रचयिता । दर्शनमिदं दशभिरध्यायैः विभक्तं, प्रत्येकम् अध्याये आह्निकद्वयं विद्यते । अस्य दर्शनस्य सूत्रसंख्या ३१७ । प्रशस्तपादभाष्यमस्य दर्शनस्य प्राचीनटीका । चतुर्थसूत्रे उक्तं - 'तत्त्वज्ञानान्निःश्रेयसम्' - अथात् द्रव्यगुणकर्मसामान्यविशेषसमवायादिषट्पदार्थानां समानताया विभेदतायाश्च तत्त्वज्ञानात् मोक्षप्राप्तिर्भवति । अस्मिन् दर्शने जगद्वस्तुवादिदृष्टिकोणाद् वर्णितं प्रत्येकं वस्तुनो विभाजनानन्तरं सृष्टान्तिमपरमाणूनां विशेषत्वं नीत्वा वस्तूनां भिन्नता परिलक्ष्यते । वैशेषिकदर्शनं वस्तुनः विशेषतायाः निर्णये साहाय्यं करोति । वेदेषु उपनिषत्सु च विश्वस्य सकलवस्तुनः एकमन्तर्निहितमैक्यमस्तीति स्वीक्रियते । अस्मिन् दर्शने वस्तुनो भिन्नताविषये वर्णितत्वात् शास्त्रमिदं वेदविरोधीति कैश्चिद्भाष्यकारैः प्रदर्शितम् । परन्तु अस्मिन् दर्शने वस्तुनो भिन्नतामध्ये एकताया अवलोकनस्योद्यमत्वाद् इदं शास्त्रं वेदपरिपन्थीति कथनस्य तात्पर्यमस्ति । द्वयोः पदार्थयोर्मध्ये साधर्म्यवैधर्म्योरुदाहरणपुरःसरं कथितं यद् गौरश्वश्चोभौ चतुष्पदत्वाद् उभौ साधर्म्यौ, किन्तु उभयोर्मध्ये नैका भिन्नता विद्यन्ते । ब्रह्म जीवश्चोभे चेतने, एषः समनतायाः प्रतीकः । परन्तु ब्रह्म सर्वज्ञम्, जीवः अल्पज्ञः - एषः द्वयोः वस्तुनोः विभेदतायाः प्रतीकः । प्रत्येकं कारणस्य गुणावली कार्ये परिदृश्यते, एषः वैशेषिकदर्शनस्य महत्त्वपूर्णः, सिद्धान्तः । वैशेषिकदर्शनस्य मुख्यमुद्देश्यं यद्धर्माचरणेन आत्मा बन्धनान्मुच्यते । धर्मस्वरूपं वर्णयित्वा ग्रन्थेऽस्मिन्नुक्तं यत् - येन यथार्थज्ञानप्राप्त्या मोक्षसिद्धिर्भवति स धर्मः अद्भूतः । तदर्थं द्वितीयसूत्रे उक्तं 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' । वैशेषिकदर्शनं वदति यत् यावत्पर्यन्तं षट्पदार्थसम्बन्धे यथार्थज्ञानं न भवति तावत्पर्यन्तं मोक्षप्राप्तिरसम्भवा । ते षट्पदार्थाः - द्रव्य-गुण-कर्म-सामान्य-विशेष-समवायाः । अस्मिन् दर्शने द्रव्यगुणकर्मणामुपरि सविशेषध्यानं प्रदत्तं सविस्तरव्याख्यानमपि कृतम् । अन्ये त्रयः पदार्थाः - सामान्य - विशेष - समवायाः केवलं भावीरूपाः सन्ति; ये बुद्धेरुत्पन्नाः । द्रव्यं नवविधम् । तानि - पृथ्वी, जलम्, अग्निः, वायुः, आकाशं, कालः, दिक्, आत्मा मनश्च । द्रव्येषु चतुर्विंशतिगुणाः दृश्यन्ते । गुणः स्वतन्त्रः नास्ति यतः एष द्रव्याश्रये तिष्ठति । गुणेन द्रव्यक्रियाः संपादिता भवन्ति । इत्थमेकस्य द्रव्यस्य नैके गुणास्तिष्ठन्ति । व्यापकताहेतोः द्रव्यस्य चतुर्विंशतिगुणाः त्रिभिः भागैः संविभक्ताः । रूप-रस-गन्ध-स्पर्श-शब्दादिगुणा इन्द्रियसम्बन्धिताः, संख्या - परिमाण - पृथकत्व - संयोग- विभाग - दूरता - निकटता - गुरुत्व - द्रवत्व - स्नेहादयः गुर्णा द्रव्यम्बन्धिताः, विशेषता - बुद्धि - सुख-दुःखेच्छा - द्वेष - प्रयत्न - धर्माधर्म - संस्कारादयो मनस्सम्बन्धिताः भवन्ति । गुणः द्रव्यस्य स्वाभाविकः धर्मः, अत एषः सदैव द्रव्ये विद्यमानः । द्रव्ये गुणमन्तरेण कर्मणोऽपि अस्तित्वं विद्यते । प्रयत्नेन द्रव्ये कर्म कियत्कालपर्यन्तमवलोक्यते । कर्म पञ्चविधम् - उत्क्षेपणम्, अवक्षेपणम्, आकुञ्चनं, प्रसारणं दमनञ्चेति । आत्मनः मनसश्च प्रेरणया द्रव्ये कर्मोत्पद्यते । कर्मणे ज्ञानसंकल्पयोरावश्यकता तिष्ठति । द्रव्य - गुण - कर्माणि इन्द्रियाणां विषयत्वात्तानि दृश्यानि अनुभव्यानि च । परन्तु सामान्यविशेषौ बुद्ध्या संबन्धितौ । अनयोः सहायतया पदार्थस्य समानताया असमानतायाश्चाधारेण वर्गीकरणपूर्वकं पदार्थः भिन्नश्रेण्यां विभक्तः । सामान्यस्यार्थः साधारणोऽस्य विपरितो भवति विशेषः । विशेषस्य अनुसंधानेन क्षुद्रात्क्षुद्रतमपरमाणोः सन्धानं मिलति । पदार्थद्वयस्य संयोगो नित्यो भवति चेत्सः समवायः कथ्यते । उदाहरणार्थं ईश्वरजीवावुभौ चेतनौ - एतत्सामान्यम् । ईश्वरः सच्चिदानन्दत्वात् एष गुणः विशेषः कथितः । आत्मपरमात्मनोः स्थायिमिलनं समवायः कथ्यते, यश्च योगदर्शने समाधिरुच्यते ।

वैशेषिकदर्शनं वेदवचनं प्रमाणत्वेन स्वीकरोति तथेश्वरस्यास्तित्वस्य मान्यतां प्रददाति । ग्रन्थोऽयं कर्मसिद्धान्तस्योपरि विश्वसिति । मानवः स्वकृतकर्मणः भोक्ता । कर्मणः बीजं द्विफालसदृशं, एकः संस्कारोऽन्यश्च भोगः । इत्रेदं दर्शनं दाने प्रतिग्रहे च विश्वासं करोति । निःस्वार्थदानं श्रद्धापूर्वकं सत्पात्रय दद्यात् । दानग्रहणकारी योग्यताभावे दानं न गृह्णीयात् ।

अनेन दानग्रहीतुः पापं स्यात् । दानेन यद्दीयते तत् शतगुणितं भूत्वा भविष्यति मिलति ।

वैशेषिकदर्शनं परमाणुवादं प्रतिपादयति । परमाणुः नित्यः इति मतप्रदानकारिणा सांख्यदर्शनेन सहास्य मतभेदो दृश्यते । मीमांसका वैशेषिकदर्शनं नास्तिकदर्शनमिति कथयन्ति । न्यायदर्शने वर्णितपरमाणुतत्त्वेन सह दर्शनस्यास्य सामञ्जस्यं मिलति । परमाणुतत्त्वाधारेण दर्शनेऽस्मिन् सृष्टिविज्ञानस्य याथार्थ्यं वर्णितम् । महर्षिकणादस्य मतानुसारं सर्वस्य जगतः सृष्टिः परमाणुना जाता । परमाणुः चतुर्विधः-क्षितिः, आपः, तेजः मरुच्च । आकाशं पारमाणविकं भवति । प्रत्येकं परमाणुः विशेषः तस्य स्थितिश्च स्वतन्त्रा । परमाणुषु गुणगतं परिमाणगतञ्च पार्थक्यमस्ति । परमाणोः गुणो नित्यः । परमाणवः स्वभावतो निष्क्रियाः, परन्तु बाह्यशक्त्या इमे गतिशीला भवन्ति ।

यदा परमाणुः परस्परात् पृथगवस्थायां तिष्ठति तदा प्रलयावस्था सृज्यते । यदा ते परस्परसहिता मिलिताः सन्तः भिन्नप्रकारं रूपं नाम च सृजन्ति, तदा जगत आविर्भावो भवति । ईश्वरस्य संहारेच्छया प्रलयसमये परमाणूनां संघर्षेण शरीरमिन्द्रियञ्च विनश्यति । परिशेषे केवलं चतुर्विधाः परमाणवः तिष्ठन्ति, ये सृष्टिरचनायां सहायका भवन्ति । वैशेषिकदर्शनं गौतमस्य न्यायदर्शनात् प्राचीनतमम् । महर्षिकणादरचितं वैशेषिकसूत्रं प्रथमः ग्रन्थः। अस्यैव ग्रन्थस्य कृते परवर्तिकाले उदयन-श्रीधर-शङ्करमिश्रैः टीकाः प्रस्तुताः ।

इत्थं वैशेषिकदर्शनस्य महत्त्वं वैशेषिकदर्शनेतिहासाधारेण प्रस्तुतं यत् दर्शनच्छात्राणामुपकाराय कल्प्यते ।

**अनुशीलितग्रन्थाः -**

१) न्यायवैशेषिकदर्शनेतिहासः
२) तर्कसंग्रहः ।
३) तर्कभाषा ।
४) वैशेषिकसूत्रोपसंस्कारः
५) प्रशस्तपादभाष्यम्
६) वैशेषिकसूत्रम्

धर्मशास्त्रविभागमुख्यः
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरा



## किं श्रीहर्षो मिथिलानिवासी ?

**अशोकोपनामक झोपाह्वोदयनाथोपाध्यायशर्म्मा**

सुविदितमेवैतत्संस्कृतसाहित्यपाथोनिधिकृतावगाहानां विद्वद्वरेण्यानां यदखिलभुवनमण्डलमण्डनायमानं भारतवर्षमिदं पुरा सुचिरमलमकार्षुः अनेके महनीयकीर्त्तयः पण्डितप्रकाण्डाः कवीन्द्राः स्वजनुषा । तेष्वेवान्यतमोऽयं विद्वच्चक्रचूडामणिः कवितार्किकसार्वभौमः लोकोत्तरप्रतिभासम्पन्नः श्रीमान्श्रीहर्षमहाभागः । केचन कविममुं मैथिलब्राह्मणं साधयितुमुत्सहन्तेऽपरे च कान्यकुब्जमिति । उपन्यस्यन्ति चानेकान् हेतूनुभयत्र च स्वस्वपक्षमुपपादयितुम् । परन्तु स खलु ब्राह्मणरिति नितरामपेतसन्देहम्, यस्य च खलु कर्मक्षेत्राणि गौडकाशीकान्यकुब्जनगराण्यासन् । श्रीहर्षस्य पिता श्रीहीरः माता च मामल्लदेवी आस्तामिति तस्यैवकृत वर्णनेनावगम्यते, यथा–

**'श्रीहर्षः कविराजराजिमुकुटालङ्कारहीरः सुतम्,**
**श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम् ।'** (नै.च. - १/१४५) इति

बाल्यकाल एव दैवदुर्योगवशादस्य जनकः श्रीहीरोऽकाल एव दिविलोकपथिको सञ्जातः । अनन्तरमस्य शिशोः जननी सुतवात्सल्यवशंवदा विदुषी मामल्लदेवी कुलपरम्परामनुपालयन्ती बालकममुं धर्मधियोपलालयन्ती अतिप्रेम्णा परिपालयामास।

श्रूयते च कवेरस्य जनको विद्वन्मूर्धन्यः श्रीहीराख्यः गहडवालवंशोद्भवस्य काशीराजगोविन्दचन्द्रात्मजस्य श्रीविजयचन्द्रस्य राजसभायां प्रधानपण्डितपदमलम -कार्षीदिति । स चैकदा तदानीन्तनेन नैयायिकसार्वभौमेनोदयनाचार्येण एकस्मिन्न्यायविषके वादाहवे पराजितः । इयञ्च कथा चाण्डूपण्डितस्य नैषधटीकाया आरम्भ एवोपश्लोकिता –'प्रथमं तावत्कविजिगीषुकथायां स्वपितृपरिभावकमुदयनमत्यमर्षणतया कटाक्षयंस्तद् ग्रन्थग्रन्थीनुद्ग्रन्थयितुं खण्डनं प्रारिप्सुश्चचतुर्विधपुरुषार्थैरभिमानवधीर्य मानसमेकतानतां निनाय ।' तत्पराजयावसादावसन्नहृदयो हीरः पञ्चवर्षीयं बालकं श्रीहर्षं परित्यज्य दिवं जगाम । अनन्तरञ्च भर्तृवियोगवह्निना दग्धहृदयापि शिशोरस्य जननी जगदिदं शून्यमरण्यमिवाक -लयन्त्यपि कुलपरम्परामनुपालयन्ती सुतवात्सल्यवशंवदा वत्समम्मुं धर्मधियोपलालयन्ती अतिप्रेम्णा परिपालयामास ।

विदुषा हीरेण 'गीतपशुपति'रिति नामकमेकं एकादशसर्गात्मकं रागकाव्यं प्रणीतमासीत्, यत्र स्वपितुर्महामहो -पाध्यायस्य श्रीधीरमिश्रस्याऽनेकधा प्रयोगः कृतः । तद्यथा –

**'श्रीमन्मैथिल-धीरजेन कविना हीरेण पर्णापुरे,**
**धीरोत्साहि-मनः प्रमोदकरणं हीरे(कुब्जे)श्वरप्रीतये ।**
**माहात्म्यं गिरिजा-गिरीशपदयोर्गीतं मिथः प्रीतयो-**
**र्भक्तानामनिशं तनोतु सुधियामानन्दकन्दं मुदम् ।।'**

अत्रैव कविनामुना स्वकीयाग्रहारस्य पर्णापुराख्यस्यापि उल्लेखः कृतः, अपरत्र मातुर्नाम धीरमती आसीदित्यस्य चर्चा विहिता, यथा –

**'धीरमतिधीरसुत हीरकवि-भाषितं जगति शृणु परमरमणीयम् ।**
**आधिहृदयमति सदयमिति कलय सरसभवविषयरुचि सततकमनीयम् ।।'**

पद्येऽस्मिन् प्रयुक्तं पदं 'धीरमति'रिति पितुर्धीरस्य विशेषणं तस्य वा कान्ताख्या आसीदितीदमित्थन्तया न वक्तुं शक्नोमि, प्रायशो कान्तानाम एव स्यादित्यनुमीयते । तथैव हीरोऽयं श्रीहर्षस्य पिता अन्यो वेति वक्तुमशक्यमेव । यद्यप्यनुमातुमिदं शक्यते यदयं तस्मादभिन्न एव स्यात् ।

स्वकीये गीतिकाव्येऽनेन या भणिता विहिता तया हीरस्य कविवरत्वं सूचितम्भवति –

**'सुविनत-हीरकवेरित-गीतमतीव कलयतु मुदमिह हैमवतीव ।**
**शङ्कर ! धृत-सकल-सुरूप! जय भुवनेश! विभो ।।'** .......
**'कविवर-हीर-भणितमतिसुन्दर-गिरितनयापति-रूपम्'** ......
**'सुखयतु हीर-भणितमिति ललितम्, नववनिता-रति-पशुपति-चरितम् ।'** .....
**'हीर-भणितमिति ललित-मनोहर-खण्डित-युवति-विलापम् ।**
**शृणुत मनागिति नाग-गणाधिप-भूषण-विषयमपापम् ।।'** ......

प्रायशोऽयं दार्शनिको भूत्वापि गच्छति काले काव्यरचनायां पादार्पणं कृतवानासीत्, यस्मात्कारणादनेन स्वात्मकृते 'नवकवि' इति पदस्य व्यवहारः कृतः –

**'नवकवि-हीर-भणितमिति विलसतु नव-रमणी हृदि रूढम् ।**
**नव-वनिता नवरस-भर-शङ्कर! सत्वर-वचनमगूढम् ।।'**
**'नवकवि-हरि-भणितमिति भावय, पावनमपि रमणीयम् ।**
**गिरितनया-चलनावसरे तु सखी-कथितं कमनीयम् ।।'**
**'नव-कविहीर-यशःपरिपालय, बाल-कलाकर-मण्डने ।**
**निज-शिरसीह वशीव हि धारय, मामव दुर्जन-खण्डने ।।'**

न चास्य गीतिरेव मनोहारी भवति, पद्यान्यपि कवेः हीरस्य अत्यद्भुतानि भवन्ति, तद्यथा मङ्गलपद्यम्–

**'शरशंखशरासन-चक्रचकासन-चारुचतुष्टय-बाहुमती,**

**मधुरध्वनि-कुण्ठीकृत-कलकण्ठी-कण्ठीरवगमना भवती ।**
**जयलोचन-सङ्केतित-जगदङ्के पङ्केरुहमुखि-सुखितभवे,**
**नव कज्जलवेषे धृतविधुलेखे महिषमतङ्गजसिंहि शिवे ।।'**

अपि च यथा –

**'गङ्गा-सङ्ग-पिशङ्ग-सङ्गत-जटाजूटो ललाटोज्ज्वलन्,**
**नेत्रप्रान्त-नितान्त-वह्नि-शमितामित्रः स्मरारिः परः ।**
**राजद्राजत-पर्वतायततनु-प्रोद्भासिताशा-चयः,**
**पायाद्वः परणापुरे प्रविदितो हीरेश्वरः शङ्करः ।।'**

प्रसिद्धेन जनरवानुसारेण यद्यपि श्रीहर्षस्य पितुर्हीरस्य आश्रयदाता गढवालवंशीयः राजा विजयचन्द्रः आसीत्, परन्तु अनेन हीरेण स्वग्रन्थस्य चतुर्थे सर्गे काशीपतेः गोविन्दचन्द्रस्योल्लेखः कृतः – 'सत्पृथ्वीपति-राज-राजमुकुट-स्तब्धाङ्घ्रि काशीपतेः ......' एवञ्चान्यसर्गेऽपि यथा – '..... **पायाद्वः परितोषितः प्रतिदिनं गोविन्दचन्द्रः प्रभो** .....।' अयमेव गोविन्दचन्द्रः आसीद्विजयचन्द्रस्य पिता जयचन्द्रस्य च पितामहरिति ऐतिहासिका वदन्ति ।

संस्कृतशास्त्राम्बरेषु विद्यमानेष्वपि नैकेषु हर्षश्रीहर्षनामधारिषु संख्यावत्सु अन्यतमोऽस्ति नैषधीयचरितकारः खण्डनखण्डखाद्यादिग्रन्थप्रणेता कवितार्किकचक्रचूड़ामणिः श्रीहर्षः । संस्कृतसाहित्यं भवतु दर्शनशास्त्रं वा, किंवा संस्कृतजगदेव कथं न स्यात्सर्वत्र खलु श्रीहर्षस्य ख्यातिरद्यत्वेऽपि सर्वथाऽक्षुण्णा वरीवर्ति।

**गच्छतिकाले यदा वाग्देवताराधनलब्धप्रसादप्रकर्षो** (नै.च.- १४/९०)

श्रीहर्षो भूभुजोर्पितुराश्रयदातुर्विजयचन्द्रस्य राजसभायाङ्गतस्तदा राजस्तुतिनिरूपकं पद्यमिदं पपाठेति श्रूयते –

**'गोविन्दनन्दनतया च वपुःश्रिया च मास्मिन्नृपे कुरुत कामधियं तरुण्यः ।**
**अस्त्रीकरोति जगतां विजये स्मरः स्त्रीरस्त्रीजनः पुनरनेन विधीयते स्त्री ।।'**

चमत्कारपूर्णार्थविमर्शकं विचित्रपदविन्यासयुक्तमिदं पद्यमाकर्ण्य तत्रोपस्थिताः सराजराजसभ्याः कविममुमतितरां प्रशशंस । पुनश्चानेन पितुर्जेता-उदयनं वीक्ष्य स्वगर्वोक्तिरपि कृता –

**'साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले ,**
**तर्के वा मयि संविधातरि समं लीलायते भारती ।**
**शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता,**
**भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ।।'**

गच्छता कालेन सभायाञ्चाऽयं सर्वाधिकलब्धप्रतिष्ठो विद्वज्जनगोष्ठीगरिष्ठो वरिष्ठश्च सञ्जातः ।

श्रीहर्षस्य रचनाऽतीव मधुरा, कोमलो वाक्यविन्यासः, सुदृढश्च काव्यबन्धः प्रबन्धः । बहवो हि ग्रन्था अतिगभीरार्थया गिरा अनेन संग्रथिताः । रचनावैपुल्यदृशाऽसौ नितरामितरसर्वाग्रगण्यत्वेन सुप्रसिद्धः । यद्यपि तेषु ग्रन्थेष्वर्णववर्णनं-शिवशक्तिसिद्धिः-साहसाङ्कचम्पू-छन्दःप्रशस्तिः-विजयप्रशस्तिः-गौर्वीशकुलप्रशस्तिः-ईश्वराभिसन्धिः-स्थैर्यविचारप्रकरणञ्च गीर्वाणवाण्यलङ्कारभूतान् प्रभूतान् तर्कनिबन्धान् न्यभांत्सीत्, तथापि साहित्ये नैषधीयचरितमहाकाव्यं वेदान्ते च खण्डनखण्डखाद्यं यादृशीं प्रशस्तिं यशस्विताञ्चाऽवगाहेते, न तादृशीमन्ये प्रबन्धाः । संस्कृतकाव्यप्रपञ्चे तु नैषधीयचरितमतीवोत्कृष्टतमं स्थानमधिगच्छति आविष्करोति च कवेरस्य कामपि लोकोत्तरां प्रतिभाम् । अतएव मन्यामहे वयं यत्केनापि सत्यमेवोक्तम्–

**'तावद्भा भारवेर्भाति यावन्माघस्य नोदयः ।**
**उदिते नैषधे काव्ये क्व माघः क्व च भारविः ।।'**

वस्तुतो हि खलु नैषधीयचरितन्नाम महाकाव्यं द्वाविंशतिसर्गसंग्रथितं त्रिंशत्युत्तरद्विसहस्राधिकाष्टशतमितैः पद्यैः परिगुम्फितं गीर्वाणवाग्वाङ्मयप्रसरे सुभृशं भासुरत्वेन विराजते कामप्युच्चतमां कोटिमाटीकमानम् । स च एष न केवलमुद्दामवाक्कविरेवासीदपि तु सर्वशास्त्रपारङ्गतः विशिष्यन्यायवेदान्तादिशास्त्र -धुरीणोऽप्यासीत् , यस्य खलु

सर्वाङ्गीणपाण्डित्यपरिचायकं खण्डनखण्डखाद्यमेव पर्याप्तम्भवति । नूनमत्र यादृशी पदप्रयोगचातुरीसम्पन्ना श्रीहर्षकृतिषु परिस्फुटा भवति न तादृशी क्वचिदन्यत्र दृक्पथमवतरति ।अस्य काव्यप्रवाहे दार्शनिकच्छटाऽपि यत्र-तत्र, विशिष्य सप्तमेसर्गे तु समुच्छलन्तीव विलोक्यत एव । सर्वशास्त्रावगाहिबुद्धिरयं सिद्धहस्तकविस्तर्ककलायामप्यतितरां निष्णात आसीदिति नास्ति क्वचित्काचित्संशीतिः।

तथैव तर्कपाटवपटीयसि सत्यप्यस्मिन्खण्डनखण्डखाद्याभिधे ग्रन्थे कवित्वच्छटासम्पुटः सुवर्णे सुरभियोगमिवादधाति। तद्यथा ग्रन्थारम्भ एव शाक्तिं संस्तुवन्नसौ प्राह –

**'मानापनोदनविनोदनते गिरीशे भासेव सङ्कुचितयोरुचितं तदिन्दोः ।**
**भेत्तुं भवानिशचितं दुरितं भवानि नम्रीभवानि घनमङ्घ्रिसरोजयोस्ते ।।'**

शाक्तिं सम्बोध्य निगदति – हे भवानि, तवाङ्घ्रिसरोजयोः घनं निरन्तरं नम्रीभवानि अवनतः स्याम् । किं विशिष्टयोरङ्घ्रिसरोजयोः मानापनोदनविनोदनते गिरीशे, तदिन्दोः तन्मौलिचन्द्रस्य भासेव ज्योत्स्नयेव उचितं यथा स्यादेवं सङ्कुचितयोः उपजातसङ्कोचयोः प्रणिपातायोद्यते भर्त्तरि लज्जया चरणसङ्कोचस्तावदुचित एव । तत्र तदिन्दोः भासेवेत्युत्प्रेक्षा । दवीयस्यपि चन्द्रमसि सरोजसङ्कोचो नेदीयसि सुतरामित्युत्प्रेक्षोद्दीपनम् । किं कर्त्तुम् ? भवानिशचितं दुरितं भेत्तुम् । संसाराविश्रान्तसञ्चितकल्मषनिरासायेत्यर्थः । अथवाऽर्थान्तरमपि ध्वनितम्भवति । हे ब्रह्माद्वैतोपदेशक, त्वं ममानिशचितं दुरितं भेत्तुं भव प्रभव । अहं तवाङ्घ्रिसरोजयोर्नम्रीभवानि । गिरीशे – वादिनि, गिरामीशो गिरीश इति व्युत्पत्त्या गिरीशो वादी । मानापनोदनविनोदनते वादित्वाभिमानखण्डनविनम्रे सति, अहं भवानि वादिदुरितभेत्ता भवानीत्यर्थः । अर्थात् तथा तत्त्वमुपदिशामि यथा वादिजनानां दुरितं भङ्यतीति ग्रन्थकृतः स्वयं कृतां प्रत्याशंसां निर्दिशति ।

यस्य कस्यापि प्राचीनकवेर्जन्मस्थानविषये इदमित्थन्तयाऽभिधातुमैतिह्यविदोऽपि न प्रभवन्ति, का कथा अन्येषाम् । संस्कृतवाङ्मये प्रायशः सर्वेऽपि कवयः ग्रन्थकारा आचार्याः स्वजीवनविषये सर्वथैव मौनमवलम्बन्ते । अतस्तेषां परिचयविषये कालस्थानविषयोर्वा ऐतिह्यविदः सुस्पष्टमभिधातुं नैव प्रभवन्ति । अतएवाऽऽलोचकानां विदुषामपि मध्ये विमतिर्दरीदृश्यते । अथायं संस्कृतसाहित्यललामभूतस्य विश्वविख्यातस्य नैषधीयचरिताभिधस्य महाकाव्यस्य प्रणेता श्रीहर्षः देशस्यास्य कतमं जनपदमलञ्चकार स्वजन्मनेति त्वद्यापि नेदमित्थंतया विनिश्चेतुं सुशकम् । विद्यते चैवास्मिन् विषये मतवैभिन्यमितिवृत्तविदाम् । तथापि श्रीहर्षप्रणीतप्रबन्धानां सूक्ष्मेक्षणानुशीलनेन तत्पितुः श्रीहीरनामकस्य कवेश्च रचनामाधारीकृत्य भूम्नेदं तु प्रतिपत्तुं शक्यमेव यदेष महाकविः स्वजनुषा भूषयाञ्चकार भूमिजाभुवम् ।

कालिदासप्रभृतीनामिव श्रीहर्षोऽपि स्वपरिचयप्रसङ्गे स्वकीये ग्रन्थे साक्षाद्रूपेण न क्वचिदपि किमपि वक्ति । अतएवाऽत्र सर्वेपि अयमेव विदन्ति विज्ञाः यदयं महाकविः कान्यकुब्जदेशीय आसीदिति –

**'ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरात्,**
**यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम् ।**
**यत्काव्यं मधुवर्षि वर्षितपरास्तर्केषु यस्योक्तयः,**
**श्रीश्रीहर्षकवेः कृतिः कृतमुदे तस्याभ्युदीयादियम् ।।'** (नै.च.- २२/१५३) इति तद्वचनादेव चानुमीयते । प्रचलितपरम्परानुरोधेन न चाऽत्र कापि संशीतिर्यन्महाकविः श्रीहर्षः क्रैस्तद्वादशशताब्द्यां कान्यकुब्जेश्वरस्य विजयचन्द्रात्मजस्य राज्ञः जयचन्द्राभिधानस्य गुरुपदमलङ्कुर्वाणः तत्सभायां राजकविपदमध्यतिष्ठत् । किन्तु कुत्रत्योऽय-मासीदिति प्रश्नस्त्वद्याप्यनुत्तरित एव । तथापि तदुपर्युक्तवचनमुपजीव्य बहूनां विदुषां मतेषु कान्यकुब्जदेशीयोऽयमिति, अनुमीयते च प्रसङ्गान्तरेण श्रीहर्षः कश्मीरदेशोद्भवरिति । केचन कविममुं बङ्गदेशीयं साधयितुमुत्सहन्तेऽपरे केचित्काशी-पुरीवासीति ब्रुवन्ते, इतरे चोत्कलीयमपि वदन्ति उपन्यस्यन्ति च स्वस्वपक्षमुपपादयितुमनेकान् हेतून् । वयन्तु पुनरेनं मैथिलदेशीयमेव ब्रूमः (स्थिरीकुर्मः) । किन्तु कस्मिन् वेदशास्त्रसम्पन्ने भूसुराणां कुले चाऽयं लब्धजन्मा आसीदित्यत्र नास्त्यपेतसन्देहम् । अतः विशेषरूपेणात्राऽस्माभिः श्रीहर्षस्य मिथिला-प्रान्ताधिवासित्वमेव पुंखानुपुंखतया आलोच्यते ।

संस्कृतसाहित्यललामभूतोऽयं लोकोत्तरप्रतिभावान् महाकविः श्रीहर्षः कान्यकुब्जेश्वरस्य जयचन्द्रस्य राजसभाया-

मासीदितिधिया तद्देशीय एव कविरिति वक्तुं न शक्यते । स्वीयजन्मभूमिं विहाय इतरदेशीयानामवनीपतीनां सविधे तत्तद्राजसभायां कृतवसतयो नैके विद्वांस: दृश्यन्ते । तत्र द्रविड़देशीय: पण्डितराजजगन्नाथ: यवननरपते: शाहजहाँनस्य समीपेऽध्यतिष्ठत्, मिथिलादेशीय: केशवमिश्र: कवीन्द्रगङ्गानन्दश्च क्रमश: माणिक्यचन्द्रसभायां बीकानेरप्रान्तस्याधिपते: कर्णसिंहस्य सभायां चाश्रितावास्ताम् । राजस्तुतयोप्यनेकास्तेषां संस्कृतसाहित्याम्बरे विलसन्ति । उत्कलीयश्चापि जयदेव: स्वप्रान्तं विहाय बंगाधिपतेर्लक्ष्मणसेनस्य सभाकविरासीदिति विदन्त्येव विज्ञा: ।

काश्मीरदेशे श्रीहर्षस्य नैषधीयचरितस्य परीक्षा कृताऽऽसीच्छारदादेशत्वादिति, स्वकाव्यपरीक्षणार्थमेव श्रीहर्ष: तत्र जगामेति निगदन्त्यैतिहासिका: । किमितिहेतो: तद्देशोद्भव: सञ्जात: स: ? नेदं कथनं विचारसहम्, अन्यथा पाणिनिव्याडिपिङ्गलानाञ्चापि बिहारदेशीयसम्भवत्वात्, यतोहि तेषां ग्रन्थानां परीक्षा पाटलिपुत्रे सञ्जातेति कालविदां प्रामाणिकमभिमतमिति । तस्योत्कलदेशीयत्वञ्च कोऽपि निगदति, किन्तु तत्र यादृशानि प्रमाणानि स प्रस्तौति, तस्मात्तु सीताचरितवर्णनव्यधायित्वात् य: कोऽपि कविस्तैरभुक्त: सम्भवति । तथा च कविकुलगुरुणा कालिदासेन स्वकीये मेघदूते खण्डकाव्ये यन्महताडम्बरेणोज्जयिनीं प्रति पक्षपातं प्रदर्शितं न तादृशं वर्णनं कविनामुना कान्यकुब्जस्य व्यधायि । संस्कृति-सभ्यता-विशेषवर्णनादपि तत्तद्देशे उपलब्धिमात्रेणैव कवे: स्थानविशेषस्य भावित्वं न निर्णेतुं शक्यम् । यथा चैकादशतमे सर्गे एव दमयन्त्या: स्वयंवरवर्णनप्रसङ्गे तेन काशीनगरवर्णनाकारित्वात्कवि: किं काशीवासीभवितुमर्हति ?

राजशेखरेण प्रबन्धकोशाभिधेये स्वकीये ग्रन्थे श्रीहर्षस्य यद्गौडदेशीयत्वं प्रतिपादितं तद्विचारणीयम् । तत्र 'गौड' इति कथनेन बङ्गदेशस्यैव ग्रहणं कथम् ? किं वा बङ्गदेशस्य कियान् भागो गौडदेश इत्युच्यते ? अपितु सारस्वता:, कान्यकुब्जा:, बंगीया:, उत्कलीया:, मैथिलाश्च सर्वे गौड़ा एव, विन्ध्यस्योत्तरवासिन: पञ्चगौड समाख्याततत्वात् । अत: गौडदेश इति कथनेन यथा बङ्गस्यावबोध: स्यात्, तथैवान्य चतुर्णामपि । किञ्च तदानीन्तने काले एकैकस्मिन्प्रदेशे बहूनि राज्यानि आसन्, म्लेच्छशासनकाले तु बिहारोत्कलबङ्गानामेकराज्यत्वं सुप्रसिद्धमेव । अत: गौड इतिकथनेन पञ्चगौडस्य ग्रहणन्तु भवत्येव किञ्च विशेषरूपेण बिहारोत्कलबङ्गानामपि ग्रहणम्भवितुमर्हति ।

'गौडोर्वीशकुलप्रशस्तिभणिति भ्रातर्ययं तन्महा...' इत्याख्यस्य काव्यरचनया (नैषध.७/१०९) ज्ञायते यत् श्रीहर्ष: गौडदेशीय इति । परन्तु स अवश्यमेव कस्यापि गौडशासकस्य सन्निधौ तस्य राजसभायां कञ्चित्कालपर्यन्तमभि-व्याप्याध्यतिष्ठदिति निश्चप्रचम् ।

**'विभ्रम्य तच्चारुनितम्बचक्रे दूतस्य दृक् तस्य खलु स्खलन्ती ।**
**स्थिरा चिरादास्त तदूरुरम्भास्तम्भावुपाश्लिष्य करेण गाढम् ।।'** (नैषध.७/७)

इत्यस्मिन्पद्ये यस्या: क्रीडाया: सङ्केत: कविना विहित:, सा क्रीडा तु मिथिलायामपि सुप्रसिद्धा । इदानीमपि सा सर्वत्रावलोक्यते ।

**'त्वद्गुच्छावलिमौक्तिकानि गुटिकास्तं राजहंसं विभो-**
**र्वेध्यं विद्धि मनोभुव: स्वमपि तां मञ्जुं धनुर्मञ्जरीम् ।**
**यन्नित्याङ्कनिवासलालिततमज्याभुज्यमानं लस-**
**न्नाभीमध्यबिला विलासमखिलं रोमालिरालम्बते ।।'** (नैषध.३/१२७)

पद्येऽस्मिन् यस्य बङ्गदेशीयस्य गोलकनिक्षेपकस्य वर्णनं विहितं तद्धेतो: बङ्गदेशीयोऽयमिति न क्षोदक्षमम्, मिथिलायामपि तस्य व्यवहारबाहुल्यात् ।

**'विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरु: ।**
**अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराश्शिर:स्थितम् ।।'** (नैषध.१/१६)

कविनाऽत्र अर्द्धार्थे फालशब्द: व्यवहृत: । य: खल्वेदानीमपि मैथिलीभाषायामपभ्रंश्य 'फाँक' सञ्जातोऽस्ति । पुरा चायं शब्द: मैथिल्यां व्यवह्रियतेस्म ।

**'तलं तथेयुर्न तिला विकीर्णा: सैन्यैस्तथा राजपथा बभूवु: ।**
**भमीं स लब्धामिव तत्र मेने य: प्राप भूभृद्भवितुं पुरस्तात् ।।'** (नैषध.१०/५)

इत्यत्र तलशब्दप्रयोगोऽपि कवि: मैथिलीभाषाप्रभावत्वादेव प्रयुंक्ते । तथैव तेन नैषधस्यैकस्मिन् (९/२८) पद्ये आरकूटनिर्मितस्य आभरणस्य चर्चा विहिता । न तावदेव, अपितु 'वरस्य पाणि:' (नैषध. १६/१४) प्रभृतिपद्ये वरकन्ययोर्हस्तयो: यत्कुशवर्णनं विहितं कविना तदपि मैथिलदेशाचार एव मन्तव्यम् । 'विधाय ताम्बूलपुरीं' (नैषध. १२/७) इत्यत्र या ताम्बूलपुरी वर्णिता सापि मैथिलीभाषायां 'ताम्बूलपुरा' शब्दस्यैवापभ्रंशरूप: 'पानपुरा' (पान'क पुरा) इत्यधुना विद्यते । न कुत्रापि देशान्तरे तादृशी रमणीया ताम्बूलपुरा निर्मीयते । ताम्बूलपुरी ताम्बूलपुरा वा विनिर्माय तत्र पूगखदिरचूर्णपर्णादीनि एकीकृत्य प्रदीयते । सर्वत्र चास्मिन्देशे ताम्बूलपत्राणि बाहुल्येनोपलभ्यते सेव्यन्ते च जनै: ।

दमयन्तीविवाहात्परं षोडषसर्गे यो हि भोजनप्रकार: तेन वर्णित: सोऽपि सुस्पष्टतया वैदेहाचारमेव व्यनक्ति । उपनयनविवाहादिमहोत्सवेषु सर्वेभ्य: निमन्त्रितेभ्योऽतिथिभ्यो मत्स्यादिभोजनन्तु मिथिलायां भूरिश: प्रदीयत एव । नैषधीयचरितस्य (२/८८, २२/१३ प्रभृतिपद्येषु) यत् वाटिकाव्यवहारविषये कविना सूचितं, तदपि मिथिलायामत्र सर्वत्र दरीदृश्यते ।

मैथिलविदुषाऽत्र चाण्डूपण्डितेन हीरोदयनशास्त्रार्थकथाप्रसङ्गोल्लेखान्न्याय -शास्त्रीयविवादविषयत्वाच्चेयं प्रतीतिरसौ श्रीहीरोऽपि तीरभुक्तिनिवासी एवासीत् । किमेकदेशीययोरेकजनपदीययोर्मध्ये वादो न जायते? न्यायशास्त्रादिषु तु गुरुशिष्ययोर्मध्येऽपि वादपरम्परा प्रचलिता दृश्यते । किञ्च बहवो हि लेखका आलोचका: वा श्रीहर्षस्यास्पदं मिश्रमेवाकलयन्ति कल्पयन्ति च । तदानीन्तनकालपर्यन्तं मिश्रास्पदन्तु मैथिलानामेव आसीज्ज्ञानकर्ममिश्रणत्वादिति जानन्त्येव विज्ञा: । श्रीगोपालकृष्णमल्लिकस्याभिमते श्रीहर्षमिश्र: माहिष्मतीनामाग्रहारनिकटे धर्ममूलातटस्थिते कस्यचिद् ग्रामनिवासी आसीदिति, पुरातात्त्विकप्रमाणवलात्सिद्ध्यति । अन्येनापि विदुषा तन्निकटवर्ति 'हिरमनिथान' (हीरमणिस्थान) इति स्थानविशेषस्य सम्बन्धोऽपि श्रीहीरेणैव प्रतिपादित: (स्मारिका, १९७०, महिषी) ।

आचार्य:, साहित्यविभाग:,
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी

❖❖❖

## मानवतावाद:

प्रो. विजयपालकच्छवाह:

**अहिंसा सर्वभूतानामेतत् कृत्यतमं मतम्।**
**एतत् पदमनुद्विग्नं वरिष्ठं धर्मलक्षणम्।।**

शिक्षायां बहव: वादा: दृश्यन्ते किन्तु शिक्षामनोविज्ञाने मानववादर्शनस्य विशिष्टं महत्त्वं प्रतिभाति। वातावरणं शिक्षक: च शिक्षाया: कार्यं भवति। वातावरणानुसारं बालकस्य निर्माणम् जायते। येन स: जीवितो भूत्वा स्वमूलप्रवृत्ती: संतोषयितुमधिकावसर: लभेत्। संसारस्येतिहास: भौतिकजगत: नहि अपि तु चिन्तन-मनन-शोधसिद्धान्तस्य इतिहासश्च। सामाजिकसंघर्षस्य समये अनुभवै: प्रयोगै: सिद्धान्तविचारैश्च तस्य मार्गदर्शनं क्रियते। प्राचीनकालादेव वैचारिकभिन्नतया मनुष्यस्य चिन्तनं विचारसूत्रे संयोज्य अभिज्ञापयति मानवचिन्तनमेव दर्शनस्य स्वरूपं धारयति। सन्दर्भेऽस्मिन् स्पेन्सर महोदयेनोक्तम् वास्तविकदर्शनेनैव वास्तविकशिक्षाया: सञ्चालनं क्रियते।

दर्शनेन जीवनस्य वास्तिविकलक्ष्यं प्रतिपाद्यते। मनोविज्ञानस्य शैक्षिकक्रियाया: सर्वान् पक्षान् शिक्षा प्रभावयति। सामान्यतया सर्वाणि दर्शनानि मानवसमाजस्य कल्याणार्थं चिन्तयन्ति। किन्तु अष्टादशशताब्द्यां यूरोके औद्योगिकक्रान्ते: प्रभावेण पुनर्जागरणस्य युगस्यारम्भ: सञ्जात:। धार्मिकार्थिकदास्यभावात् मुक्तिं स्वीकृत्य मानववाद: इति कश्चन नूतनविचारो आगत:।

अस्य सिद्धान्तस्य प्रवर्तकौ कार्लरोजर्स मासलोमहोदयौ च वर्तते। कार्लरोजर्समहोदयेनोक्तं यत् "स्वप्रत्ययस्य (Self Concept)विकास: अधिगमेन जायते।" स्वप्रत्ययस्य तात्पर्यं व्यक्ते: स्वकीयं कथं पश्यति। मासलो महोदयेनोक्तं यत् स्वयथार्थाताया (Self Actualization)विकास अधिगमेन जायते। अत: सन्दर्भेऽस्मिन् निम्नतथ्यानि आगतानि। यथा वास्तविकताया:प्रत्यक्षीकरणं सत्यम्। नूतनविचाराणामवबोधनम्, स्वाभिज्ञानम्, सामीप्यसम्बन्धस्थापनस्य क्षमता, रचनात्मकता, नैतिकतापूर्णव्यवहारश्च। दर्शनेऽस्मिन् सृष्टे: श्रेष्ठ: प्राणी भवति मानव:। जगति घटिता: सर्वा: घटना: मानवहितानां सम्पूर्तिः मूल्यानां प्रतिष्ठां, आदर्शानां स्थापनमिति भवेत्। प्राक् विवादेन प्रभावित: वादोऽयम्। अत: अवसरेऽस्मिन् आर.बी.पैरीमहोदयेनोक्तं यत्- "Naturalism is no science but an assertion about Science More specifically is the assertion that scientific knowledge is final leaving no room for ultra scientific or Philosophical knowledge " -R-b-Perry

उपर्युक्तविवेचनेन स्पष्टं भवति यत् मानववाद: प्रकृतिवादश्च द्वावपि मानवकल्याणस्य वैयक्तिकस्वतन्त्रताया: समर्थक: अन्धविश्वासस्य विरोधी आसीत्। प्रकृतिवादस्य संकुचितप्रभावत: मुक्तो भूत्वा मानवीयादर्शान् अस्य दर्शनस्य लक्ष्यं मनुते। अधुना व्यक्ते: समाजस्य जगतश्च मानवकल्याणार्थं वादोऽयं प्रतिबद्ध:। यथा-

**परहितसरसधर्म नहि भाई।**
**परपीडा सम नहि अधमाई।।**

**मानववादस्य विशेषता-**

भारतीय-ग्रीकदर्शने च मानवव्यक्तित्वस्य पूर्णविकासाय शिक्षाया: व्यवस्था क्रियते। भारतीयदर्शने उक्तं यथा- "सर्वे भवन्तु सुखिन: सर्वे सन्तु निरामया:" बहुजनहिताय बहुजनसुखाय:

**अयं निज: परोवेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्।।**

अष्टादशपुराणानां साररुपेण तथ्यद्वयं वर्तते। महर्षिवेदव्यासेन उक्तं यथा-
परोपकार: पुण्यायपापाय परपीडनम्।
गोस्वामी तुलसीदासेनाऽपि रामायणे उक्तं यथा-

**परधर्मश्रुतिविदित अहिंसा । परनिन्दा सम अधम गरीसा।।**
**धरम न दूसर सत्य समाना। आगम निगम पुरान बखाना।।**

अत: एतादृशै: बहुभि: ध्येयवाक्यै: सम्पूर्णविश्वे मानवकल्याणस्य कामना क्रियते। एवं रीत्या ग्रीकशिक्षाशास्त्रिण: दार्शनिकश्च शिक्षणं जीवनेन सह योजनं कृत्वा ज्ञानस्य सम्पूर्णव्याख्याविधानं संकुचितज्ञानात् मुक्ति: सञ्जायन्ते। मानववादेन वास्तविकं ज्ञानं प्राप्यते। अत: एतस्य वैज्ञानिकस्वरूपं जातम्। अवसरेऽस्मिन् के.जैदीमहोदयेन उक्तं यत् "वैज्ञानिकमानववाद: असत्यं नहि अपितु वास्तविक:, एतस्मिन् वर्षद्धे: परिवर्तनं, विकासशीलसम्भावना च निहिता: भवन्ति। अत: अस्य वादस्य निम्नविशेषता: वर्तन्ते। यथा-

१.अस्य दर्शनस्य मुख्यं केन्द्रं मानव: तस्य संसारश्च।
२.मानवजाते: कल्याणं मुख्यं ध्येयम्।
३.वादेऽस्मिन् मानवमूल्यानि यथा-प्रेम-शान्ति-सहयोग-स्वतन्त्रता च भौतिकमूल्यानामपेक्षया विशेषमहत्त्वं दीयन्ते।
४.दर्शनेऽस्मिन् व्यक्ते: मुक्तौ बलं ददाति। यथा-धार्मिक, राजनीतिक, सामाजिकबन्धनात् मुक्तिश्च।
५.अस्य दर्शनस्य मुख्याधार: भवति सहास्तित्वम्। अर्थात् "जियो और जीने दो।
६.जगत: सर्वे मनुष्या: समान:-वर्ण-जाति-प्रजाति-शासनभेदेन भेदा: न कर्तव्या:। अत: तेभ्य: सर्वेभ्य:

मानवोचितसुविधाः प्रदातव्याः।

७.वादोऽयं जगत् गृहं मन्यते वसुधैवकुटुम्बकम् इत्यस्मिन् वाक्ये विश्वसिति स्थापयति च। पर्यायेऽस्मिन् निकोलसहैसमहोदयेनोक्तं यत्-

"शैक्षिकसमस्यानां विषये वादोऽयं मानवीयः(Human) कोमलयुक्तश्च (Tender)भावनाद्वयं स्वीकरोति, यथा धर्मोच्चादर्शसङ्कीर्णभावेन मानवप्रकृत्या सह प्रतिकूलव्यवहारः न क्रियते। एवं च कोमलदयायुक्त-व्यवहारस्य संकल्पना प्रकल्पिता। बालकस्य प्रकृतिः विकासशीलमस्तिष्कं च। अतः भातष्णां पितष्णां शिक्षकाणां कठोरानुशासनेन प्रतिकूलव्यवहारे च संरक्षणीयम्।

**अस्य वादस्य शिक्षामनोविज्ञाने प्रभावः-**

परम्परागतमनोविज्ञानस्य इयमवधारणा वर्तते यत् मनुष्यः प्रतिक्रियाशीलप्राणी न तु क्रियाशीलः। यतोऽहि सः सर्वदा प्रतिक्रियां करोति। इच्छा(Will) चेतना(Consciousness)मस्तिष्क(Mind), तर्कः,(Reasning) संवेगाश्च(Emotion) तस्य काल्पनिकसमस्याः अतः एतेभ्यः बाह्यतत्त्वेभ्यः प्रभावितः भवति। मानवव्यवहारमाचरणपरिवर्तने एतेषां किमपि योगदानं न वर्तते। सन्दर्भेऽस्मिन् स्किनरमहोदयेनोक्तं यथा-"एषा परिकल्पना क्रियते यत् मनुष्यः स्वतन्त्रो न मानवव्यवहारस्याध्ययनस्य वैज्ञानिकविधीनाम् विनियोगाय अनिवार्य- वर्तते।

स्वतन्त्रान्तरिकमनुष्यः स्वव्यवहाराय उत्तरदायी, अतः सर्वे बाह्यविकल्पाः मदीयाः परकीयाः च इत्यस्मिन् विषये सर्वदा चिन्तयति।

शिक्षामनोविज्ञाने मानववाददर्शनस्य बहुप्रभावः दरीदृश्यते। शिक्षया बालकस्य पूर्णविकासः सञ्जायते। अतः एतस्यां शिक्षामनोविज्ञानस्य महत्त्वमङ्गीकर्तव्यम्। किञ्च शिक्षायाः केन्द्रविन्दु बालकः। अतः शिक्षामनोविज्ञानस्य केन्द्रेऽपि सः एव भवति। मानवमूल्यानामादर्शानां प्राप्तिश्च शिक्षायाः अभिप्रायः अतः अस्य दर्शनस्य शिक्षामनोविज्ञाने निम्नाङ्कितप्रभावः दृश्यते। यथा-

**१.शिक्षणाधिगमे बालकस्य स्थानम्-**

प्राचीनशिक्षाव्यवस्थायां बालकस्य महत्त्वं नैवासीत्। किन्तु साम्प्रतिकशिक्षायाः केन्द्रविन्दु बालकः इति सर्वे शिक्षाशास्त्रिणः अङ्गीकुर्वन्ति। बालकस्य कृते विषयस्य नहि एतादृशः मानवतावादस्य विश्वासः। अतः एतेषां प्रकृत्यनुसारेण शिक्षायाः व्यवस्था कर्तव्या। शिक्षकाय शिक्षामनोविज्ञानस्य निम्नतथ्येषु अवधानं देयम्। यथा-

१.बालकस्य स्वप्रभाव-रुचि-क्षमतायाः च ज्ञानम्।

२.बालविकासस्य विभिन्नावस्थायाः ज्ञानं यथा सामाजिकः बौद्धिकः शारीरिकः सौन्दर्यात्मकश्च।

३.आकांक्षायाः ज्ञानम्।

४.मानसिकस्वास्थ्यमभिप्रेरितव्यवहारस्य च ज्ञानम्।

**२.वैयक्तिकभिन्नतायाः विषये अवधानम्-**

मानवतावादस्यावधारणा वर्तते यत् मानवः अस्य जगतः विशिष्टा रचना। साज-राष्ट्र-धर्म-जातेश्चाधारेण तेषां बलिः न दातुं शक्यते। प्रत्येकव्यक्तेः स्वकीयमस्तित्वं भवति। अतः तेषां यथोचितविकासः करणीयः।

**३.बालकस्य ज्ञानम्**

शिक्षया बालकस्यान्तरिकशक्तीनां विकासः जायते। तस्य प्रकृतिं, वंशानुक्रमं, वातावरणं, रुचिमभिरुचिं, बुद्धिं, व्यक्तित्वं च अवबोध्य शिक्षा व्यवस्था कर्तव्या।

**४.शिक्षणविधयः**

प्राचीनशिक्षायां परम्परागतशिक्षणविधिना ज्ञानं दीयते स्म। किन्तु आधुनिकशिक्षायां विधीनां निर्माणं क्रियते।

**५.अधिगमस्य इच्छा-**

मानववाददर्शनस्य प्रभावः शिक्षामनोविज्ञानेऽपि दृश्यते। बालकः स्वयं प्रेरितो भूत्वा अभिप्रेरणा प्रशंसा प्रोत्साहनम्,

अभिप्रेरककौशलम् इत्यादीनि शिक्षन्ते।

**६.अनुशासनम्**

शिक्षामनोविज्ञानं कक्षायां प्रविश्य मानवतावादरूपेणानुशासनं प्रकल्पयति। स्वशासनं स्वनियन्त्रणम् इदमनुशानस्य ध्येयं ज्ञान-शक्ति-स्वभाव-रुचि-आदर्शैश्च स्वस्य स्वमित्राणां सम्पूर्णसमाजस्य कल्याणार्थं स्थापनीयम्।

**७.शिक्षकस्य स्थानं भूमिकाश्च**

मानवतावादप्रभावेणैव सम्प्रति शिक्षकः छात्राणामभिमुखे पथप्रदर्शकः,मार्गदर्शकरूपेण कार्यं सम्पादयति। आधुनिकशिक्षामनोविज्ञानस्य प्रभावेण एतस्य प्राक्तनस्वरूपस्य यत् गौरवमासीत् तस्मै महत्त्वं न प्रदीयते। बालकस्य सर्वाङ्गीणविकासः कथं स्यात् इत्यस्मिन् विषये सर्वदा चिन्तयति।

**८.विशिष्टबालकानां शिक्षा**

आधुनिकशिक्षाव्यवस्थायां प्रतिभावान् विकलाङ्गः, मानसिकदृष्ट्या भिन्नबालकानामुपेक्षा कर्तुं न शक्यते। मानवतावादोऽयं विज्ञापयति यत् प्रत्येकं बालकः जन्मना काचित् विशेषता नीत्वा जन्म गृह्णाति। एतादृशानां विशेषबालकानां कृते विभिन्ननिदानात्मकशिक्षणविधीनां विकासः क्रियते। यथा-डेकरोली-माण्टेसरी विधिः।

**९.वातावरणम्**

शिक्षामनोविज्ञानेन मनुष्यस्य वातावरणं निर्मीयते। सुवातावरणेन व्यक्तिः अग्रे गन्तुं समर्थः भवति। सन्दर्भेऽस्मिन् टी.रेमण्टमहोदयेनोक्तं यत् "शिक्षामानवजीवनस्य विकासस्य प्रक्रिया या शैशवावस्थातः प्रौढावस्थापर्यन्तं प्रचलति। अर्थात् मानवः स्वावश्यकतानुसारं भौतिक-सामाजिक-आध्यात्मिकवातावरणेन च सहानुकूलं स्थापयति। सुवातावरणस्य निर्माणे शिक्षामनोविज्ञानस्य वादोऽयं उपदिशति।"

**१०.सर्वाङ्गीणविकासः**

मानवतावाददर्शनेनैव प्रभावितो भूत्वा महात्मागान्धीमहोदयेनोक्तं यत् शिक्षयाभिप्रायः बालकस्य सर्वाङ्गीणविकासः अर्थात् शारीरिक-मानसिकात्मनश्च विकासः। मानवतावाददर्शनस्यापि एवमेव लक्ष्यं मनुते।

**११.बालकस्य महत्त्वम्**

मानवतावादस्य उद्भूतपरिस्थिना शिक्षामनोविज्ञानेन वैयक्तिकभिन्नतायाः प्रभावेण प्रत्येकं बालकस्य स्वतन्त्रव्यक्तित्वं स्वीक्रियते। मानवतावादस्याधुनिकशिक्षायां प्रभावः-

वादेऽस्मिन् शिक्षा व्यापकार्थे प्रयुज्यते। सर्वेषां कल्याणाय उत्तममानवनिर्माणाय च शिक्षा अनिवार्या स्यात्। आधुनिकशिक्षायां बालकस्य सर्वाङ्गीणविकासः कथं भवेदिति विचिन्त्य मानवकल्याणार्थं शिक्षायाः उद्देश्यानि निश्चितानि। शिक्षणार्थं पाठ्यक्रमे मानवीयमनोविज्ञानानि वैज्ञानिकविषयाणां विशेषमहत्त्वं प्रकटयन्ति। येन मानवीयशुभसंकल्पनायाः विकासः क्रियते। एतैः इन्द्रियजन्यप्राप्तानुभवेयुः आधारितं ज्ञानं सत्यं न अपितु तर्कपरीक्षणैश्च प्राप्तं ज्ञानं वास्तविकं मनुते। स्वयं कृत्वा शिक्षणं स्वानुभवैश्च शिक्षणमिति आधुनिकशिक्षायाः मुख्या विशेषता भवति। वैज्ञानिकविधिभिः तर्कपरीक्षणैश्च शिक्षणे विशेषावधानं दातव्यम्। अतः मानवतावादः आधुनिकशिक्षायाः विभिन्नानि क्षेत्राणि प्रभावितानि।

**निष्कर्षः-**

अतः उपर्युक्तविवेचनेन स्पष्टं भवति यत् मानववादस्य प्रभावेणैव मनोविज्ञाने शिक्षामनोविज्ञाने च नैतिकमूल्यानसमावेशः जातः। व्यावहारवादीनां सदृशः मनुष्यः परिस्थितीनां दासः न अपितु तस्य व्यवहारं प्रति शिक्षामनोविज्ञानेन उचितसम्मानं प्रदीयते। सन्दर्भेऽस्मिन् महाभारतस्यानुशासनपर्वे उक्तं यथा-

**अहिंसा परमोधर्मस्तथाऽहिंसा परं तपः।**
**अहिंसा परमं सत्यं ततो धर्मः प्रवर्तते।**

अपि च **सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग्भवेत्।।**

**सन्दर्भग्रन्थसूची**

(१)मनुस्मृति:-चौखम्बा विद्याभवन, चौक,पो.बा.६६,वाराणसी

(२)शिक्षाया: सामाजिकाधार:-डा.ए.पी.सच्चिदानन्द:, गौरीप्रकाशनम्, शृङ्गेरी

(३)शिक्षा के सामान्य सिद्धान्त-त्यागी-पाठक,विनोद पुस्तक मन्दिर,आगरा-२

(४)शिक्षा-दर्शन-डा.भास्करमिश्र:, नाग पब्लिशस, जवाहरनगर, दिल्ली।

(५)शिक्षा के दार्शनिक एवं सामाजिक आधार-डा.के.पी.पाण्डेय,विश्वविद्यालय प्रकाशन, वाराणसी।

(६)शिक्षा के दार्शनिक एवं सामाजिक आधार-डा.एस,एस.माथुर.विनोद पुस्तकमन्दिर आगरा-२

(७)वैदिक शिक्षा पद्धति-भास्कर मिश्र, महर्षिसान्दीपनि राष्ट्रिय वेद विद्या प्रतिष्ठान, उज्जैन।

(८)भारतीय शिक्षा का इतिहास....वी.पी जौहरि...पी.डी.पाठक, विनोद पुस्तकमन्दिर आगरा-२।



आचार्य:, शिक्षाशास्त्रविभागाध्यक्षश्च,

केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी




# भारती-यसंस्कृति: शिक्षाशास्त्रञ्च

**प्रो. वृन्दावनपात्र:**

भारती-यसंस्कृति: विश्वस्-य सर्वश्रेष्ठा सर्वप्राचीना च संस्कृति: वर्तते । भारती-यसंस्कृते: मूलं वेदा: । वेदं विहा-य भारती-यसमाजजीवनस्-य परिकल्पना नैव कर्तुं शक-ते । सा प्रथमा संस्कृति विश्ववारा इति कथनं वैदिकसंस्कृते: श्रेष्ठत्वं प्रतिपाद-ति । उक्तञ्च –

**वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम् ।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च ।।**
**सत-याहिंसागुणै : श्रेष्ठा विश्वबन्धुत्वशिक्षिका ।**
**विश्वशान्तिसुखधात्री , भारती-या हि संस्कृति: ।।**
**वैदिकी संस्कृति : पुण-या पुरुषार्थचतुष्ट-यम् ।**
**शिष्ट्वा लोकान् पुनात-येषा , सत-याचारगुणप्रदा ।।**

**संस्कृति** इति शब्द: सम् उपसर्गपूर्वकं डुकृङ् धातो: क्तिन् प्रत-य-य-योगेन निष्पन्न: भवति । भूषणार्थे संघातार्थे च ' संस्कृति ' शब्द: प्र-युज्-यते । -यजुर्वेदे ,ऋग्वेदे , ऐतरे-यब्राह्मणे च अस्-य शब्दस्-य प्र-योगोऽपि दृश्-यते । ऋग्वेदे अस्-यार्थ : धर्म: इत्-युक्तं वर्तते । परन्तु सा-यणाचा-र्येण अस्-यार्थ: -यज्ञ: इति स्वीकृत: । -यजुर्वेदस्-य भाष्-यकारेण उवटेन सत्कार: , भाष्-यकारमहीधरेण संस्कार : चेति संस्कृते: अर्थ: स्पष्टीकृत:। बाबू गुलाबरा-य महोद-येन संस्कृति ' शब्दस्-य सम्बन्ध: संस्कारेण कृत: वर्तते । डॉ . मनमोहनशर्मामोद-यस्-य संस्कृति: इति शब्दस्-य व्-युत्पत्ति : संस्कारात् जा-यते । संशोधनं , परिष्करणञ्चेति संस्कारस्-याभिप्रा-य: ।

आँग्लभाषा-यां संस्कृते: समानार्थक शब्द: भवति ' ल्वूले ' -यस्-यार्थ: भवति प्रथा , सभ्-यता , सफलता चेति। संस्कृति: मानवस्-य सर्वविधं बौद्धिकं , नैतिकं , धार्मिकञ्च आन्तरकिजीवनं प्रकटीकरोतीति मानविकीसाहित-यस्-य विश्वकोषस्-याभिमतम् ।

संस्कृति: सा संश्लिष्टाभि-ोजना भवति -स्-ां ज्ञानं, विश्वास:, कला, नैतिकता , विधि:, प्रथा तथा च समाजस्व अङ्गत्वेन सर्वविधा: क्षमता:, व्-ासनानि व सम्मिलिता: भवन्तीति टैलरमहोद-ेनोक्तम् । प्रो. इन्द्रविद्यावाचस्पतिमहोद-स्-ा मते कस्-ापि देशस्-ा आध्-ात्मिक , सामाजिक, मानसिकञ्च तत्वं तस्-ा देशद्र संस्कृतिरिति कथ्-ाते । 'संस्कृति'शब्दे देशस्-ा धर्म:, साहित्-ं , प्रथा , परम्परा , सामाजिकसङ्घटनादीनां सर्वेषामाध्-ामिक मानसिकतत्त्वानां समावेश: भवति । एतेषां समूहस्-ा नाम संस्कृतिरस्ति । अन्ते एवं संक्षेपेण वक्तुं शक्-ाते -ात् संस्कृति मानवव्-ाक्तित्वस्-ा विकासस्-ा प्रक्रि-ा एवास्ति । अस्-ा: मौलिका-र्: भवति परिष्करणम् ।

**संस्कृति : सभ्-ाता च**

सभा-ां साधुरिति सभ्-ा: , सभ्-ास्-ा भाव: सभ्-ाता । सभ्-ाता सामाजिकविधे: निषेधस्-ा चोपरि बलं ददाति । सभा-ां शिरष्टाचारस्-ा नि-ामानां पालनं , सामाजिकभावना-ा : अनुभवच क्रि-ाते । अतएव ' सभ्-ाता ' शब्द : शिष्टाचारस्-ा नि-ामै: सह सामाजिकोत्तरदा-ित्वस्-ा , सामाजिक प्रतिबन्धस्-ा , सामाजिकाचरणस्थापि निर्देशनं करोति ।

कला – कौशलानां तन्त्राणां उपा-ानाञ्च समष्टिरेव सभ्-ाता -ा-ा मनुष्-ा: स्वक्षुध आवश्-ाकर्ता च सरलतापूर्वक पूर-ातीति डॉ . देवराज: निगदति । सभ्-ाता-ा: सम्बन्ध: उप-ोगिता-ा: क्षेत्रेण सह भवति । सभ्-ाता संस्कृतिश्च मनुष्-ा सर्जनात्मकक्रि-ा-ा: परिणामौ स्त: । -ादा इ-ं क्रि-ा उप-ोगिलक्ष्-ं प्रति गतिशीला भवति , तदा सभ्-ाता-ा: आविर्भाव जा-ते तथा च -ादा सा मूलचेतनां प्रबुद्धां कर्तुं अग्रेसरति तदा संस्कृते: उद-ा: भवति । सभ्-ाता मानवस्-ा विकासस्-ा सर्वासां चेष्टानां बाह्यरूपं संस्कृति: तस्-ा आन्तरिकरूपम् इत्-ुच्-ाते । सभ्-ाता-ा: सम्बन्ध: सामाजिकशिष्टव्-ावहारै: सह भवति , परन्तु संस्कृति : हार्दिकगुणानां प्रकटनं करोति । अत एव वक्तुं शक्-ाते -ात् -ादि सभ्-ाता शरीरं भवति संस्कृति: तस्-ाात्मा भवति । संस्कृति भावप्रधानज्ञानप्रधाना चास्ति , सभ्-ाता कर्मप्रधाना भवति ।

**भारती-ासंस्कृते: स्वरूपम्**

भारती-ासंस्कृति: प्रधाना अध्-ात्मसम्पन्ना वर्तते । भारते आध्-ात्मिकता-ा: कृते जीव: , ईश्वर: , जगत् , मा-ा, मोक्ष: इत्-ादीनां ज्ञानमपरिहा-र्म् । धर्मार्थकाममोक्षाख्-ाचतुष्ट-ापुरुषार्थप्राप्तिरेव मानवजीवनस्-ा परमलक्ष्-ं भवति । भारती-ाजन – जीवने धर्मस्-ा महत्त्वं दरीदृश्-ाते । जन्मत: मृत्-ुं -ावत् , गृहात् आरभ्-ा समाजं -ावत् सर्वत्र धर्मस्-ा आधिक्-ं वरीवर्ति । धर्मानुसारं कर्तव्-ास्-ा परिपालना-ा वर्णाश्रमव्-ावस्था विहिता आसीत् । भारती-ासंस्कृते: विकास: प्रकृते: उन्मुक्तवातावरणे अभवत् । गुरुकुलस्-ा संस्थापका संचलाका : अस्माकं मन्त्रद्रष्टार ऋष-ा: आसन् । तेषां महता प्र-ासेन भारती-ासंस्कृति: तस्-ा: दिव्-ास्वरूपं प्राप्तवती । आश्रमव्-ावस्था-ा: मूलं वनमेव आसीत् । अतएव भारती-ासंस्कृतौ अरण्-ाजीवनं गौरवपूर्ण स्थानमावहति । वैदिकमन्त्रेण समग्रविश्वं प्रतिध्वनितमभूत् ।

भारती-ासंस्कृते: अधोलिखितानि तत्त्वानि भवन्ति –

**१ . वर्णाश्रमव्-ावस्था-**

वैदिकसंस्कृतौवर्णाश्रमव्-ावस्थाप्रचलिताआसीत्।जनानांगुणकर्मानुसारंवर्णव्-ावस्थानिरूपिताआसीत्।तथाह्युक्तम्-

**चातुर्वण्-ं त्र-ोलोकाश्चत्वारश्चाश्रमा: पृथक् ।**
**भूतं भव्-ं भविष्-ाच्च सर्वं वेदात्प्रसिद्ध्-ाति ।**

गीता-ामपि उक्तं वर्तते– ' चातुर्वण्-ं म-ा सृष्टं गुणकर्मविभागश: ' ।

**२ . गुरुकुलपद्धति :-**

वैदिककाले गुरुकुलपद्धति: प्रमुखा आसीत्। ज्ञानप्राप्त्-र्थं शिष्-ा: गुरुकुले स्थित्वा अध्-ा-नं कुर्वन्ति स्म। गुरो: मार्गदर्शनेन आदर्शजीवन-ापनस्-ा शिक्षां प्राप्नुवन्ति स्म। ब्रह्मच-र्व्रतस्-ा आचरणं कृत्वा गुरो: अनुशासने तिष्ठन्ति स्म।

**३ . संस्कारा :-**

वैदिककाले संस्काराणां महत्त्वमासीत् । प्रचलितसंस्कारेषु षोडशसंस्कारा: प्रसिद्धा आसन् । तद्यथा-

**गर्भाधानं पुंसवनं सीमन्तो जातकर्म च ।**
**नामक्रि-ाा निष्क्रमोऽन्नप्राशनं वपनक्रि-ाा ।**
**कर्णवेधो व्रतादेशो वेदारम्भक्रि-ाविधिः ।**
**केशान्तस्नानमुद्वाहो विवाहाग्निपरिग्रहः ।**
**त्रेताग्निसंस्कारश्चैव संस्कारा: षोडश स्मृताः ।।**

**४. धर्म : -**

धृङ्धारणपोषण-ो: इत्-ास्माद्धातो: निष्पन्नोऽ-ंधर्मशब्द:। महाभारतेधर्मस्-ाार्थ:एवस्पष्टीक्रि-ाते

**धारणाद् धर्ममित्-ााहुधर्मो धार-ाते प्रजाः ।**
**-ात् स्-ाद् धारणसं-ुक्तं स धर्म इति निश्च-ाः ।।**

मनुना अपि धर्मस्-ा दश लक्षणानि निर्दिष्टानि –

**धृतिः क्षमा दमोऽस्ते-ं शौचमिन्द्रि-ानिग्रहः ।**
**धीर्विद्या सत्-ामक्रोधो दशकं धर्मलक्षणम् ।।**

**५. आचार : -**

आचार : परमो धर्म ' इति स्मृतिवचनम् । श्रेष्ठपुरुषाणां व्-ावहार: आचार इत्-ुच्-ाते । आचारे सदाचारादिगुणानां समावेशो जा-ाते । उक्तञ्च महाभारते – आचाराल्लभते ह्या-ुराचाराल्लभते श्रि-ाम् ।

आचारात् कीर्तिमाप्नोति पुरुष : प्रेत्-ा चेह च ।
शीलेन हि त्र-ाो लोका: शक्-ाा जेतुं न संश-ाः ।
न हि किञ्चिदसाध्-ां वै लोके शीलवतां भवेत् ।।

**६. दर्शनतत्त्वानि-**

क ) जीव: –-ा:सर्वत्रव्-ााप्तो भवति , सर्वान् गृह्णाति , -ास्-ाास्तित्वं निरन्तरं वर्तते , तदेव आत्मेति कीर्त्-ाते । शरीरेण सह सम्बन्धत्वात् अस्-ा जीवसंज्ञा भवति । जीव: कर्मण : कर्ता भोक्ता च मन्-ाते ।
मनुनैवोक्तम् –

**जीवसंज्ञोऽन्तरात्मान्-ाः सहजः सर्वदेहिनाम् ।**
**-ोन वेद-ाते सर्वं सुखं दुःखं च जन्मसु ।।**

ख ) ईश्वर : – ईश् ऐश्-र्ो धातो : वरच् प्रत्-ा-ा-ोगेन ईश्वरशब्द: ईश्वर: । ईश्वरे षड्भगा: ( ऐश्व-र्ा ) भवन्ति ' भगवान् ' नाम्ना ख्-ाातो वर्तते । ईशरस्-ा अपरं नाम ब्रह्मेति । ब्रह्मशब्द : बृहधाता मनिन् प्रत्-ा-ोन सिद्ध ब्रह्मशब्दस्-ााश-ाो भवति वर्धनशील: । विष्णुपुराणे भगवान् एवं प्रतिपाद्यते-

**उत्पत्ति प्रल-ां चैव जीवानामगति गतिम् ।**
**वेति विद्यामवि-ां च स वाच्-ाो भगवानिति ।।**

उपनिषत्सु ब्रह्मण: स्वरूपं एवं निगदितम् सत्-ां ज्ञानमनन्तं ब्रह्म ( तैत्तिरी-ोपनिषद् ) विज्ञानमानन्दं ब्रह्म ( -ृ. ३४निषद् ) सर्व खल्विदं ब्रह्म ( छान्दोग्-ोपनिषद् ) चेति ।

**ग )** जगत् – गत्-ार्थक ' गम् ' धातो: क्विप् प्रत्-ा-ोन जगच्-ाशब्द : निष्पन्न: । गमनशील इति अस्-ााश-ा: । ईश्वर स्व-ं जगत् सृजति। पुन: तस्मिन् जगति अनुप्रविशति । ईश्वरादेव सर्वमिदं जा-ाते । एतस्मिन् विष-े तैत्तिरी-ोपनिषद उल्लेख : विद्यते तद्यथा सोऽकाम-ात । बहुस्-ाां प्रजा-े -ेति । स तपोतप्-ात स तपस्वप्त्वा इदं सर्वमसृजत -ादिदं किं च । तत्सृष्ट्वा तदेवानुप्राविशत् ।

**घ ) मा-ाा** – मी-ाते अन-ाा मा-ाा । भागवते लिखितं वर्तते -ात् आदिपुरुष: परमात्मा -ा-ाा शक्त्-ाा भूतानां कारणीभूतो भवति तथा तेषां विष-ाभोगार्थ मोक्षप्राप्त्-ार्थश्च स्वनिर्मितपञ्चभूतै: देव – मनुष्-ाादीनां शरीराणां करोति , सेव मा-ोति नाम्ना

ज्ञा-ते । मा-ा-ा: स्वरूपद्व-ं भवति विद्या अविद्या च जीव: विद्य-ा बन्धनस-ा अविद्य-ा मोक्षस-ा चानुभव करोति । अध-ात्मरामा-णे मा-ा-ा : रूपं इत्थं प्रतिपाद्यते अविद्या संसृतेर्हेतुर्विद्या तस-ा निवर्तिका ' ।

**ङ ) मोक्ष** : – मोक्षस-ा तात्प-र्ा द्विविधं भवति । संसारबन्धनात् मुक्तिरेव मोक्ष: । परमानन्दस-ा प्राप्तिरेव मोक्षशब्दस-ार्थ ' ब्रह्मप्राप्ति : मोक्ष:' इति अप्प-ादीक्षितस-ा मतम् । बुद्धि – सुख – दु:ख – इच्छा – द्वेष प्र-ात्न – धर्म – अधर्म – संस्कारादीनां नवानामात्मविशेषगुणानामत-न्तोच्छेद : मोक्ष: इति वैषेशिकानामाश-ा: ।

मोक्षप्राप्ते : त्रीणि साधनानि श्रीमद्भागवत महापुराणे उल्लिखितानि वर्तन्ते । तानि -था ज्ञानं , कर्म , भक्तिश्च । भारती-ादर्शने -ोग: मोक्षस-ा साधनत्वेनापि स्वीक्रि-ाते ।

**१ ) ज्ञानम्** – भारती-ासंस्कृतौ ज्ञानस-ा महत्त्वं वरीवर्ति । ' नहि ज्ञानेन सदृशं पवित्रमिह विद्यते ' इति गीता-ा उक्ति: वर्तते । ' सा विद्या -ा विमुक्त-े ' इत-त्र मोक्षप्राप्त-र्थं ज्ञानस-ा आवश-क्ता भवति । श्वेताश्वेतरोपनिषदि ज्ञानस-ा विष-े एवमुच-ाते -ात् जीव: आत्मन: परमात्मनश्च स्वरूपं ज्ञात्वा अमृतत्वं प्राप्नोतीति । मुण्डकोपनिषदि उक्तं वर्तते -ात् ज्ञाने प्राप्ते सति हृद-ग्रन्थि: भिद्यते , सर्वसंश-ा : विनश-न्ते । जीव : ब्रह्मम-ो भवति ।

**२ ) कर्म** – अस्माकं संस्कृतौ कर्मण: श्रेष्ठत्वं सर्वैरङ्गीकृतम् । कर्म विना जीवने सिद्धिनैव प्राप-ाते । श्रीमद्भगवद्गीता-ां सुष्ठूक्तम् । स्वे – स्वे कर्मण-ाभिरत: संसिद्धिं लभते नर: ।

अनासक्त: सन् -ादि कर्म क्रि-ाते तर्हि इहामुत्र च सुखकरं भवति । सत-ामेवोक्तम् ईशोपनिषदि–

**कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समा: ।**
**एवं त्व-ि ना-ाथेतोऽस्ति न कर्म लिप-ाते नरे ।।**

निष्कामकर्मद्वारा नैष्ठिक : परमपदं प्राप-ा शान्तिमाप्नोति ।

**३ ) भक्ति:** – भक्तिं विना मुक्ति: नैव सम्भवति । -ा: भक्त: अहर्निशं भगवत: चिन्तनं करोति तस-ा मुक्ति: अवश-ामेव भवति। अनन-ाभक्त्-ा भगवान् भक्तस-ा हृद्देशे तिष्ठति , तस-ा हृद-ास-ा सर्ववासना: नश-न्ति । तस-ा भक्तस-ा कल-ाणं भवति। भक्तिभावन-ा मातापितृगुरूणाञ्च वचांसि पालनी-ानि भवन्ति । एतस्मिन्सन्दर्भे ' मातृदेवो भव , पितृदेवो भव , आचा-र्दिवो भव , अतिथिदेवो भव इति उपनिषद्वाक-ामवश-ं स्मर्तव-ाम् ।

४) -ोग : – ' चित्तवृत्तिनिरोध: -ोग ' इति -ोगदर्शने -ोगस-ार्थ: प्रतिपादितो वर्तते । -ोगस-ा अष्टावंगानि भवन्ति -ामनि-ामासन प्राणा-ाम प्रत-ााहार धारणा ध-ानसमाध-ोऽष्टावंगानि । अष्टांग-ोगस-ा चत्वार: निम्नभेदा: भवन्ति १) राज-ोग, २) हठ-ोग:, ३) ल-ा-ोग:, ४) मन्त्र-ोगश्च । राज-ोग : मनस: , हठ-ोग: च वशीकरणस-ा साधनं । ल-ा-ोगे मन्त्र-ोगे च नादस-ा महत्त्व प्रदी-ाते । -ोगदर्शने षट्चक्राण-ापि भवन्ति । चक्राणां केन्द्रस्थानं ज्ञात्वा -ोगाभ-ास क्रि-ामाण: -ोगी भगवद्दर्शनमचिरेण प्राप्नोति ।

५) पुनर्जन्म –जीव : नाना-ोनिषु जन्म लभते इति ऋग्वेदस-ोल्लेख: वर्तते । तद्यथा

**अपश-ं गोपामनिपद्यमान मा च परा च पथिभिश्चरन्तम् ।**
**स सनीची : स विषूचीर्वसान आ वरीवर्ति भुवनेष्वन्त: ।।**

उक्तञ्च गीता-ाम् – ' जातस-ा हि ध्रुवो मृत-ुर्ध्रुवं जन्म मृतस-ा च । ' -ा: संसारेऽस्मिन् जा-ाते तस-ा मरणं अवश-ं भवति । कर्मानुसारं पुनर्जन्म सुनिश्चितं भवति । मृतजनस-ा तिस्र: गत-ा: भवन्तीति अथर्ववेदस-ोक्ति: । पुण-ाकर्मणा स्वर्गप्राप्तिर्भवति । पापकर्मणा नरकस-ा प्राप्तिर्भवति । पापपुण-ा-ो: -ोगेन संसारे जन्म लब्ध्वा जीव : सुख दु:ख-ो: उपभोगं करोति ।

६) अहिंसा-ा: सत-ास-ा ब्रह्मच-र्स-ा च परिपालनम् – अहिंसा परमो धर्म: इत-ुक्ति: बलवती भवति सर्वत्र । समस्तजीवान् प्रति श्रद्धाचरणं सहानुभूतिप्रदर्शनं चेति अहिंसा । अत एवोच-ाते ' मा हिंसी: पुरुषान् पशूंच । -ोगसूत्रे पतञ्जलिनाऽपि उक्तम्– अहिंसासत-ास्ते-ाब्रह्मच-र्ा परिग्रहा -ामा: इति । सत-ामेव सदाचारस-ा मूलम् । ' सत-ं वद , धर्मं चर ' इति वेदवाक-ाम् । सत-ामेव ज-ाते नानृतम् इत-ुच-ाते । अत: सत-ास-ा आचरणमवश-ं कर्तव-ाम् । तथाह्युक्तम् –

**सत्-ामेवेश्वरो लोके सत्-ो धर्म: सदाश्रित: ।**
**सत्-ामूलानि सर्वाणि सत्-ान्नास्ति परं पदम् ।।**

ब्रह्मच-र्ा आचरणी-ां भवति । ब्रह्मचारी न मांसमश्नी-ात् , न सुरां पिबेत् , न परस्त्रि-ामुपे-ात् ।

९. परोपकार: – अन्-ास्-ा हिता-ा -ात्किमपि सुका-र्ा क्रि-ाते ,तदेव परोपकारत्वेन ज्ञा-ाते । अष्टादशपुराणकर्तु-र्ा वचनद्व-ां ' परोपकार: पुण्-ा-ा , पापा-ा परपीडनम् ' इति श्रेष्ठत्वं आप्नोति । समाजस्-ा हितसाधनमपि परोपकारे अन्तर्भवति ।

१०. समानता – सर्वे समाना : भवन्तु , सर्वेषां कृते समानाधिकार: कल्-ेत । संसारेऽस्मिन् न कोऽपि ज्-ेष्ठ : नवा कनिष्ठ: , सर्वेऽप्-ात्र भ्रातर: इति समानता-ा: प्रचार प्रसार: च सर्वत्र भवेत् । संज्ञानसूक्ते समानता-ा: महत्व स्वीकुर्वन् उच्-ाते अज्-ेष्ठसो अकनिष्ठास एते । सम्भ्रासतो वावृध: सौभगा-ा ।। समाजस्-ा हिता-ा परस्परविभेदं विचारसाम्-ां च दूरीकृत्-ा सामञ्जस्-ामभीष्टं भवति । साध्वेवोक्तम् ऋग्वेदे –

**समानी व आकूति : समाना हृद-ानि व: ।**
**समानमस्तु वो मनो -ाथा व: सुसहा-ाति ।।**

११. विश्वबन्धुत्वस्-ा भावना – संसारेऽस्मिन् सर्वे जना: ईश्वरस्-ा अंशविशेषा: । अ-ां निज: ,स: पर: इत्-ादिभावना: । हितोपदेशे उक्तं वर्तते अ-ां निज: परो वेति गणना लघुचेतसाम् । अस्मासु न उत्पादनी-ा: उदारचरितानां तु वसुधैव कुटुम्बकम्।' -ात्र विश्वम्भवत्-ेकनीडम्' इति ऋग्वेदस्-ोक्तिरपि निरीक्षणी-ा भवति । सर्वे मिलित्वा सुखदु: ख-ो: एकत्वभाव -ात्र अनुभवन्ति तत्र बन्धुत्वभावना जागरिता भवति । ईशोपनिषदि उच्-ाते –

**-ास्मिन्सर्वाणि भूता-ात्मैवाभूद् विजानत: ।**
**तत्र को मोह: क: शोक एकत्वमनुपश्-ात: ।।**

शिक्षा आजीवनं प्रचाल्-ामाना काचित् सामाजिकी प्रक्रि-ा भवति । समाजाधारेण शिक्षा ०-ावस्था प्रचलति । शिक्षा बालकं सुसंस्कृतं कृत्वा तं -ोग्-ां निर्माति । शिक्षाद्वारा बालकस्-ा मानसिक बौद्धिक – आध्-ात्मिकविकासा : सजा-न्ते । शिक्ष-ा तस्-ा विचारशक्ते: चिन्तनशक्ते: , तर्कशक्तेश्च विकासोऽपि जा-ाते । स्व-ोग्-ातानुगुणं बालक: स्वपरिवारस्-ा समाजस्-ा , राष्ट्रस्-ा च कृते का-र्ा कर्तुं सक्षम: भवति । सामाजिककर्तव्-ानां परिपालनेन स्वानुभव प्राप्-ाते । तस्-ा ०-ावहारे परिवर्तनमपि आ-ाति । ०-ाक्ते विकासे समाजस्-ा विकास : अस्माकं जा-ाते । शिक्षा०-ावस्था सामाजिकसिद्धान्तै: प्रभाविता भवति । सामाजिक नि-ामा: , परम्परा , रीत-ा: , जीवनशैली, सांस्कृतिकमूल्-ानि , संस्कारा: इत्-ादीनां प्रतिफलनमपि शिक्षा०-ावस्था-ां दृश्-ाते । अतएव ०-ाक्ते विकासे समाजस्-ा विकासे च संस्कृते: विविधतत्त्वानां मूल्-ाबोधानाञ्च अभूतपूर्व -ोगदानं वर्तते । छात्रै: एतेषां ज्ञानं प्राप्तव्-ां भवति । शिक्षाशास्त्रे -ाद्यपि भारती-ासंस्कृते : सामान्-ारूपेण केचन संप्रत्-ा-ा: समाविष्टा: सन्ति तथापि छात्राणां कृते ते प-र्ाप्ता: न सन्ति । भारती-ासंस्कृते: मूलतत्त्वानां समावेश : शिक्षाशास्त्रपाठ्यक्रमे अवश्-ां करणी-ा: । छात्रा संस्कृतस्-ा विविध विष-ान् स्वीकृत्-ा शास्त्रीकक्षां (B.A.) आचा-र्ाकक्षां (M.A) उत्ती-र्ा शिक्षाशास्त्रे प्रवेशं प्राप्नुवन्ति । छात्राणां संस्कृतिविष-ाकं विशदज्ञानं नास्ति । एतदर्थं छात्रेभ्-ा : संस्कृते : ज्ञानं प्रदातुं शिक्षाशास्त्रपाठ्यक्रमे संस्कृते: अधोलिखितमौलिकतत्त्वानां क्रमबद्धरूपेण सनिवेश : स्-ाात्

१ ) वर्णाश्रमव्-ावस्था
२ ) गुरुकुलपद्धति:
३ ) संस्काराणां ज्ञानम्
४ ) चतुर्वर्गाणां संप्रत्-ा-ा:
५ ) सदाचारस्-ा अभ्-ास:
६ ) दर्शनतत्त्वानि
७ ) अहिंसा – सत्-ा – ब्रह्मच-र्ादीनां परिपालनम् ।
८ ) परोपकारस्-ा महत्त्वम्
९) समभावस्-ोत्थापनम्
१०) ' वसुधैव कुटुम्बकम् ' इति भावना-ा: पुनर्जागरणम्

सन्दर्भग्रन्थसूची

१. शिक्षा की दार्शनिक एवं समाजशास्त्रीय पृष्टभूमि- डॉं. रामशकल पाण्डेय, विनोद पुस्तक मन्दिर आगरा।
२. शिक्षा के सिद्धान्त - डॉं. डी. पाठक एवं जी. एस्. डी. त्यागी, अग्रवाल पब्लिकेशन्सल आगरा ।
३. वैदिक संस्कृति और दर्शन - डॉं. वी.डी. अवस्थी- सरस्वती प्रकाशन मन्दिर, इलाहावाद ।
४. ईशादि नौ उपनिषद - गीता प्रेस, गोरखपुर ।
५. श्रीमद्भगवद्गीता- गीताप्रेस, गोरखपुर ।

आचार्य:, शिक्षाशास्त्रविभाग:,
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी



# व्याकरणे पुरुषविचार:

डॉ. दुर्गाचरणषडङ्गी

पुर अग्रगमने इति तुदादिगणीयधातो: 'पुर:कुषन्' इति उणादिसूत्रेण (४/७४) कुषन् प्रत्यये पुरुषशब्द: सिद्ध्यति। अयं शब्द: पुमान्, नर:, अर्थाश्रय:, अधिकारी, कर्मार्ह:, मनुष्य:, रसिकराज:, मदनशामकाङ्क्ष:, द्रव्यादिष्वर्थेषु व्यवहृत: इति शब्दकल्पद्रुमे लिखितमस्ति, परन्तु व्याकरणे पुरुषशब्द: पारिभाषिक:। अत्र असौ पारिभाषिक: पुरुषशब्द: आलोच्यते ।

पाणिनिव्याकरणे आचार्य्येण यद्यपि साक्षात् पुरुषशब्दो नोच्चारितस्तथापि तदर्थे प्रथममध्यमोत्तमशब्दा: प्रयुक्ता:। एतदर्थं तेन ''तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमा:'' (पा.सू.१/४/१०१) इति संज्ञाविधायकं सूत्रं असूत्रि। परन्तु पाणिने: प्राक् पुरुषशब्दस्य प्रयोग: आसीदिति हेलाराजेन वाक्यपदीयटीकायां प्रत्यपादि। तथाहि – ''य: कर्तृकर्मविशेषभूत: स: पुरुष इति पूर्वाचार्या: प्राहु:'' (वा.प. पुरुषसमुद्देश, ३ काण्ड, श्लो.२)। निरुक्तेऽपि पुरुषशब्द: पारिभाषिकार्थे व्यवहृत:। तथाहि ''तत्र परोक्षकृता: सर्वाभिर्नाम विभक्तिभि: युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य। अथ प्रत्यक्षकृता मध्यमपुरुषयोगास्त्वमिति चैतेन सर्वनाम्ना। अथाध्यात्मिका आत्मापुरुषयोगा अहमिति चैतेन सर्वनाम्ना (निरुक्त.७/२)। वार्त्तिककारेण कात्यायनेन 'आकडारादेका संज्ञा' (पा.सू.१/४/१) इति सूत्रे पुरुषशब्द: प्रयुक्त:। यथा – ''परस्मैपदसंज्ञा पुरुषसंज्ञा। भगवान् पतञ्जलि: ''कृञ्चानुप्रयुज्यते लिटि'' (पा.सू.३/१/४०) इति सूत्रे महाभाष्ये पुरुषशब्दमुदचरत्। तथाहि ''न निष्टा परस्यानुप्रयोगेण पुरुषोपग्रहौ विशेषितो स्याताम्''।

**पुरुषशब्दस्य प्रक्रियादृष्ट्या विवेचनम् –**

प्रक्रियासिद्धिनिमित्तं ''तिङस्त्रीणित्रीणि प्रथममध्यमोत्तमा:'' इति सूत्रं पाणिनिना निरमायि। अस्य सूत्रस्य अर्थकथनावसरे सिद्धान्तकौमुद्यां ''तिङ: उभयो पदयोस्त्रयस्त्रिका: क्रमादेतत् संज्ञा: स्यु: इति भट्टोजिदीक्षितो लिलेख। अत्र मनसि शङ्कोदेति तिङ षट् त्रिका:। यथा – तिप्, तस्, झि, सिप्, थस्, थ; मिप्, वस्, मस् तथा त, आताम्, झ; थास्, आथाम्, ध्वम्, इट्, वहिङ्, महिङ् इति तिस्र: संज्ञा: प्रथममध्यमोत्तमा:। अत: यथासंख्यं न स्यात् इति चेत् उच्यते प्रौढमनोरमायां तस्मिन् सूत्रे– ''परस्मैपदमात्मनेपदमिति चानुवर्तते''। तेन पदद्वये प्रत्येकं संज्ञा प्रवर्त्तत इति। महाभाष्यकारेण तु प्रथमश्च मध्यमश्च उत्तमश्च प्रथममध्यमोत्तमा: प्रथममध्यमोत्तमाश्च प्रथममध्यमोत्तमा इति कृतद्वन्द्वानामेकशेषं विधाय शङ्का समाधायि। परन्तु प्रौढमनोरमाकारेभ्य एतद् न रोचते, गौरवात्। अतस्तेन शब्दकौस्तुभे

(पृ.१५२) प्रौढमनोरमायां च (भ्वादिप्रकरणे तस्मिन् सूत्रे) लिखितं 'त्वयापि हि परस्मैपदात्मनेपदग्रहणमनुवर्त्यमेव। अन्यथा शतृक्वसोः सावकाशा परस्मैपदसंज्ञा प्रथमादिसंज्ञया वोध्येत। ''णलुत्तमो वा'' इत्यपि ज्ञापकानुसरणे तु सुतरां प्रतिपत्तिगौरवम् (पा.सू.१/१)।

एतस्मादनुशीलनाज्ज्ञायते वस्तुतो दीक्षितमतं युक्तियुक्तम्। यतो हि पाणिनिना ''णलुत्तमो वा'' इति सूत्रं व्याधायि। अर्थात् यदि प्रथमादिसंज्ञाः परस्मैपदसंज्ञाः बाधेरन् तर्हि परस्मैपदानां विहितस्य णलः दुर्लभत्वमापद्येत।

**पुरुषाणां प्रयोगदेशः -**

प्रथममध्यममोत्तमसंज्ञाः कुत्र प्रयुज्यन्ते तदर्थं पाणिनिना नियमसूत्रत्रयं व्यरचि। तथाहि - ''युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः (पा.सू. १/४/१०५), अस्मद्युत्तमः (पा.सू.१.४.१०७), शेषे प्रथमः (पा.सू.१/४/१०८)। एषामुदाहरणं यथाक्रमम् - त्वं विद्यालयं गच्छ। अहं पुस्तकं पठामि। भवतः जगन्नाथं पश्यति।

एतेषां सूत्राणां व्याख्यानावसरे महाभाष्यतो वयमित्थं प्रतीमो यत्र एकक्रियास्थले युष्मदस्मदोरन्येषां च प्रयोगस्तत्रास्मदनुसारेणैव क्रियावाचकशब्दः प्रयुज्यते। यथा - स च त्वं च अहं च पठामः इति। यत्र युष्मदस्मदोः प्रयोगस्तत्रापि अस्मदनुसारेणैव क्रिया। त्वं च अहं च पठावः। यदा युष्मदन्ययोः प्रयोगस्तदा युष्मदनुसारेणैव क्रिया। यथा - स च त्वं च पठथः। अतएव प्रयोगादवगम्यते अस्मदः एव प्राधान्यम्।

**दर्शनदृष्ट्या पुरुषविमर्शः -**

दर्शनदृष्ट्या पुरुषशब्दस्य विचारो भर्तृहरिणा वाक्यपदीये प्रत्यपादि। तस्य मते प्रत्यक्ता उत्तमपुरुषविषयः। परभावो मध्यमपुरुषविषयः। प्रत्यक्ता इत्यस्य व्युत्पत्तिः भवति प्रतिपुरुषः प्रतिदेहमुञ्चति नाम गच्छति बुद्धिविषयो भवति चेष्टते वा इति प्रत्यग्। प्रत्यग्पदेन जीवात्मा अन्तर्यामी अहङ्काराश्रयः। तस्य भावः प्रत्यक्ता परभावः परत्वम्। प्रत्यक्ता परत्वं चेत्येतदुपाधिद्वयं कर्त्तृकर्मणोः।

''लः कर्मणि च भावे चाकर्मकेभ्यः'' (पा.सू.३/४/६९) इति सूत्रानुसारेणैव लकाराः कर्तरि कर्मणि भावे च विधीयन्ते। अतो यदा लकाराः कर्तरि प्रयुज्यन्ते तदा कर्त्ता क्वचित् परस्मैपदेन क्वचित् आत्मनेपदेनाभिहितः। यथा - अहं फलं खादामि। वालिका मातरं सेवते। लकाराणां प्रयोगो यदा कर्मणि भवति तदा कर्म केवलेनात्मनेपदेनैव अभिहितम्। यथा युष्माभिर्जगन्नाथो दृश्यते। किञ्च यदा प्रत्यक्तारूपोपाधिः कर्तुः प्रतीयते तदा तु उत्तमसंज्ञकप्रत्ययस्यैव प्रयोगः। यदा परत्वोपाधिः कर्तुः तदा मध्यमसंज्ञकप्रत्ययस्य प्रयोगः। यत्रानयोः उपाध्योः अभावस्तदा प्रथमपुरुषः प्रयुज्यते। अतो वाक्यपदीये उक्तम् - **प्रत्यक्ता परभावश्चाप्युपाधी कर्तृकर्मणोः।**

**तयोः श्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ।।** (पुरुषसमुद्देश्य - श्लो. १)

अस्याः कारिकायाः व्याख्यानावसरे हेलाराजेन लिखितं ''यः कर्त्तृकर्मविशेषणभूतः सः पुरुषः इति पूर्वाचार्य्याः प्राहुः'' अतएव पुरुषस्य कर्त्तृकर्मविशेषणत्वाद् भावविषयता नास्ति। भावविषये मध्यमोत्तमयोरप्रयोगः। तत्र शेषत्वात् प्रथमः एव प्रयुज्यते। यथा त्वया हस्यते, मया क्रन्द्यते इति।

अत्रायं प्रश्नः समागच्छति चेतनविषये एव अहङ्कारपदभावयोरुपपत्तेः मध्यमोत्तमप्रयोगस्य सङ्गतत्वे तदितरे तत्प्रयोगस्य विरुद्धत्वात् ''शृणोत ग्रावाणः'' इति प्रयोगः विरुद्ध्यते इति चेदुच्यते भर्त्तृहरिणा वाक्यपदीये-

**सदसदपि चैतन्यमेताभ्यामेव गम्यते ।**

**चैतन्यभागे प्रथमः पुरुषो न तु प्रवर्त्तते ।।** (पुरुषसमुद्देश, श्लो.२)

अस्यायमर्थः - सद् - विद्यमानप्राणिषु चैतन्यम्, असद् - अविद्यमानमध्यारोपितमप्राणिषु चैतन्यम् एताभ्यां मध्यमोत्तमाभ्यामेव गम्यते। प्रत्यक्तापरत्वयोः सामानाधिकरण्येन प्रतीयते। कर्त्तृकर्मणोपाधिभूतं शब्दं चैतन्यं सर्वत्रास्ति। अतो हेलाराजेनोक्तम् -

''शब्दादवगम्यमानस्येहार्थस्यान्वाख्याननिमित्तत्वाच्छब्दं चैतन्यं सर्वत्रास्ति।'' प्रथमपुरुषस्य सम्बन्धश्चैतन्यभागे

नास्ति। अतस्तस्य प्रथमपुरुषस्य विषयो भवति अनध्यारोपितं चैतन्योऽचेतनः। अतः ''शेषे प्रथमः'' इति सूत्रं सङ्गच्छते। यथा पतति कूलं, शुष्यन्ति व्रीहयः। अस्मिन् विषये हेलाराजः कथयति चेतनो यदि युष्मदस्मद्भ्यामन्येन प्रतीयते तर्हि मध्यमस्य न प्रयोगः। यथा 'भवान् पचतीति'। अत्र प्रथमपुरुषस्य प्रयोगः। अत्र चैतन्यं पदान्तरगम्यम्। अत्र चैतन्यांशसंस्पर्शेन साध्यसाधनभावमात्रं बोधयति। अस्य मते बुध्यते जानाति इत्यादि क्रियाणां व्यवहारे प्रथमपुरुषस्य चैतन्येन सम्बन्धोऽस्ति। परन्तु भर्तृहरिः भिन्नमतं प्रतिपादयति। तस्य मतानुसारेण बुध्यते जानाति प्रभृतिज्ञानार्थकधातूनां प्रयोगे यद्यपि प्रथमपुरुषस्योत्पत्तिर्दृश्यते तथापि प्रथमपुरुषेण चैतन्यस्य व्यापारो न व्यक्तीभवति। यतो हि अत्र धात्वर्थश्चैतन्यलक्षणो न तु प्रथमपुरुषस्यार्थः। स च चैतन्यलक्षणः कर्तृकर्मणोरवच्छेदकः। अतो बुद्ध्यादिधातुवशाच्चैतन्यस्य प्रकाशो न तु प्रथमपुरुषप्रयोगात्। अतएव बुद्ध्यादिभिन्ना ज्ञानार्थधातुविषये प्रथमपुरुषस्य प्रयोगान्न चैतन्यस्याभिव्यक्तिः। अतोऽयं सिद्धान्तो जातो युष्मदस्मद्भ्यामेव यत्र चैतन्याभिव्यक्तिस्तत्रैव मध्यमोत्तमयोः प्रयोगः। अतो भर्तृहरिणोक्तम् – **बुद्धिजातानि चितिभिः प्रथमे पुरुषे सति।**
**संज्ञानार्थेन चैतन्यस्योपयोगः प्रकाश्यते ।।**

*(वाक्यपदीय-पुरुषमुद्देशः, श्लो. ३)*

अस्मिन् विषये महाभाष्यकारस्य भगवतः पतञ्जलेः स्वतन्त्रं मतं विद्यते। तस्य मते प्रवृत्तितः चेतना उपलभ्यन्ते। अतो ''धातोः कर्मणः समानकर्तृकादिच्छायां वा'' (पा.सू.३/१/७) इति सूत्रे लिखितम् – ''तुल्यं हि कारणं चेतनावति देवदत्ते कूले चाचेतने। किं कारणम् ? इच्छायाः हि प्रवृत्तितः उपलब्धिर्भवति। एतदर्थं वार्त्तिकमपि तत्र भाष्ये प्रदत्तम् – ''सर्वस्य चेतनावत्त्वात्'' वार्त्तिकमिदं कारकाय भाष्यकारेण प्रत्यपादि अथवा सर्वं चेतनावत्। अतः अस्मिन् विषये कंसकाः सर्पन्ति, सुवर्चला आदित्यमनुपर्येति, अयस्कान्तमयः संक्रामति, ऋषिः पठति, शृणोति ग्रावाणः इत्युदाहरणानि प्रदत्तानि। अत्र कैयटः कथयति तत्रैव प्रदीपे – ''आत्माद्वैतदर्शनेन सर्वत्र चैतन्यं विद्यते। वेदः सर्वभावानां चैतन्यं प्रतिपादयतीति। परन्तु वैचित्र्येण च पदार्थानामुपलम्यात् सर्वचेतनधर्मप्रसङ्गः सर्वत्र नोद्भावनीयः।

**समीक्षा –**

एतस्मादनुशीलनाज्ज्ञायते भर्तृहरिपतञ्जल्योः मतभेदो दृश्यते यतो भर्तृहरिः प्रथमपुरुषविषये आरोपितचैतन्यं नाङ्गीकरोति। परन्तु भगवान् पतञ्जलिः अचेतने चेतनस्य उपचारमङ्गीकृत्य ''दामहायनाच्च'' (पा.सू.४/१/२७) सूत्रे कथयति – ''अचेतनेष्वपि चेतनवदुपचारो दृश्यते। तद् यथा – स्रस्तान्यस्यां बन्धनानि, स्रस्यन्तेऽस्या बन्धनानीति।

किञ्च यथा अद्वैतवेदान्ते ''ब्रह्म वा इदमग्र आसीत् (वृ.१/४/१) तदात्मानमेवावेदहं ब्रह्मास्मीति (वृ.उ.१/४/१) ''सदेव सोम्येदमग्र आसीदेक मेवाद्वितीयम् (छा.उ. ६/२/१) इत्यादिश्रुतिवाक्यैः ब्रह्मणः प्राधान्यं तथा प्रक्रियादृष्ट्या दर्शनदृष्ट्या च सर्वेषां पुरुषाणामभेदेऽपि अस्मदः एव प्राधान्यम्। एवं च प्रलयसमये यथा परंब्रह्मणि सर्वे विलीयन्ते तथा अस्मदि सर्वेषां लयः। अतः प्रथममध्यमोत्तमपुरुषाणां यौगपद्येन प्रयोगे क्रिया उत्तमपुरुषमेवानुसरतीति प्रतिपादितचरोऽयं विषयः। इममाशयमभिलक्ष्य व्याकरणदर्शनभूमिकायां रामाज्ञापाण्डेयमहोदयैः पुरुषविचारप्रसङ्गे लिखितम् – ''एषां प्रादुर्भावोऽपि 'एकोऽहं बहुस्यां प्रजायेम' इति श्रुतिमूलक एव । तथाहि अहमित्यर्थो यदा स्वात्मनि अनेकत्वं द्रष्टुं स्पन्दते तदा स एवैको द्विधा भवतीति युष्मदर्थं प्रसूते। एवमहं त्वञ्चेति द्वयोरुद्भवो भवति। तत्र सत्त्वादुत्तमः पुरुषो रजसो मध्यमस्तमसस्तु प्रथमः पुरुषः उद्भवति। अतः अस्मदर्थेन परचैतन्यस्य युष्मदर्थे तु अपरचैतन्यस्य तथा प्रथमपुरुषेण प्रकृतेः ग्रहणं कर्तव्यमिति। यद्यपि मध्यमोत्तमयोः एव चैतन्यविषयत्वं तथापि प्रयोगानुसारेण प्रथमपुरुषोऽपि चैतन्यविषयतामुपगच्छति इति महाभाष्यकारमतं समीचीनं प्रतिभातीति ममाशयः ।।

उपाचार्यः, नव्यव्याकरणविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी



# संस्कृतसाहित्ये बाणवाण्या वैशिष्ट्यम्

डॉ. सुशान्तकुमारराजः

संस्कृतसाहित्यजगति ये ये प्रतिभावन्तः कविप्रजापतयः स्वकीयकाव्यरचनबलेन सकलपाठकानां मनसि अविस्मरणीयाः सन्ति, तेषु गद्यकाव्यस्याप्रतिमकवीश्वरः बाणभट्टः प्रमुखतमं स्थानं भजते। कविरयं न केवलं गद्यकथासाहित्यिकः आसीदपितु स एकाधारेण नाट्यकारः, गद्यकविः, पद्यकविः, वैयाकरणः, दार्शनिकश्चासीदिति संस्कृतसाहित्येतिहासान्वेषणेन ज्ञायते। बाणभट्टेन खलु हर्षचरित-कादम्बरी-चण्डीशतक-पार्वतीपरिणय-मुकुटतडिकाख्यानि पञ्चसंख्याकानि काव्यानि विरचितानि सन्ति। यद्यप्येतानि सर्वाण्यपि काव्यानि समुपलभ्यन्ते, तथापि **प्राधान्येन व्यपदेशा भवन्ती**ति न्यायेन तत्प्रणीतयोः कादम्बरी-हर्णचरितयोः गद्यकाव्ययोः प्रतिष्ठाद्वारा स प्रमुखतः गद्यकविरूपेण सकलसाहित्यिकसंसदि प्रतिष्ठितोऽस्ति। अष्टोच्छ्वाससंबलिते हर्षचरितकाव्ये कविरयमादौ स्वीयं जीवनचरितं समुपस्थाप्य हर्षवर्द्धनस्य जीवनवृत्तान्तमवर्णयत्। कादम्बरी भवति बाणभट्टरचनासु सर्वोत्कृष्टा इत्यत्र नास्ति कोऽपि सन्देहावकाशः। न चेयं कादम्बरी केवलं बाणभट्टस्य रचनासु सर्वोत्कृष्टा अस्ति, अपितु निखिलसंस्कृतगद्यकाव्येषु प्रमुखरचनारूपेण अङ्गीकृताऽस्ति सकलसमालोचकैः। इदानीं यावत् संस्कृतवाङ्मये यानि यानि गद्यकाव्यानि निर्मितानि सन्ति, तेषु एकमपि कादम्बर्या साकं तुलां न बिभर्त्ति। कादम्बरी सततं सरसमधुरपदावलीसङ्गता रुचिररसभावाभिरम्या चास्ति। कादम्बरीकथावस्तुनि निमग्नानां जनाना हृदयः सततं समुत्फुल्लितो भवति। अतः अभियुक्तवचनं प्रामाणिकरूपेणात्राङ्गीक्रियते यत्- **कादम्बरीरसज्ञानामाहारोऽपि न रोचते** इति। पाठान्तररूपेणापि कथ्यते - **कादम्बरीसुधापानाद् बुभुक्षाऽपि प्रशम्यति** (सं.सा.इतिहासः पृ. ३५१)इति। बाणस्य प्रसस्तिप्रप्रसङ्गे साधूक्तं भूषणभट्टेन- **कादम्बरीरसभरेण समस्त एव मत्तो न किञ्चिदपि चेतयते जनोऽयम्** इति। अतः बाणभट्टो नितान्तमेव अद्वितीयप्रतिभासम्मन्नकविरासीत। तेन हि कथासाहित्ये नूतनयुगस्य प्रवर्तनं कृतम् । तस्य हि वर्णनानैपुण्यं नितान्तमेव सकलसहृदयशलाघ्यम्। तस्यैव कथा यथा स स्वयमेव कथयति- **रसेन शय्यां स्वयमभ्युपागताऽभिनवा वधूरिव मनोहारिणी हृद्या च विद्यते** इति।

किञ्च बाणभट्टात्परं यद्यपि दण्डि-धनपाल-वादीभसिंह-वामन-विश्वेश्वरपाण्डेय-अम्बिकादत्तव्यासप्रमुखा नैके गद्यकवयोऽवलोक्यन्ते संस्कृतसाहित्यजगति, तथापि सूर्यप्रतिमस्य बाणभट्टस्य प्रतिभा समीपे इमे खलु खद्योतकप्रायाः सान्ति। ते सर्वे अपि परवर्तिनः कवयः बाणभट्टमेवानुकर्तुं प्रयत्नशीलाः समनुभूयन्ते । अतस्तैः परवर्तिभिः काव्यकारैः यत्किमपि वर्ण्णितम्, तत् सर्वं कविप्रजापतेः बाणभट्टस्य रचनाछायारूपेण सहृदयानां सविधे प्रतीयते। अतः यथार्थेन उच्यते **बाणोच्छिष्टं जगत्सर्वम्** (सं.सा.इति. पृ. ३५०)इति। अयमेवाशयोऽस्य वाक्यस्य यत्, अस्मिन् रङ्गमञ्चायमाने विरिञ्चिप्रपञ्चे नास्ति एवंविधो विभावो यो बाणेन सफलतया वर्णितो न विद्यते। अतः परस्मिन् काले यः कोऽपि कविः तस्य काव्ये किमपि वर्णयितुं यतेत, स नियमेनैव बाणभट्टवर्णितालङ्कारादिकलापक्षस्य रसभावादिहृदगतभावपक्षस्य चोच्छिष्टं भुञ्जीत। परमार्थतो बाणभट्टोत्तरकाले विविधकवभिः निर्मितानि गद्यकाव्यानि सर्वाण्येव तदपेक्ष्यया निकृष्टानि प्रतीयन्ते। परवर्तिकाव्येषु विद्यमानानि च सर्वाण्यपि वर्णनानि कथमपि बाणवर्णनानि नातिक्रामन्ति। अनन्ता वाणीविलासा( ध्वन्या. ४. पृ. २६६) इति आनन्दवर्धनेन ध्वन्यालोके प्रोक्तम्। परन्तु बाणेन वाण्याः अन्तिमसीमानं यावद् धावितमिति अभ्युह्यते । कविसंवादविषयेऽपि काव्यशास्त्रे विमर्शो दृश्यते। यद्यपि बाणेन साकं परवर्त्तिनां बहूनां कवीनां संवादो विद्यते, तथापि कस्यापि एकस्य कवेः एकमपि वर्णनं बाणवर्णनसमकक्षं न भजते इति कृत्वा बाणस्य वाणी नितरां श्लाघ्याऽस्ति।

बाणभट्टस्य सहृदयहृदयारविन्दविकासकारिशब्दार्थमयरचना सततं रसभावध्वन्यलङ्काराद्यलंकृता सति

लावण्यवतीतरुणीव जागतिकसकलजनमनोहरणे समर्था भवति। अतः बाणभट्टस्य वाण्याः महत्त्वं मुक्तकण्ठम् उच्यते-

**रुचिरस्वरवर्णपदा रसभाववती जगन्मनोहरन्ती ।**

**सा किं तरुणी ? नहि नहि वाणी बाणस्य मधुरशीलस्य ।।**[१] (शारङ्गधरपद्धतिः - ५२५)

महाकविर्बाणभट्टः न केवलं काव्यरचनाक्षेत्रे निपुणः आसीत्, स राजनीतौ अपि धुरन्धरः आसीदतः राजसभायामस्य समादरोऽभूत् । स स्वकीयपाण्डित्यबलेन स्थाण्विश्वरस्य राजधान्यां माहाराजहर्षवर्द्धनस्य पण्डितसभायां सर्वोत्कृष्टं पदम् अलंचकार। इतिहासपर्यालोचनया ज्ञायते यद् बाणभट्टोऽयम् अस्य विशिष्टपदस्य प्राप्तये बहूनां समस्यानां सम्मुखी अप्यासीत् । अस्य विरोधिनः कवयः विद्वांसश्च राज्ञः सविधे गत्वा बाणभट्टस्य महती निन्दा अकुर्वन् । ततः राजा अस्य कवेः उपरि अतीव कुपितोऽभूत्, परन्तु तस्य राज्ञः सहोदरभ्राता कृष्णराजः बाणभट्टं प्रति राज्ञः वैरभावं निराकृतवान्। तदा राजा बाणभट्टस्य विषये सर्वं किमपि ज्ञात्वा तं दोषमुक्तं चकार। तदा बाणभट्टोऽपि राज्ञः हर्षवर्धनस्य हर्षवर्द्धनाय **हर्षचरितम्** इति नामधेयं विशालगद्यकाव्यं विरचितवान्। ततः तस्य कवित्वं पाण्डित्यं च दृष्ट्वा राजा हर्षवर्द्धनोऽपि बाणभट्टं राजसभायां पुरस्कृतवान् बहुमानितवान् च । कविरयं सर्वदैव विविधानां शास्त्राणाम् अन्वेषणकर्मणि आत्मानं नियोजयति स्म । कस्यापि नूतनविषयस्योपरि ज्ञानोपार्जनाय तस्य उत्कण्ठा सर्वदा बलवती आसीत्। अतः तेनैवोक्तं हर्षचरिते- **अति परवानस्मि कुतुहलेन**(हर्ष. पृ-१) इति।

कविर्बाणभट्टस्य कालः सप्तमशतकः इति गण्यते । जीवनस्य प्रथमावस्थायामेव स स्थाण्वीश्वरेशस्य श्रीहर्षस्य सभापण्डित आसीदिति तस्य हर्षचरितस्य पंक्तौ ज्ञायते । यथा-

**तथापि नृपतेर्भक्त्या भीतो निर्वहणाकुलः ।**

**करोम्याख्यायिकाम्भोधौ जिह्वाप्लावनचापलम् ।।** इति ।।

राजा श्रीहर्षः ६६३ तमे विक्रमाब्दे राज्ये अभिषक्तो भूत्वा ७०५ तमे विक्रमाब्दे शरीरं त्यक्तवान्। चीनयात्री ह्वेनसांगः ६८६ मितविक्रमाब्दतः ७०२ विक्रमाब्दं यावत् समग्रभारतवर्षं पर्यटयन् श्रीहर्षं बहुशः स्मरतीति संस्कृतसाहित्यान्वेषणेन ज्ञायते। पञ्चविंशतिवर्षवयस्कोऽयं बाणभट्टः तदा ६७० मते विक्रमाब्दे हर्षस्य सभायां सभापण्डितरूपेण प्रविष्टोऽभवदिति कृत्वा तस्य जन्म ६४५ मिते विक्रमाब्दे अभूदिति निर्णीयते(सं.सा.इ. पृ. ३४८)। हर्षनिधनानन्तरमपि यद्यपि बाणभट्टो जीवित आसीत्, तथापि तस्य हर्षचरितं कादम्बरी चेति उभौ काव्यौ अपूरणीयौ एवास्ताम् । अतो हि स ७१५ मितवैक्रमाब्दमभितस्तनुं तत्याजेत् इत्यनुमीयते। कादम्बर्या उत्तरभागस्य बाणसुतो भूषणभट्टः सखेदं पितरं स्मरति । यथा-

**याते दिवं पितरि तद्वचसैव सार्द्धं विच्छेदमाप भुवि यस्तु कथाप्रबन्धः।**

**दुःखं सतां तदसमाप्तिकृतं विलोक्य प्रारब्ध एष स मया न कवित्वदर्पात्।।** इति।

भारतीयकाव्यशास्त्रसमीक्षकालङ्कारिकाचार्यैः गद्यपद्यमिश्रत्वेन काव्यस्य श्रेणी त्रिधा विभाज्यते । प्राच्यकवयः छन्दोबद्धपद्यमाध्यमेन नैकविधानि महाकाव्यानि खण्डकाव्यानि स्तोत्रकाव्यानि मुक्तककाव्यादीनि च व्यरचयन्। पद्यान्येव गद्यापेक्षया सहृदयानां मनांसि समधिकप्रभवयितुं सफलानि भवन्ति। पद्येन कवयः सहजेन स्वीयं मनोभावं प्रकटयितुं प्रभवन्तीति कृत्वा पद्यविरचनेऽनेककवीनामाग्रहो दृश्यते । तस्मादेवकारणात् संस्कृतसाहित्ये कालिदास-माघ-श्रीहर्ष-भारविप्रमुखप्राचीनकविप्रणीतानि नैकविधानि महाकाव्यानि दृश्यन्ते। प्राचीनदृश्यकाव्येषु अपि प्रमुखतः छन्दोबद्धानि पद्यानि परिदृश्यन्ते। परन्तु समुचितवर्णसंघटनयुक्तगद्यमाध्यमेन साहित्यनिर्माणमतीव क्लेशकरमिति हेतोः प्राचीनकालतः स्वल्पा एव गद्यकवयो दृश्यन्ते। तथापि गद्यनिर्माणे एव सर्वेषां कवीनां कवित्वं परीक्ष्यते इति साहित्यसमालोचकानां मतं विद्यते। तस्मात् सप्रमाणमुच्यते अभियुक्तवचनम्- **'गद्यं कवीनां निकषं वदन्ती'**ति।

गद्यं हि भाषायाः प्राकृतिकं स्वरूपम्। तद्विपरीतं पद्यं तु तस्य निर्मितं रूपमेवेति मनुते। किं गद्यमिति प्रश्ने

आचार्यदण्डिः काव्यादर्शे कथयति- **अपादपटसन्तानो गद्यम्** इति। वस्तुतस्तु पदानां वृत्यनुरूपप्रयोगः पद्यम्, यत्र तु स्वातन्त्र्येण प्रयोगः क्रियते तदेव गद्यमिति ज्ञायते। गद्यरचनामाध्यमेन वेदेषु संवादानां प्रस्तुतिकरणं विद्यते। वैदिकवाङ्मयादेव यद्यपि गद्यरचनायाः आरम्भस्तथापि लौकिकगद्यकाव्यलेखकेषु सुबन्धुरेव प्रथमः कविर्वर्त्तते। संस्कृतवाङ्मये गद्यात्मक-कथानामाविर्भावो विक्रमसंवत्सरात् चतुःशत वर्षपूर्वमेव सञ्जात इति ऐतिह्यविदामभिमतमस्ति । वैयाकरणकात्यायनेन स्वीये वार्त्तिके ग्रन्थेऽपि आख्यानाख्यायिकयोः पृथक्तया निर्देशो विहितः। वैयाकरणमहाभाष्यकारेण पतञ्जलिनाऽपि स्वीये ग्रन्थे ययाति-यवक्रीत-प्रियङ्गुप्रभृतीनि आख्यानोदाहरणानि वासवदत्तासुमनोतरा-भैमरथीप्रभृतीनि च आख्यायिकोदाहरणानि प्रदत्तानि सन्ति । अनेन खलु आख्यानाख्यायिकयोः परवर्त्तिभिः काव्यसमीक्षकैः गद्यस्य भेदत्वेन परिकल्पिततया गद्यसाहित्यस्य प्राचीनत्वं सुस्पष्टं प्रतीयते । किञ्च पतञ्जलिना उदाहृतानामाख्यानाख्यायिकानां सम्प्रत्यनुपलब्धत्वात्सुबन्धुविरचितं कथाकाव्यं वासवदत्ताभिधानं प्रथममिति अवसीयते । प्राचीनकाले वासवदत्ताप्रेमसम्बन्धिनी कथा सुप्रसिद्धा आसीत्। एतद्विषये कालिदासेनापि सूचितमस्ति। परन्तु सुबन्धुना स्वीयायां वासवदत्ताभिधानायां कथायां प्रसिद्धाया वासवदत्ताकथाया न कोऽपि सम्बन्धः स्थापितोऽस्ति। तत्र केवलं नाममात्रे साम्यं स्थापितं वर्तते। इयं कथा सुबन्धोः स्वबुद्धिप्रभवा विद्यते। यद्यपि सुबन्धुना कथाकाव्येऽत्र प्रतिपदं शब्दचमत्कारः प्रदर्शितस्तथापि नैकेषु स्थलेषु अर्थौचित्यं कविना नानुसृतं दृश्यते। अतः परवर्तिकाले सा कथा न तथा लोकप्रिया अभवत्।

वस्तुतः 'प्रत्यक्षरश्लेषमयप्रपञ्च विन्यासवैदग्ध्यनिधिं प्रबन्धम्' इति काव्यशास्त्रीयप्रतिज्ञां परिपालयितुं काव्यकर्त्ता महान्तं प्रयत्नं विहितवान्। परन्तु नैकेषु स्थलेषु श्लेषे कविना प्रसादो न संरक्षितो दृश्यते। अतः भावाकलने प्रखरशेमुषीशालिनामपि विपश्चितां मतिः घूर्णिता दृश्यते । तस्मात् कथाकाव्यरचना अत्यन्तं कष्टसाध्या सम्पद्यते गद्यकवीनां कृते । गद्यसाहित्ये कव्येः सुबन्धोः परं बाणभट्टस्य नाम आकर्ण्यते। महाकवेर्बाणभट्टस्य काव्यरचनाशली अपूर्वा अद्वितीया चास्ति । गद्यरचनाशैलीविषये तेन स्वयमपि हर्षचरिते प्रकटीकृतः, यथा-

**श्लेषप्रायमुदीच्येषु प्रतीच्येष्वर्थमात्रकम् ।**
**उत्प्रेक्षा दाक्षिणात्येषु गौडेष्वक्षरडम्बरम् ।।** इति (हर्ष. १.७)

एतस्य कवेः रचनायाम् अक्षराडम्बरदर्शनं न कुत्राऽपि शिथिलीभवति। अपि च पूर्ववर्तिनां सामयिकीनां च शलीनां विश्लेषणेन कविवरोऽयं एकां समन्वयात्मिकां शैलीं प्रवर्तयामास। तन्मतानुसारेण तदेव काव्यं श्रेष्ठं भवति, यत्र नूतनोऽर्थः, अग्राम्या शब्दाः, अश्लिष्टश्लेषः, सुलभो रसः, विटाक्षरबन्धश्चेति पञ्चानामपि तत्त्वानां सहभागिता भवेत्। यत्रैते पञ्चगुणाः समाहृत्य तिष्ठन्ति सैव रचना सहृदयश्लाघ्या भवति। यथोक्तम्-

**नवोऽर्थो जातिरग्राम्या श्लेषोऽक्लिष्टः स्फुटो रसः।**
**विकटाक्षरबन्धश्च कृत्स्नमेकत्र दुष्करम् ।।** इति। (हर्ष. १.८)

बाणभट्टस्य सर्वासु च रचनासु भाषा-भावयोः नित्यसम्बन्धः समनुभूयते। तत्र भाषा भावेन सह तथा भावश्च भाषया सह नितरां शोभेतेतराम् । किञ्च तन्निर्मितकाव्येषु शब्दार्थयोरुभयोरपि कमनीयः सन्निवेशो विद्यते। अतस्तस्य प्रतिभा सर्वव्यापिन्यासीत्, या वर्णनीयं सकलविषयं नितरां पुङ्खानुपुङ्खतया सर्वाङ्गीणतया च प्रकटीकरोति । सा प्रतिभा कमपि सन्दर्भं न कदाऽपि परित्यजति। तत्र बाणभट्टस्य विषये एतदेव कथयितुं शक्यते यत्, यत् किमपि तत्त्वम्, यत्किमपि दृश्यम्, यत्किमपि वस्तु, या काऽपि घटना, या काऽपि स्थितिः, यः कोऽपि लौकिकलोकोत्तरो वा विषयश्च तस्य सम्मुखं वर्णनीयत्वेन समागतः, तेषां समेषामपि वर्णनं सफलतया तेन विहितम्। तत्परवर्त्तिभिः कैरपि कविभिः न तथा सर्वाभिमुखिवर्णनं विहितं दृश्यते ।

प्रकृतेः कोमलकोठरयोः उभयोरपि चित्रणं बाणभट्टेन महति साफल्येन कृतम्। यथा- **कुसुमसमययुगमुपसंहारन्नजृम्भत ग्रीष्माभिधानः संफुल्लकाधवलाट्टहासो महाकालः** इत्यादिना हर्षचरिते सफलतया समाकलितं ग्रीष्मवर्णनम्, **अस्ति जलनिधिवेलावलग्ना..........प्रेताधिपनगरीव**

**सदन्निहितमृत्युभीषणा महिषाधिष्ठिता च, कात्यायनीव प्रचलीतखड्गभीषणा** इत्यादिना कादम्बर्यां विहितं विन्ध्याटवीवर्णनञ्च प्राकृतिककठोररूपवर्णनेपूत्कृष्टतममस्ति। किञ्च कादम्बरीस्थिते जावालिमुनेः आश्रमवर्णनं शान्तस्वभानुकीर्तनमेव प्रकटीकरोति सहृदयानां हृदयकन्दरेषु । यथा- **परिचितशाखामृगकरातिनिष्कास्यमानप्रवेश्यमानजरदन्धतापसम्** (काद. पृ. १२२)इति। अत्र खलु कवेः यदि क्वचिद् विन्ध्यपर्वतस्य भयप्रदाया अरण्याया वर्णनं तथा साहसप्रेमशालिनः शवरसैन्यस्य च पुलककारिवर्णनं पाठकस्य चित्तं चोरयति, तर्हि क्वचिद् धर्मस्य साक्षान्मूर्त्तेः दाक्षिण्यस्यावतारभूतस्य आध्यात्मिकतायाः प्रत्यक्षीभूतस्य जावालिमुनेः स्वरूपनिर्वचनं तथा तस्य पूतभूतस्याश्रमस्य कमनीया शोभा च सामाजिकानां मनांसि आकर्षयतः। यदि क्वापि विरहविधुरायास्तपस्विन्या महाश्वेताया वर्णनं हृदयमानन्दयति तर्हि क्वापि लोकोत्तरसौन्दर्यशालिन्याः कादम्बर्याः प्रेमपूर्णा कथा सहृदयानां हृदयाभ्यन्तरमावर्जयति।

महाकविना बाणेन प्रायः सर्वेषामपि अलङ्काराणां प्रयोगः सुष्ठुतया स्वकीयायां रचनायां तत्तत्प्रसङ्गेषु कृतः। सर्वत्रैव अलङ्काराणां मधुरो झङ्कारः पाठकानां मनो विलोड़यति। शब्दालङ्कारेषु श्लेषालङ्कारस्य तथैव अर्थालङ्कारेषु च उपमारूपकोत्प्रेक्षाऽपह्नुतिविरोधाभसपरिसंख्यादीनामपि प्राधान्यमवलोक्यते। काव्यसौन्दर्योपासकोऽयं कवीश्वरो बाणभट्टः अलङ्कारयोजनायां सिद्धहस्तः आसीत्। कवेः कल्पनया उत्प्रेक्षालङ्कारस्योदाहरणं यथा-

**जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्ष्यया।**
**दृशैव कोपरुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम्।।** इति।(काद. श्लो. ३)

किञ्च रागाभिव्यञ्जिकावृत्तेः कमनीयाभिव्यञ्जनाऽपि सामाजिकानां हृदयकन्दरमभिव्यनक्ति। किं बहुना- सामाजिकहृदयानां मदमत्तकारिणी कादम्बरीयं मदिरेति चिन्तयन्ति काव्यसमीक्षका विपश्चितः। कादम्बरी साक्षात् सुधा इति मन्यन्ते केचित् । अत्र सहृदयहृदयहारिण्या उपमायाश्चमत्कारिणः श्लेशस्य कमनीयभूतायाः परिसंख्याया विलक्षणो विन्यासो वरीवर्त्ति । विरोधाभासस्यापि रुचिरा संयोजनाऽत्र विलोक्यते । रसनोपमाया अपि रमणीयो विन्यासो दृश्यते। हृदयपक्षस्य चित्रणेऽपि कविः कुशली विद्यते। कविः स्वीयपात्राणां हृदयाभ्यन्तरे प्रविष्ट इव प्रतीयते। तत्रायं कविः तत्तदवस्थासु प्रादुर्भूताः अन्तःकरणवृत्तिः समुचितेन पदसंयोजनेन परिप्रकाशयति। पुण्डरीकमवलोक्य महाश्वेताया हृदयकन्दरे प्रादुर्भूतानां भावानां भव्या छविः सहृदयानां हृदयाभ्यन्तरेऽङ्किता जायते।

पुनश्चास्य पुण्डरीकस्य विरहे महाश्वेतायाः मनसि जातो विकारः बाणकविवर्णितोऽनुपमोऽस्ति । अनपत्यतावशाद् विषादग्रस्तस्य तारापीडस्य नरपतेः हृदयगताः कोमलभावाः नितरां सन्ति हृद्याः । शृङ्गाररसचित्रणेऽस्ति कविः धुरन्धरः । चन्द्रापीडस्य काव्यनायकस्य प्रथमदर्शनात् परं स्वदेशं प्रति प्रत्यावृत्ते च तस्मिन् कादम्बर्याः काव्यनायिकाया अन्तरे विद्यमानानां भावानां चित्रणं कविना यत्कृतं तत्खलु सर्वेषां पाठकानां हृदयान् विदलयति। अतः शृङ्गाररसप्रधानेयं कादम्बरीति चिन्त्यते । करुण-वीराद्भुत-शान्तादयोऽङ्गत्वेन सन्ति वर्णिताः । अत्रत्यं कथावस्तु अतिजटिलमस्ति । एकैकस्याभ्यन्तरेऽन्याः कथाः प्रविष्टाः सन्ति । परन्तु मुख्यकथावस्तुनः समुद्घाटने प्रत्येकं कथायाः महती आवश्यकताऽस्ति । कथावस्तूनां यथाक्रमं विकासं विधाय वस्तुसङ्कलने कविः स्वीयां चतुरतां प्रदर्शितवान् ।

चरित्रचित्रणेऽपि कविना नैजं चातुर्यं प्रकटीकृतम् । कादम्बर्याः समस्तानि चरित्राणि तथा चित्रितानि सन्ति, यथा तेषां किञ्चिदपि कार्यं विरुद्धं नास्ति । हारीतमुनेः महानुभावता, तारापीडस्य परोपकारिता, शुकनासस्य विश्वसनीयता, कपिञ्जलस्य मित्रवत्सलता, महाश्वेतायाः शारीरिक-मानसिकपवित्रता पत्रलेखायाः स्वामिभक्तिः चन्द्रापीडस्य महनीयता कादम्बर्या एकतानता च सामाजिकानां हृदयेषु सम्यक्तयाङ्किता भवन्ति । शुकनाशेन चन्द्रापीडाय यो हि उपदेशः प्रदत्तः, स तु सर्वदा सर्वथा अनुपमो विद्यते । अयमुपदेशोऽत्यन्तं महत्त्वपूर्णः तथा मार्मिकोऽस्ति । किञ्च सर्वस्य देशस्य सर्वस्य कालस्य च कृतेऽयं क्षेमप्रदो भविष्यति।

प्रकृतिचित्रणेऽपि बाणोऽस्ति सुमहान् शिल्पी । कादम्बर्याः प्रकृतिचित्रणं रमणीयं सजीवञ्चास्ति । तत्र केचन कवयः प्रकृतेः मनोरमरूपनिरीक्षणे, केचन च प्रकृतेः भयङ्करस्य, अपरे केचन महोर्हस्वरूपस्य निरीक्षणे

सन्ति चतुरस्रा:। परन्तु बाणभट्टस्येदं वैशिष्ट्यं यत् स: मञ्जुलं भयावहं चोभयं दृश्यं निरीक्ष्य तद्वर्णनेन साफल्यं समधिगतवान् । यथा बाह्यप्रकृतिचित्रणे बाण: कुशली अस्ति, तथैव अन्त:प्रकृतिचित्रणेऽपि सुदक्ष:। प्रकृतिचित्रणे, कालिदासात् परं बाणस्यैव स्थानं समुन्नतं दृश्यते । प्रकृतिचित्रणस्य का उपयोगिता इति चेत् इदमेव कथ्यते यदत्र प्रकृतिक्रोडे प्राणी जन्म लब्ध्वा शेषे तत्रैव लीनो भवति । प्रकृतिं विहाय प्राणी मुहूर्त्तमपि स्थातुं न शक्नुयात्। अत: भारतीयकवय: प्रकृतिवर्णने सन्ति सन्नद्धा:। प्रकृतिसम्बन्धयुक्तानां पशुपक्षिणां च महत्त्वमपि कविनाऽनेन प्रतिपादितम् । यथा चोक्तं कादम्बर्याम्- **प्रायेण हि पक्षिण: पशवश्च भयाहारमैथुननिद्रासंज्ञामात्रवेदिनो भवन्ति** (कादम्बरी कथामुखम्)इति । तत्र च उत्तरभागे आश्रमपालितानां पशुपक्षिणां कृते कर्तव्यविषयकविचारं प्रकटीकरोति कवीश्वर:, यथा- **क्षुत्पिपासार्दितानां हि पशुपक्षिणां निर्विचारचित्तवृत्तीनामुपनतेष्वाहारेष्वनुपयोगो न सम्भावत्येव** (काद. उत्तरभाग: पृ- १३५) इति।

कादम्बर्यां विन्ध्याटव्या भयङ्कररूपस्य चित्रणमालोकयन्त: पाठका भवन्ति भयभीताश्चकिताश्च। अत्रत्या संघटना अत्यन्तं विकटा विद्यते। किञ्च महर्षिजाबाले: आश्रमस्य यादृशं सात्त्विकं हृद्यं च वर्णनं कृतं कविना, तदाकलनेन कस्य वा सामाजिकस्य मनो विलोडितं प्रभावितं वा न भवेत् ? तपोवनस्य वर्णने यावन्त: प्रभावोत्पादकविषया अपेक्षिता भवन्ति तावतामेकत्रैव वर्णनं विधाय कविरनन्यसाधारणमनुपमं च दृश्यं समुपस्थापितवान् । पाठकैरेतद् वीक्षणीयं यत् कवि: आश्रमस्थवृद्धान्धतापसानां परिचितवानरद्वारेण यष्टिमवलम्ब्याभ्यन्तरागमनस्य बहिर्निगमनस्य च वर्णनं विहितवान्। नानाऋतुरजनीमुखप्रभातचन्द्रोदयप्रभृतीनां प्रकृतिदृश्यानां वर्णनमपि चित्ताकर्षकं विद्यते। जाबल्याश्रमे सूर्यास्तवर्णमपि अत्यन्तं चित्ताकर्षकमस्ति, यथा- **अनेन च समयेन परिणतो दिवस:। नानोत्थितेन मिनिजनेरार्घविधिमुपपादयता य: क्षितितले दत्तस्तम्बरतलगत: साक्षादिव रक्तचन्दनाङ्गरागं रविरुदवहत्**(कादम्बरी- पृ. ६३) इति। अत्र कवे: प्रकृतिचित्रणस्य अपूर्वपाटवत्वं प्रकटीभवति।

एतदतिरिच्य कवे: बाणभट्टस्य पचित्रप्रेमवर्णनमस्ति तात्पर्यपूर्णम् । एतस्य प्रणयो बाह्यचाकचिक्यमुपजीव्य न विद्यते, विद्यते तु प्रबलामनुरक्तिमुपजीव्य । स च द्वयो: हृदययो: अन्तस्तलस्य मिथो बन्धनकारको बहुजन्मपर्यन्तं स्वस्वाभिव्यक्तिकारक: लोकोत्तरानन्दजनको विकारविशेष: । कादम्बर्या: अनुपम: प्रणय: एकस्य जन्मन: सम्बन्धं न स्थापयति अपि तु बहुजन्मन: । प्रसङ्गेऽस्मिन् धर्मशास्त्रीयसिद्धान्तानामुद्भासो विद्यते सर्वेषां सहृदयपाठकानां कृते। मानवेषु तपस्याया: उपयोगिताविषयेऽपि बहुवारमभहितं कविना। यथा चोक्तं कादम्बर्याम्- **जातस्य हि रूपुणविहीनस्यापि जन्मोपनतानि जीवलोकसुखान्यनुभूय शोभते परत्र सम्बन्धी तपश्चरणपरिक्लेश: किं पुनराकृतिमतो जनस्य**(काद. उत्तररभाग: पृ.-२०५)इति।

बाणस्य गद्यप्रतिपादनशैल्यपि परवर्त्तिनां गद्यकवीनां कृतेऽस्ति आदर्शस्थानीया। अयं महाकवि: प्रभावशालिगद्यनिर्माणे नितरां शक्तो विद्यते । यद्यपि केचित् समीक्षका बाणगद्यमत्यन्तं कष्टमिति ब्रूवते तथापि तान् प्रति इदमेव वक्तव्यं यत्ते खलु वास्तवताया दूरे वर्त्तन्ते । भारतीयकाव्यसमीक्षकैरानन्दवर्द्धनमम्मटभट्टविश्वनाथकविराजप्रमुखै: परवर्त्तिनि काले गद्यकाव्यस्य कृते यो हि संघटनानियम उल्लिखित: तत्पूर्वं कविना बाणभट्टेन तत्सर्वमक्षरश आचरितमिति आश्चर्यमावहति । प्रतिपाद्यविषयानुसारेण तेन प्रतिपादन शैली परिवर्त्तिता, येन कविना विन्ध्याटवीवर्णनावसरे दीर्घसमासात्मिका संघटना विहिता तेनैव विरहवर्णनावसरे असमासात्मिका संघटनाऽपि समादृता। स्थलविशेषञ्च समासरहितं वाक्यकदम्बकं विधाय कवि: स्वौचित्यज्ञानस्य पराकाष्ठां प्रदर्शितवान्। परमार्थत: बाणकवे: गद्येषु सूक्ष्मातिसूक्ष्मनिरीक्षणशक्ति: चमत्कारिणी वर्णनशैली प्रभावितशब्दसमूह: कल्पनाप्रसूतलोकोत्तरार्थानामुद्भावना च विशेषभावेनावलोक्यन्ते।

एतस्य कवे: गद्यरचनायां एतादृश: प्रवाहस्तथा प्रभावो विद्यते यत् परवर्त्तिभि: कविभि: प्रयत्ने विहितेऽपि तादृशो गद्यविशेषो न निर्मित: । तथापि कवे: दण्डिन: दशकुमारचरिताख्ये गद्यकाव्ये किमपि वैलक्षण्यमनुभूयते । विशेषत: **दण्डिन: पदलालित्यम्** इति आभाणकं सर्वत्र साहित्यजगति प्रसिद्धा एव । विश्वेश्वरपाण्डेयेन मन्दारमञ्जरीति

नाम गद्यकाव्यं व्यरचि । तेन बहुषु स्थलेषु बाणभट्टस्य शैली अनुकृता दृश्यते तथापि बाणगद्यमिव एतस्य गद्यं प्रभावोत्पादकं नास्तीति समनुभूयते। धनपालेनापि तिलकमञ्जरीनामकं गद्यकाव्यं प्रणीतम् । एवं प्रकारेण बाणानन्तरं अद्ययावत् नैककविभि: विविधानि गद्यकाव्यानि यद्यपि विरचितानि दृश्यन्ते, तथापि तानि सर्वाण्यपि काव्यानि बाणवर्णनमिव न कदाऽपि धाराप्रवाहपूर्णास्थानानि भजन्ते। अत: बाणभट्टस्य व्यक्तित्वं कवित्वं च संस्कृतसाहित्ये जगति विरलतरमेवास्तीति दिक्।

**सहायकग्रन्था:-**


| | | |
|---|---|---|
| १. कादम्बरी | बाणभट्टकृता, | चन्द्रकला विद्योतिनी व्याख्याद्वयोपिता, चौखम्बा प्रकाशनम्, वाराणसी- २२१००१ |
| २. काव्यप्रकाश: | ममटप्रणीत: | सम्पूर्णानन्दविश्वविद्यालय:, वाराणसी, द्वितीयसंस्करणम्-१९९८। |
| ३. काव्यादर्श: | दण्डिप्रणीत: | चौखम्बा विद्याभवन, वाराणसी, संस्करणम्- २००१। |
| ४. दशरूपकम् | धनञ्जयप्रणीत: | चौखम्बा विद्याभवन, वाराणसी, २२१००१, चतुर्थसंस्करणम् । |
| ५. दशकुमारचरितम् | दण्डिप्रणीतम् | चैखम्बा सुरभारती प्रकाशनम्, वाराणसी, द्वितीयसंस्करणम् । |
| ६. ध्वन्यालोक: | आनन्दवर्धनप्रणीत: | चौखम्बा प्रकाशनम्, वाराणसी- २२१००१ |
| ७. महकविर्बाणभट्ट: | डा. उदयनाथझा | जयश्रीप्रकाशनम्, पुरी- १. प्रथमसंस्करणम्-२०१५। |
| ८. संस्कृतसाहित्येतिहास: | आचार्य-लोकमणिदाहालप्रणीत: | चौखम्बा कृष्णदास अकादमी, वारणसी, चतुर्थसंस्करणम्-२०११। |
| ९. साहित्यदर्पण: | विश्वनाथकविराजप्रणीत: | चौखम्बा संस्कृतसंस्थानम्, वाराणसी. वर्षम्- २०११। |
| १०. हर्षचरितम् | बाणभट्टविरचितम् | चौखम्बा सुरभारती प्रकाशनम्, गोपालमन्दिर लेन, वाराणसी । |


उपाचार्य:, साहित्यविभाग:,
केन्द्रीयसंस्कृतविश्वविद्यालय:,



# महाभारते राष्ट्रियभावना

डा.गगनचन्द्र दे

संस्कृतवाङ्मयं खलु भारतीयानां मनोबलम्। मनस औदार्यम् एकानुसन्धित्साञ्च तत् प्रकाशयति। अतो हि विना संस्कृतवाङ्मयं भारतीया संस्कृतिः ज्ञातुं न शक्यते। भारतस्य राष्ट्रियजागरणे राष्ट्रभावनायाः महत्त्वं विद्यते। स्वराष्ट्रस्य भूमि-धर्म-कला-साहित्य-सभ्यतेतिहासादीन् प्रति जनानां मनसि या स्वाभाविकी महत्त्वभावना सैव राष्ट्रियभावनापदेनोच्यते, यया भावनाया वशीभूता जनाः स्वराष्ट्रहिताय स्वात्मानमपि समर्पयन्ति। अस्मद्देशस्य जातीयताबोधे संस्कृतवाङ्मयस्यावदानमस्ति प्रभूतम्। संस्कृतशास्त्रे विविधासु भावनासु जातीयताबोधस्य बीजं निहितं वर्तते। महाभारतं नाम विशालं महाकाव्यं विश्वस्य अनन्तज्ञाननिधानमिदं धर्मार्थकाममोक्षप्रदम्। **यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्**[१], **यतो धर्मस्ततो जयः**[२] इत्यादिषु वाक्येषु जातीयतावादः परिलक्ष्यते।

भारतीयसाहित्यस्य गौरवं खलु महाभारतम्। महाशब्देन अस्य महत्त्वं भारत-शब्देन चास्य भारतीय इतिहास-धर्म-दर्शन-संस्कृति-निधानत्वं सूचितं भवति। अर्थात् संस्कृतवाङ्मयस्य सारभूतमिदं महाभारतम्। सर्वजनप्रियत्वाय निखिलमपि वैदिकं लौकिकं च तथ्यं, शास्त्रसारम्, आख्यानम्, नीतिशास्त्रम्, आचारशास्त्रम् अन्यच्चापि सर्वजनोपयोगितत्त्वम् अत्र संगृह्य प्रस्तूयते। धर्मार्थकाममोक्षाणां पुरुषार्थ-चतुष्टयानां विशदविवरणात्मकं परमरमणीयमादरणीयञ्च महाकाव्यमिदं वर्त्तते। अतएवोच्यते–

**धर्मे चार्थे च कामे च मोक्षे च भरतर्षभ ।**[३]

पुण्यभूमेरस्याः नाम हि भारतवर्षम्। तस्य विशदं सश्रद्धञ्च वर्णनं वर्त्तते महाभारते। धर्मार्थकाममोक्ष-रूपचतुर्वर्गैरेव मानवजीवनस्य पूर्णता सम्पाद्यते। निखिले जगतीतले केवलं भारते खलु संप्राप्यन्ते एकत्रैव चत्वारः पुरुषार्थः। महाभारते सम्यगेवोक्तम्–

**अत्र ते कीर्तयिष्यामि वर्षं भारत भारतम् ।**
**प्रियमिन्द्रस्य देवस्य मनोर्वैवस्वतस्य च ।।**
**अन्येषां च महाराज क्षत्रियाणां बलीयसाम् ।**
**सर्वेषामेव राजेन्द्र प्रियं भारत-भारतम् ।।**
**महेन्द्रो मलयः सह्यः सुक्तिमान् ऋक्षवानपि ।**
**विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्वताः ।।**
**नदीं पिबन्ति विपुलां गङ्गां सिन्धुं सरस्वतीम् ।**
**गोदावरीं नर्मदाञ्च बाहुदां च महानदीम् ।।**[४]

देशस्य सूच्यग्रभूमिरपि अपरित्यज्येति महाभारते सम्यगेवोक्तम् । महाभारतस्य निर्देशस्तावत् मृत्तिकातो माता, स्वर्गतः पिता उच्यतरतस्थाने स्थापनीयेति ।

**यावद्धि तीक्ष्णया सूच्या विध्येदग्रेण केशव ।**
**तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान् प्रति ।।**[५]
**माता गुरुतरा भूमेः स्यात् पितोच्चतरस्तथा ।**[६]

भारतीयजीवनस्येतिहासो महाभारतम् । भारतीयायाः सभ्यतायाः संस्कृतेश्च भव्यस्वरूपबोधाय ग्रन्थरत्नमिदं प्रतिभातम् । कौरवपाण्डवानामितिहासवर्णनमेव महाभारतस्य नोद्देश्यम् । महर्षिव्यासो महाभारते भारतस्य संस्कृतेः समाजस्य धर्मस्य च विस्तृतं वर्णनं चकार । महाभारतस्य शान्तिपर्वणि मानवजीवनस्य नानाविधसंलापानां समाधानं दृश्यते । महाभारते राष्ट्रियभावना परमोदात्ता, विशुद्धा ओजस्विनी च वर्त्तते। राष्ट्रस्य केन्द्रं राजैव, सः प्रजानां सर्वतोभावेन हितं

करोति । राजनि कुपथगामिनि सञ्जाते राष्ट्रमेव विनश्यति । राष्ट्रस्य स एव नेता भवितुमर्हति यः कृषिकार्यस्याभिज्ञो भवति । तथाहि उद्योगपर्वणि –

**न नः समितिं गच्छेत् यश्च नो निर्वपेत् कृषिम् ।।**

महाभारते परोपकार एव परमपुण्यरूपेण निर्धारितः, परेषां पीडनञ्च पापकर्मरूपेण स्वीकृतम् ।

नीतिशिक्षाविषयकाणि सुभाषितानि यथा – **यस्मिन् यथा वर्त्तते यो मनुष्यस्तस्मिन् तथा वर्त्तितव्यं स धर्मः। मयाधर मायया वर्त्तितव्यः साध्वाचारः साधुना प्रत्युपेयः।**[७]

राजनीतिविषयकाणि सूक्तानि यथा –

**राजा प्रजानां प्रथमं शरीरं प्रजाश्च राज्ञोऽप्रतिमं शरीरम् ।**
**राज्ञा विहीना न भवन्ति देशा देशैर्विहीना न नृपा भवन्ति ।।**[८]
**राज्ञा हि पूजितो धर्म ततः सर्वत्र पूज्यते ।**
**यद् यदाचरते राजा तत् प्रजानां स्म रोचते ।।**[९]

पुरुषार्थेन विना मानवः उन्नतिं न प्राप्नोति । अस्मिन् संसारे यो मानवो कर्मणि दक्षो निपुणो वा विद्यते स एव जीवति । पुरुषार्थहीनोऽलसो मानवो पशुः अस्ति । यतो हि जगति हस्तलाभादधिको लाभो न वर्त्तते । उक्तमपि –

**अहो सिद्धार्थतां तेषां येषां सन्तीह पाणयः ।**
**अतीव स्पृहये तेषां येषां सन्तीह पाणयः ।।**
**न पाणिलाभादधिको लाभः कश्चन विद्यते ।।**[१०]

पाश्चात्यानामयं समुद्घोषो यत् पाश्चात्यशिक्षानन्तरं भारते स्वतन्त्रताचिन्ता समुद्भूता । ततः पूर्वं समग्रे भारते भारतीयताबोधो पाश्चात्यमतानुसारिणामेतद्दशीयानामपि बहुनामेतदेव वक्तव्यमित्यहो दौर्भाग्यपरम्परा चरमं चाज्ञानं तेषाम् । महाभारतयुद्धप्रारम्भात् प्रागेव धृतराष्ट्रेण प्रश्नः कृतः सञ्जयं प्रति –

**यदिदं भारतवर्षं यत्तेदं मृच्छितं बलम् ।**
**यत्रातिमात्रलुब्धोऽयं पुत्रो दुर्योधन मम ।।**
**यत्र गृद्धाः पाण्डुपुत्रा यत्र मे सञ्जते मनः ।**
**एतन्मे तत्त्वमाचक्ष्व त्वं हि मे बुद्धिमान् मतः ।।**[११]

व्यासः कर्मवादी आचार्यः । कर्मणा एव मानवः उन्नतिं कीर्त्तिं च लभते । कर्मणः पराङ्मुख मानवो मानवो न विद्यते । यद्यथा – **प्रकाशलक्षणा देवा मनुष्याः कर्मलक्षणा ।**[१२]

महाभारतस्य गुणगौरवं समीक्ष्य वेणीसंहारे भट्टनारायणो व्यासवचनं सुधामधुरमिति संस्त्रवीति –

**श्रवणाञ्जलिपुटपेयं विरचितवान् भारताख्यममृतं यः ।**
**तमहमरागमकृष्णं कृष्णद्वैपायनं वन्दे ।।**[१३]

अधुनातनकाले बहवः देशाः देशान्तरेण सह युद्धं समाचरन्तः प्रजायाः प्राण-धनादीनां च नष्टं कुर्वन्तः अत्यन्तं नाशमनुभवन्तश्च संदृश्यन्ते ।अस्याः स्थितेः मूलकारणं लोपभूयिष्ठवैदेशिकनीतिरेवेति । यतो हि कापि समस्य वा भवतु पराक्रमापेक्षया उपायेनैव साधयन्ति दूरदर्शिनः । अत एव हितोपदेशे प्रतिपादितम् –

**उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः ।**[१४]

महाभारतस्यानुशीलनेन ज्ञायते यत् राष्ट्रनीत्याचरणं साम-दान-भेद-दण्डाख्यानां चतुर्विधोपायानाम् आधारेणैव कृतमित्यवबुध्यते । यथा –

**साम्ना भेदेन दानेन दण्डनैव च भारत ।**[१५]

शत्रुपक्षसैन्यं प्रबले सति आदौ सामोपायः प्रयोज्यः इति, तद्विफले सति दाननीतिरादर्तव्येति ज्ञायते । अथ च भेदसहितं दानं

सर्वदा प्रशंसास्पदमित्यावेदयति । यथा –

**दण्डो हि बलवान् यत्र तत्र साम प्रयुज्यते ।**
**प्रदानं सामपूर्वञ्च भेदमूलं प्रशंस्यते ।।**[१६]

शुक्रनीतिकारेणापि अयमेवाशयः प्रकटितः । यथा –

**प्रबलेऽरौ सामदानौ सामभेदोऽधिके स्मृतौ ।**
**भेददण्डौ समे कार्य्यौ दण्डः पूज्यः प्रहीनके ।।**[१७]

पाण्डवाः कौरवैः सह सन्धिं कर्त्तुं श्रीकृष्णं दूतरूपेण दुर्योधनसमक्षं प्रेषयन् । तयोर्विवादं शान्त्या परिष्कर्तुं श्रीकृष्णेन सर्वादौ **भवन्तौ परस्परं भ्रातरौ** इति सामोपायः, तद्विफले सति **पाण्डवानां पक्षे एतावन्तः राजानः सन्तीति** संश्रवणेन भेदोपायं तदपि विफलीभूते **केवलं पञ्चग्रामान् प्रयच्छतु** इति दानोपायमपि प्रायुज्यत । किन्तु युद्धचिकीर्षुणा दुर्योधनेन प्राप्ततिरस्कारो श्रीकृष्णः दण्डः एवात्र युक्ततमोपायो राज्यरक्षार्थमिति निर्णीयत । शस्त्रमुद्यम्य आयास्यमानः पुत्रादिबन्धुरपि भूतिमिच्छता राज्ञा हन्यः एवेति च प्रबोधयति । यथा महाभारते –

**पुत्रः सखा वा भ्राता वा पिता वा यदि वा गुरुः ।**
**रिपुस्थानेषु वर्तन्तो हन्तव्या भूतिमिच्छता ।।**[१८]

धर्ममूलं जीवनं हि मानवव्यक्तित्वस्य विकासः । जीवनस्य एवंविधोदात्तदर्शननिदर्शनं भारतीये सम्यक्तया दृष्टिगोचरं भवति । धर्मनिष्ठो जनः आसक्तिहीनो भवति । आसक्तौ मग्नस्य बुद्धिः प्रणष्टा भवति । तदा च मनुष्यं कामविकारादयः अन्धीकुर्वन्ति । रागाल्लोभो जायते, लोभान्मोह उत्पद्यते । महोभिभूते सति कर्त्तव्यज्ञानं न भवति । अहर्निशं पापाचरणे संलग्नस्य जनस्य कृते सर्वा अपि सुखशान्तयः स्वप्नमरीचिकावत् प्रतिभान्ति । पापस्यापाकरणाय धर्माचरणमेव महाभारते समर्थितमस्ति । यथा –

**धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।**
**धर्म एको मनुष्याणां सहायः पारलौकिकः ।**
**धर्मे स्थितानां कौन्तेय सिद्धिर्भवति शास्वती ।।**

महाभारतस्यानुशासनपर्वणि राष्ट्रहितायोक्तम् –

**राजा राष्ट्रहितापेक्षं सत्यधर्मणि कारयेत् ।**
**भयार्त्तानां भयात् त्राता दीनानुग्रहकारणात् ।**
**कार्याकार्यविशेषज्ञो नित्यं राष्ट्रहिते रतः ।।**[१९]

यथोक्तं चाणक्यसूत्रे – **दया धर्मस्य जन्मभूमिः।**[२०] महभारते यथा –

**न हि प्राणान् प्रियतरं लोके किंचन विद्यते ।**
**तस्माद् दयां नरः कुर्याद् यथाऽऽत्मनि तथापरे ।।**
**न ह्यतः सदृशं किञ्चिदिह लोके परत्र च ।**
**यत् सर्वेष्विह भूतेषु दया कौरवनन्दन ।।**[२१]

महाभारतम् भारतस्योज्ज्वलज्ञानपरम्पराया अमृतं स्मारकं वर्त्तते । वैदिक-लौकिकोभययुगयोः संघर्षमयस्य कालस्य अधिकाराणां परिसीमनार्थं महाभारतं सन्धिपत्रमिव वर्त्तते । महाभारतस्य वास्तविकमुद्देश्यं मनुष्यजातेः भौतिकजीवनस्य निस्सारताप्रदर्शनपूर्वकं मोक्षमार्गस्योपदेशो वर्त्तते । एतस्मादेव कारणात् काव्यसमीक्षकाः महाभारतं शास्त्ररसप्रधानं मेनिरे। तथा चाह आनन्दवर्धनाचार्यः ध्वन्यालोकस्य चतुर्थे उद्योते –

महाभारतेऽपि शास्त्रकाव्यरूपच्छायान्वयिनि वृष्णिपाण्डवविरसावसानवैमनस्यदाविनि समाप्तिमुपनिबन्धना महामुनिना वैराग्यजननं तात्पर्यं प्राधान्येन स्वप्रबन्धस्य दर्शयता मोक्षलक्षणः पुरुषार्थः शान्तो रसश्च मुख्यतया सूचितः । महाभारतस्य

माहात्म्यं वर्णयता तद्रचनाकार: प्राह आदिपर्वण: द्वितीयेऽध्याये –

**यो विद्याच्चतुरो वेदान् साङ्गोपनिषदो द्विज: ।**
**न चाख्यानमिदं विद्या नैव स स्याद् विचक्षण: ।।**
**अर्थशास्त्रमिदं प्रोक्तं धर्मशास्त्रमिदं महत् ।**
**कामशास्त्रमिदं प्रोक्तं व्यासेनामितबुद्धिना ।।**
**श्रुत्वा त्विदमुपाख्यानं श्राव्यमन्यत्र रोचते ।**
**पुंस्कोकिलगिरं श्रुत्वा रुक्षा ध्वांक्षस्य वागिव ।।**

यदि कश्चिद् भारतभूमावागत्य भारतवर्षस्य सनातनम् आदर्शमनङ्गीकृत्य प्रतिष्ठां लब्धुमिच्छति अखण्डं च भारतं खण्डीकर्त्तुं वाञ्छति तदा तादृशस्य राज्ञ: स्थानमत्र भारतभूमौ नास्तीति । अखण्डतैव जातीयतावादस्य मूलभित्ति तत्र तत्र विविधवर्णनासु कविभि: प्रतिफलितम् । स्वदेशप्रेम जातीयतावादस्य मूलमित्यपि तैरङ्गीकृतम् । एतावदालोचनेन इदं सिद्धान्तयितुं शक्यं यत् महाभारते समाहिता राष्ट्रियभावना महत्त्वपूर्णेति शम् ।

**सन्दर्भसूची –**

१. महाभारतम्, आदि. –६२/५३
२ महाभारतम्, कर्ण. –३९/४९
३. महाभारतम्, आदि. –६२/५३
४ महाभारतम्, भीष्म. –६/५, ६, ११, १४
५. महाभारतम्, अनु. –१२७
६ महाभारतम्, वन. –३२३
७. महाभारतम्, उद्यो. –३/७७
८ महाभारतम्, शा. –६७/५९
९. महाभारतम्, शा. –७५/४
१०. महाभारतम्, शा. –१८/११, १२
११. महाभारतम्, भी. –९/१-२
१२. महाभारतम्, अश्व. –४३/२
१३. वेणीसंहारम् –१/४
१४. हितोपदेश: –१/१७२
१५. महाभारतम्, भी. –९/७
१६. महाभारतम्, शा. –१०२/२७
१७. शुक्रनीति: –४/१/३९
१८. महाभारतम्, आदि. –१४०/५२
१९. महाभारतम्, अनु. –१४५/९४
२०. चाणक्यसूत्रम् –२४९
२१. महाभारतम्, अनु. –११६/८-१०

**सहायकग्रन्थसूची –**

१. महाभारत - आदिपर्व, भीष्मपर्व, अनुशासनपर्व, शान्तिपर्व, वनपर्व, उद्योगपर्व, अश्वमेधपर्व - गीताप्रेस्, गोरखपुर, सं.–२०४५
२. शुक्रनीति: – डॉ.जगदीशचन्द्र मिश्र, चौखम्बासुरभारती प्रकाशन, वाराणसी - २०१९
३. संस्कृत-सूक्ति-सुरभि: – सम्पा. डॉ.जीतराम भट्ट: । दिल्ली-संस्कृत-अकादमी - २०१५-१६
४. वेणीसंहारनाटकम् – चौखम्बा सुरभारती प्रकाशन, वाराणसी -१९९५
५. हितोपदेश: – पं.नारायश शर्मा, विद्याभारती, कटक - २०१०
६. चाणक्यसूत्रम् – चौखम्बा संस्कृत प्रतिष्ठान, वाराणसी –२००२

सहाचार्य:, संस्कृतविभाग:
सबं सजनीकान्तमहाविद्यालय:, पश्चिममेदिनीपुरम्, पश्चिमवङ्ग:



# न्यायशास्त्रस्य विविधोपयोगित्वम्

डॉ. महेशझा

**न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।**
**उपासनैव क्रियते श्रवणानन्तरा गता ।।**

भारतीयानामस्माकं कृते चतुर्विधपुरुषार्थसम्पत्तिरेव जीवनसार्थक्यं पूर्णत्वञ्च । ते च पुरुषार्थाः धर्मार्थकाममोक्षात्मकाः । तत्र आद्यत्रयं वर्तमानजीवनसम्बद्धं मोक्षश्च परमपुरुषार्थः । वेदोपजीविनां दर्शनानां परमं लक्ष्यमात्मतत्त्वस्वरूपविस्फोरणपूर्वकनिःश्रेयससाधनमेव । वृहदारण्यकोपनिषदि मैत्रेयीव्राह्मणे याज्ञवल्क्येनोक्तम्-आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः मैत्रेय्यात्मनो वाऽरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितं भवतीति । नूनमस्माकं सामाजिकानां कृते अयं भवति सारतमोपदेशः ।

संसारेऽस्मिन् सर्वेषां प्राणिनां सुखप्राप्तये दुःखनिवृत्तये च निसर्गत एव जायमाना प्रवृत्तिः दृश्यते । तत्रापि यादृशं सुखमवाप्तुं यः प्रयतते स एव तं सुखमनुभूय ततोऽप्यधिकं सुखं प्राप्तुं प्रवर्तते । न कोऽपि तस्मात् विरमति । प्राणिनामयं स्वभावः यत् ते प्राप्तसुखापेक्षया अधिकं सुखम् अभिलषन्ते, प्राप्तदुःखनिवृत्यपेक्षया अधिका दुःखनिवृत्तिः अभिलषन्ते । दुःखपङ्कनिमग्नप्रपञ्चे अनादिकालादेव नैरन्तर्येण सुखप्राप्तिकामनया जीवाः प्रयतमानाः सन्ति, केऽपि जीवाः दुःखं नेच्छन्ति, परन्तु भौतिकजीवने क्षणिकसुखेन सह अनवरतरूपेण दुःखं प्राप्नुमो वयम् । तत्र इदं स्पष्टं कारणं यत् यं पदार्थं वयं सुखमनुमिनुमः तत्सुखाभासः, वस्तुतः तत् दुःखमेव । अस्मात् दुःखात् विनिर्मुक्तये दार्शनिकाः शास्त्रकाराः वैज्ञानिकाः विविधविचक्षणाः मनीषिणः कृतप्रयत्नाः प्रयत्नशीलाश्च विद्यन्ते । क्रमेऽस्मिन् केचन मणिमन्त्रतन्त्रविधानं मन्वानाः केचन औषधिं स्वीकुर्वाणाः, केचन आत्मतत्त्वसाक्षात्कारं मण्डयमानाः दृश्यन्ते । इत्थमनादिकालादारभ्य विचारोऽयं प्रवृत्तः यत् आत्यन्तिकी दुःखनिवृत्तिः सुखप्राप्तिर्वा कथमवाप्नुयादिति । तदर्थं मार्गान् अन्विच्छन्तः ऋषयः स्व-स्वमतानुसारं विभिन्नान् पथः प्रदर्शयामासुः । फलतः भारतीयवैज्ञानिकमण्डले न्यायवैशेषिक - सांख्ययोग - पूर्वमीमांसा-उत्तरमीमांसा-बौद्ध-चार्वाक-जैनप्रभृतीनि विविधदर्शनानि आविर्बभूवुः । वस्तुतः मानवाः यदि सुखं वाञ्छन्ति तर्हि सर्वप्रथमं पदार्थानां तत्त्वज्ञानं नितरामपेक्षितं विद्यते । पदार्थतत्त्वज्ञानानन्तरमेव सांसारिकव्यवहाराणां कर्त्तव्याकर्त्तव्यबोध-पुरस्सरं प्रतिपालनं कृत्वा आत्यन्तिकदुःखनिवृत्तिरूपपरमपुरुषार्थस्वरूपं मोक्षं जनाः प्राप्नुयुः, यल्लक्ष्यं नहि केवलं नैयायिकानामपितु प्रायः सर्वेषां दार्शनिकानां वरीवर्त्ति ।

इत्थमनेकविधमर्थमर्थयमानानां मानवानां हितसाधनैकव्रतिनः महर्षयः नानाविधान् मोक्षोपायान् प्रदर्शयितुकामाः विविधशास्त्राणि निरमाशिषुः । तानि च न्यायभाष्यकृता वात्स्यायनेन अर्थशास्त्रकृता कौटल्येन च विद्योद्देशप्रकरणे ''आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वतीति भागचतुष्टये प्रविभक्तानि । तत्रान्वीक्षिकी न्यायशास्त्रम्, त्रयी - श्रौतार्थनिरूपणपराणि मीमांसादिशास्त्राणि, वार्त्ता - कृषिवाणिज्यादिधनागमोपायप्रतिपादकानि शास्त्राणि, दण्डनीतिश्च राष्ट्रव्यवस्थाप्रतिपादकं राजनीतिशास्त्रम् ।

तत्र प्रथमतया निर्दिष्टमान्वीक्षिकीशास्त्रं परमकारुणिकेन महामुनिना गौतमेन तापत्रयपराहतानां संसारिणां सर्वविधदुःखोपशान्तये प्रवर्तितम् । आत्मादितत्वज्ञानप्रतिपादकत्वान्न्यायदर्शनमिदं यथाऽध्यात्मविद्या तथैव लौकिकविद्यापि संशयप्रयोजनादीनां तत्त्वव्युत्पादकत्वात् । पुराणं न्यायो मीमांसा धर्मशास्त्राणीति श्रुत्या, त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिश्च शाश्वतीम् । आन्वीक्षिकीं चात्मविद्यां वार्त्तारम्भांश्च लोकतः । इत्यादि स्मृत्या, अङ्गानि वेदाश्चत्वारो मीमांसान्यायविस्तरः । धर्मशास्त्रं पुराणं च विद्या ह्येताश्चतुर्दश । आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रयः । अर्थशास्त्रं चतुर्थं च विद्याह्यष्टादशैव ताः । इत्यादिपौराणिकवचनेन च न्यायशास्त्रस्य यथाऽध्यात्मविद्यात्वं प्रतिपादितं भवति तथैव सुप्राचीनत्वमपि । विद्यास्थानानि

चतुर्दशप्रतिपादितानि सन्ति –

**''पुराणतर्कमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ।।''**

सर्वेषु विद्यास्थानेषु आन्वीक्षिक्यपरपर्यायस्य न्यायस्य वैशिष्ट्यं सर्वोपरि वर्तते । विद्यास्थानं शब्दस्य अर्थस्तु वेदनं विद्या, तच्च न घटादिवेदनमपितु पुरुषार्थसाधनवेदनम् । तथा च पुरुषार्थसाधनपरिज्ञानोपायत्वं विद्यास्थानत्वम् इति लभ्यते । एतेषु विद्यास्थानेषु वेदप्रामाण्यहेतुत्वान्न्यायशास्त्रस्य महत्त्वमधिकं विद्यते । अत एवाभिहितं जरन्नैयायिकैः जयन्तभट्टैः ''न्यायविस्तरस्तु मूलस्तम्भभूतस्सर्वविद्यानां वेदप्रामाण्यरक्षाहेतुत्वादिति । इत्थं न्यायशास्त्रमान्वीक्षिकीविद्यात्वेन प्रथितम् । आन्वीक्षिकीशब्दस्य व्युत्पत्तिरेवं भाष्यकृद्भिः कृता दृश्यते - प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा तया प्रवर्तत इत्यान्वीक्षिकी न्यायविद्या न्यायशास्त्रमिति । प्रत्यक्षागमाश्रितमित्यस्य प्रत्यक्षागमाविरोधीत्यर्थः । तेन ''आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना । यस्तर्केणानु-सन्धत्ते स धर्मं वेद नेतरः'' ।। इति मनुस्मृतौ तर्कपदेनानुमानात्मिका अन्वीक्षा विवक्षिता इति भाष्यकारः अभिप्रैति । एतेन अनुमानप्रमाणव्युत्पादकं शास्त्रमान्वीक्षिकीत्युक्तं भवति ।

न्यायशास्त्रस्य विविधनामान्तराणि अपि सुप्रसिद्धानि सन्ति । न्यायदर्शनमिदं न्यायविद्या, प्रमाणशास्त्रम् । हेतुशास्त्रम्, तर्कशास्त्रम्, न्यायविस्तरः, योगः, वाको वाक्यमित्यादिशब्दैरपि व्यपदिश्यते । योगात्मकव्युत्पत्तिदृष्ट्या केचन न्यायशब्दं व्याख्यान्ति - नीयन्ते प्राप्यन्ते विवक्षिताः अर्थाः सिद्धिं प्रति येन असौ न्याय इति । भाष्यकाराः अपि न्यायपदं यौगिकरुढ़िविचारेण विवृण्वन्तः ''प्रमाणैरर्थपरीक्षणं न्यायः'' इति रीत्या स्फोरयन्ति । ''प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि तैरर्थस्य परीक्षणं परीक्षा'' इति तात्पर्यटीकाकारः, ''पञ्चरूपचतुरूपो वा हेतुर्न्यायः'', प्रतिज्ञाद्यवयवसमूहो वा न्यायः इत्यपि टीका दृश्यते । तथा च पञ्चावयवात्म-कन्यायव्युत्पादकत्वादस्य शास्त्रस्य न्यायविस्तरः इत्यपि व्यपदेशो वर्तते । एतावता परार्थानुमानं न्यायः इति प्रतिपादितं भवति । एवं परार्थानुमानवत् प्रतिज्ञादिपञ्चकसमुदायोऽपि न्यायशब्देन व्यपदिश्यते । अयं न्यायः प्रत्यक्षादिनिखिलप्रमाणमूलकतया परमन्यायत्वेन व्यपदिष्टः भाष्यकारेण । न्यायशास्त्रस्य पक्षप्रतिपक्षभावेन विचारप्रधानतया परार्थानुमानस्य प्राधान्यात् परार्थानुमानस्य च न्यायसाध्यत्वात् न्यायप्रधानमिदं शास्त्रमिति गोतमीयशास्त्रस्य न्यायशास्त्रमिति विशेषतः संज्ञा विद्यते ।

''समस्तप्रमाणव्यापारादर्थाधिगतिर्न्यायः'' इति आह वार्तिककारः उद्योकरः । आगमः प्रतिज्ञा, हेतुरनुमानम्, उदाहरणं प्रत्यक्षम्, उपमानमुपनयः इत्येवं सर्वेषां प्रमाणानां न्याये प्रवृत्तिरस्तीति प्रमाणचतुष्टयव्युत्पादकत्वादिदं शास्त्रं प्रमाणशास्त्रमिति व्यपदेशं लभते । ''योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्विजः'' इति मनुस्मृतितः अस्य न्यायशास्त्रस्य हेतुशास्त्रमित्यपि व्यपदेशः आसीदित्यवगम्यते ।

प्रमाणप्रदर्शिते विषये युक्तायुक्त विचार एव तर्क इत्युच्यते । स च तर्कः प्रमासाधनभूतानां प्रमाणानामनुग्राहकः, अत एव इति कर्तव्यता भवति तर्कः । तथा च तर्कव्युत्पादकत्वादस्य शास्त्रस्य ''तर्कशास्त्रम्' इत्यपि व्यपदेशः अस्ति ।

एवमेव प्रतितन्त्रसिद्धान्तलक्षणसूत्रभाष्ये ''पुरुषकर्मादिनिमित्तो भूतसर्गः इति योगानाम्'' इत्युक्तत्वात् न्यायशास्त्रमिदं ''योग'' इत्यपि व्यपदेशं लभते । एवमेव सनत्कुमारपृष्टेन नारदेनोक्तं - ''ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थम् इतिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यम्'' इति । इत्थं ''वाकोवाक्यम्'' इत्यपि न्यायशास्त्रस्य व्यपदेशः अस्ति ।

न्यायदर्शनस्य प्रमाणमीमांसा तत्त्वमीमांसा ज्ञानमीमांसा च सारल्येन स्व-स्वाभिप्रायप्रकटनार्थं सकलशास्त्रकारैः लोकैश्च समाद्रियन्ते । अत एव न्यायशास्त्रं समस्तशंकानिवर्तकतया आगमादिरक्षणार्थं सुतरामुपयुज्यते इति हेतोः सर्वत्रैव निर्णये कर्तव्यतया आपतिते पञ्चविधान् न्यायावयवान् सत्परामर्शसिद्धानादृत्य योऽर्थः निर्णीतो भवति स एव ज्यायान् इत्यभिलक्ष्य सर्वत्र न्यायविद्यानिबन्धकृद्भिः समादृता दृश्यते । तस्मात् न्यायविद्यामधिकृत्य भाष्यकारस्य वात्स्यायनस्य - ''प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् । आश्रयः सर्वधर्माणां विद्योद्देशे प्रकीर्तिता'' । इत्युक्तिः सर्वथा समीचीनैव

प्रतिभाति अनया च सर्वविद्याश्रेष्ठत्वमस्याः प्रतिपादितम् । इदं न्यायशास्त्रं सर्वविद्यानां कथं प्रदीपः इत्युक्ते समाधानं भवति - न्यायशास्त्रोपवर्णितप्रमाणानि उपजीव्यैव सर्वासामितरविद्यानां प्रवर्तमानत्वात् प्रदीपः । किञ्च द्रव्यगुणकर्मणाम् अभिमत–अनभिमतोपायतापरिज्ञानात् प्रदीपः । विद्याव्युत्पाद्यानां विषयाणां विधेयतया विशेष्यतया वा उपकारी भवतीति उपायः सर्वकर्मणाम् । विद्यया प्रवर्तनायां कर्तव्यायां सहकारित्वात् सर्वधर्माणाम् आश्रयः । इत्थं न्यायविद्येयं लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञा-वाक्य-क्रियावैशारद्यं च करोति । तदुक्तं कामन्दकीयनीतिसारे – आन्वीक्षिक्यात्मविद्यास्यादीक्षणात्सुखदुःखयोः । ईक्षमाणस्तया तत्त्वं हर्षशोकौ व्युदस्यति ।। इति । तत्र आत्मविद्यानाम पदार्थस्वभावविद्या हेतुविद्येति यावत् । तथा च व्यसनेऽभ्युदये च मनसः एकरूपतया अवस्थापनं प्रज्ञावाक्यक्रियावैशारद्यं च आन्वीक्षिक्याः व्यावहारिकं फलम् । प्रज्ञावैशारद्यं कथमान्वीक्षिक्याः व्यावहारिकं फलमित्युक्ते ''मतयो यत्र गच्छन्ति तत्र गच्छन्ति वानराः । शास्त्राणि यत्र गच्छन्ति तत्र गच्छन्ति ते नराः'' ।। इति पद्येन स्फुटं समाधानमभिहितमाचार्यैः ।

इत्थं तर्कशास्त्रस्य समस्तेष्वपि शास्त्रेषु प्रवेशार्थमपेक्षा विद्यते । तर्कशास्त्रस्य परिज्ञानं न केवलं दर्शनशास्त्रे प्रवेशाय अपेक्षितमपितु व्याकरणादिशास्त्रेष्वपि प्रवेशाय नितान्तमावश्यकं भवति । यथा वेदाः भारतीयसंस्कृतेः संस्कृतभाषायाश्चाधारभूतस्तम्भाः विराजन्ते तथैव वेदप्रामाण्यरक्षणार्थं न्यायशास्त्रमपि आधारभूतत्वेन शोभतेतमाम् । सुप्रसिद्धश्च कश्चिदाभाणको विद्यते ''काणादं पाणिनीयं च सर्वशास्त्रोपकारकम्'' इति । काणादं पाणिनीयं च सर्वशास्त्रोपकारकम् इति वदद्भिः आचार्यैः तर्कशास्त्रस्य सर्वोपादेयता सर्वाध्येयता च प्रत्यपादि । सूक्तिघटककाणादपदं न्यायशास्त्रस्याप्युपलक्षकम् । तत्र प्रथमत्वेन काणादस्यैव निर्देशे विशिष्टवैलक्षण्यं प्रतीयते । इदं च वैलक्षण्यं तर्कशास्त्राध्ययनेन बुद्धिनैर्मल्यं त्वरितसूक्ष्मपदार्थग्रहणपाटवमिति । यतो हि सत्यामेव बुद्धिनिर्मलायां निखिलशास्त्रेष्वध्ययनार्थं जनानां प्रवृत्तिसम्भवात् । तदर्थं सर्वप्रथमं न्यायशास्त्राध्ययनं परमावश्यकम् ।

वस्तुतः कणादेन प्रवर्तितं वैशेषिकदर्शनमपि न्यायदर्शनमेव । अत एव न्यायवैशेषिकदर्शनयोः समानतन्त्रत्वेन व्यपदेशः न्यायभाष्यादौ विद्यते । पदार्थानां यथार्थतत्त्वान्वेषणाय एव न्यायदर्शनस्य प्रादुर्भावः । यथार्थतत्त्वान्वेषणमेव भारतीयदर्शनानां लक्ष्यम् । तदर्थं न्यायशास्त्रं सुदृढमाधारं विधिं साधनानि च पुरस्करोति । इयमन्वेषणप्रक्रिया वैदिकयुगादारभ्य अद्यप्रभृतियावत् नैरन्तर्येण प्रचलति । दुःखपङ्कनिमग्नानां जीवानां कल्याणार्थमाकीटपतङ्गानां निःश्रेयससम्पादनार्थं परमकारुणिकैः महर्षिभिः न्यायशास्त्रस्य निबन्धनं विहितम् । यथोक्तं प्रामाण्यवादारम्भे-अथ जगदेवदुःखपङ्कनिमग्नमुद्दिधीर्षुरष्टादशविद्यास्थानेष्वभ्यर्हिततमामान्वीक्षिकीं परमकारुणिको मुनिः प्रणिनाय इति । महर्षिणा गौतमेन प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा- हेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसप्राप्तिर्भवतीति (१-१-१) प्रतिपादिता । पदार्थानां याथार्थत्वेन परिज्ञाने जाते सांसारिकबन्धनकारणीभूतस्य अप्रमेयविषयकभ्रमात्मकमिथ्याज्ञानस्य निवृत्तिर्भवति । न्यायशास्त्रस्य परिज्ञानेन पाञ्चभौतिकेऽस्मिन् शरीरे यत् आत्मत्त्वज्ञानम् अर्थात् शरीर एव आत्मा इति ज्ञानं, तस्य निवृत्तिर्भवति । एवञ्च शरीरविषयकाः ये रागद्वेषादयः हानोपादानात्मकबुद्धिकारणीभूताः ते निवर्तन्ते । प्रवृत्तेः अभावे सञ्जाते तन्मूलकजन्माद्यभावः, जन्माद्यभावे च भवति एकविंशतिदुःखध्वंसः, वस्तुतः दुःखकारणं जन्मादिरेव, कारणीभूतस्य जन्मादेः अभावे सति कार्यभूतस्य दुःखस्य सुतरामेव अभावः जायते । यथोक्तं महर्षिणा गौतमेन ''दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'' (१-१-२) इति । न्यायदर्शनस्य द्वितीयेऽस्मिन् सूत्रे महर्षिणा तत्त्वज्ञानस्य मिथ्याज्ञाननिवृतिद्वारा निःश्रेयसप्रयोजकता प्रतिपादिता । तच्च निःश्रेयसम् एकविंशतिदुःखध्वंसरूपम् । एकविंशतिदुःखञ्च - षडीन्द्रियाणि, षड्विषयाः, षड्ज्ञानम्, शरीरं, सुखं दुःखं चेति । इत्थमेकविंशतिप्रकारकाणां दुःखानां ध्वंसः न्यायमते मोक्षः ।

इदमत्रावधेयम्, यावत्कालपर्यन्तं पदार्थेषु तेषां याथार्थ्यं न गृह्यते, तावत्कालपर्यन्तं ततो भीतिरेव भवति । यतो हि मिथ्याज्ञानम् आत्मनः आरभ्य प्रमेयेषु अपवर्गपर्यन्तेषु अनेकविधं भवति । यथा अनात्मभूतेषु शरीरेन्द्रियादिषु आत्मत्वबुद्धिः, दुःखे च सुखमित्याकारकं मिथ्याज्ञानम्, एवमनित्ये जगति नित्यमिति ज्ञानम्, अत्राणे त्राणमिति ज्ञानम्, त्याज्ये च पदार्थे

अत्याज्यमिति ज्ञानम् । इत्थं जायमानात् विविधमिथ्याज्ञानात् अनुकूलविषयेषु राग: प्रतिकूलविषयेषु च द्वेष: सञ्जायते । रागद्वेषाच्च असत्य-ईर्ष्या-लोभ-मोहादयो दोषा: जायन्ते । दोषै: संयुक्त: पुरुष: हिंसा परदार-परद्रव्यकामनादिषु प्रवर्तते । इत्थं प्रवर्तमान: पुरुष: सांसारिकबन्धनेन बद्ध: सन् दु:खपङ्कनिमग्न: भवति, अनित्येषु पदार्थेषु आत्मत्वमवगाहमान: दु:खसाधनीभूतेषु संलग्न: सर्वदैव दु:खितो भवति । किन्तु न्यायशास्त्रप्रतिपादितपदार्थानां यदा तत्त्वज्ञानं जायते तदा अतद्भूतेषु पदार्थेषु या तत्त्वरूपा भ्रमात्मिका प्रतीति: मिथ्याज्ञानरूपा, सा निवर्तते, तन्निवृत्तौ च रागद्वेषात्मका: दोषा: निवर्तन्ते, दोषनिवृत्तौ च प्रवृत्ते: अपायो जायते, प्रवृत्यपाये च जन्मन: अपाय:, जन्मन: अपाये च एकविंशतिदु:खध्वंस: जायते । ततश्च भवति ऐकान्तिक-आत्यन्तिकदु:खनिवृत्ति: । तादृश ऐकान्तिक-आत्यन्तिकदु:खनिवृत्तिरेव न्यायाभिमतमोक्षपदार्थ: । तदुक्तं महर्षिणा गौतमेन ''तदत्यन्तविमोक्षोऽपवर्ग:'' (१-१-२२) इति । अत्र प्रश्न: समुदेति यत् यद्येतेषां सांसारिकदु:खानां ध्वंस: लौकिकोपायादपि सम्भव: लौकिकोपायश्च शास्त्रीयोपायापेक्षया सहजा, तर्हि किमर्थं न्यायशास्त्राध्ययनं कुर्यात् ? तत्रोच्यते – लौकिकोपायाऽजायमान: दु:खध्वंस: आत्यन्तिको न भवति, ऐकान्तिकश्च न भवति । अत: लौकिकोपायान्नहि आत्यन्तिकी दु:खनिवृत्ति: । अथ च औषधादिप्रयुक्तलौकिकोपायै: बहुप्रयासे कृतेऽपि केषाञ्चिज्जनानां दु:खनिवृत्तिर्भवति, केषाञ्चिज्जनानां च दु:खनिवृत्ति: नैव जायते । इत्थमेकान्तत: निर्णयो नास्ति यत् सर्वेषां जनानामात्यन्तिकी दु:खनिवृत्ति: स्यात् । समस्तानामेव दु:खानां ध्वंसो भवेत्, अनागतानाञ्च दु:खानामुत्पत्ति: न स्यादिति लौकिकोपायेन ईदृशी व्यवस्था लोके न दृश्यते । यद्यपि संसारावस्थायामपि तत्रत्यसाधनै: दु:खस्य निवृत्ति: भवति, तथापि तत्त्वज्ञानातिरिक्तसाधनेन जायमाना दु:खनिवृत्ति: एकान्तत: अत्यन्तत: न भवति । अत: ऐकान्तिकी आत्यन्तिकी च या दु:खनिवृत्ति: तदर्थं न्यायशास्त्रजन्यपदार्थतत्त्वज्ञानं परमावश्यकम् । अस्तु ।

मानाधीना मेयसिद्धि: इति नियमेन प्रमाणमन्तरा अन्येषां पदार्थानां सिद्धि: न सम्भवतीति दार्शनिका: प्रमेयसिद्धये स्वस्वमतानुसारेण प्रमाणान्यङ्गीचक्रु: । गौतमीयन्यायशास्त्रे प्रत्यक्षानुमानोपमानशब्दा: प्रमाणानि (१-१-३) इति सूत्रोक्तानि चत्वार्येव प्रमाणानि स्वीकृतानि सन्ति । अत्रैव अन्येषामन्तर्भावात् अथ चैतेषाम् अन्यत्र अन्तर्भावाभावाच्च । तत्र प्रत्यक्षस्य प्रामाण्यं न केवलं न्यायदर्शने अपितु सर्वेष्वपि दर्शनेषु नि:संशयम् अङ्गीकृतम् । अत: प्रत्यक्षं प्रथमं प्रोक्तं महर्षिणा । किन्तु न्यायशास्त्रे अनुमानस्यैव महत्त्वं सर्वोपरि विद्यते, यतो हि प्रत्यक्षस्यापि प्रामाण्यमनुमानाधीनमेव । अत: प्रत्यक्षपरिकलितमप्यर्थमनुमानेन बुभुत्सन्ते तर्करसिका: । यद्यपि चार्वाकातिरिक्तै: सर्वै: दार्शनिकै: अनुमानस्य प्रामाण्यमङ्गीक्रियते तथापि नैयायिकानामनुमानप्रमाणे विशेषाग्रह: अवलोक्यते यतो हि ईश्वरास्तित्वं भवतु वेदप्रामाण्यादिकं वा भवतु सर्वमपि अप्रत्यक्षवस्तु अनुमानाधीनमेव । अत एव अद्यावधि न्यायशास्त्रीय-तत्त्वचिन्तामणि-अनुमानखण्डघटक-व्याप्ति-पक्षता-हेत्वाभासादिविषयक-पञ्चलक्षणी-व्यधिकरण-प्रकरणम्, सिद्धान्तलक्षणम्, सामान्यनिरुक्ति:, सव्यभिचारप्रकरणम्, सत्प्रतिपक्षगादाधरी प्रभृतिप्रकरणग्रन्था: किञ्च विविधवादग्रन्थाश्च अध्ययनाध्यापनपरम्परायां सुस्थापिता: सन्ति । न्यायशास्त्रीयाध्य-यनाध्यापनपरम्परा अद्यापि समग्रेऽपि भारतवर्षे जीविता जागृता च विद्यते ।

इदं न्यायशास्त्रं प्राचीननव्यभेदेन द्विविधम् । अस्य न्यायशास्त्रस्य धाराद्वयं विद्यते प्राचीनन्याय: नव्यन्यायश्चेति । एतयो: न्याययो: प्राचीनन्याय: प्रमेयप्रधान:, नव्यन्यायश्च प्रमाणप्रधान: । इत्थं महर्षिगौतमादारभ्य श्रीमदुदयनाचार्यपर्यन्तं नैयायिकै: विरचिता: न्यायग्रन्था: प्राचीनन्यायत्वेन ज्ञायन्ते प्रमेयपदार्थप्रधानत्वात् । एवं म.म. गङ्गेशोपाध्यायविरचिततत्त्वचिन्तामणि: तदाधारितपरवर्त्तिनैयायिकै: विरचितन्यायग्रन्थाश्च नव्यन्यायत्वेन ज्ञायन्ते प्रमाणपदार्थप्रधानत्वात् । तदित्थं न्यायशास्त्रं प्राचीन-नव्यनाम्नाऽभिधीयते । प्राचीनन्यायस्य नव्यन्यायस्य च भेद: मुख्यतया तयो: भाषायां शैल्यां च आश्रितोस्ति भेदोऽयं तथा विस्पष्ट: विशदश्च विद्यते यत्साधारणपाठकोऽपि जानाति यदयं नव्यन्याय:, अयं च प्राचीनन्याय इति । नव्यन्यायस्य प्रधानवैशिष्ट्यं सम्बन्धस्य सूक्ष्मविवेचनमस्ति । अस्य कृते स: प्रकारता, विशेष्यता, प्रतियोगिता, अनुयोगिता, अवच्छेदकता, अवच्छेद्यता, निरूपकता, निरूप्यता, संसर्गता, विधेयताप्रभृतिशब्दानां प्रचुरप्रयोगं करोति । इमे शब्दा: वस्तुद्वयस्य मध्ये सम्बन्धस्य सूक्ष्मतमस्वरूपं विवेचयन्ति । विषयप्रतिपादनेऽपि उभयो: धारयो:

अन्तरं परिलक्ष्यते । प्राचीनन्यायस्य विषयप्रतिपादनं स्थूलमस्ति, सः वस्तुनः बाह्यस्वरूपं स्पृष्ट्वा विरमति, अन्तः नहि प्रविशति । नव्यन्यायस्तु विषयस्यान्तस्तलं यावत्प्रविशति, तेन सूक्ष्मविचाराणामभिव्यक्तिः जायते । इत्थं नव्यन्यायशास्त्रस्य विचारशैली तथा अभिव्यञ्जनाशैली उभेऽपि गम्भीरेऽन्तरङ्गे तथा तलस्पशिन्यौ स्तः । नव्यन्यायग्रन्थेषु कोटिक्रमेण बुद्धितैक्ष्ण्यावहाः दुरूहाः विषयाः प्रतिपाद्यन्ते । विशिष्य लक्षणपरिष्कारविषये नव्यन्यायग्रन्थाः सुतरामुपकुर्वन्ति ।

अत्र स्वाभाविकरूपेण प्रश्नः समुदेति यत् प्रमेयप्रधानप्राचीनन्यायानन्तरं प्रमाणप्रधाननव्यन्यायाविर्भावप्रयोजनं किम् ? वस्तुतः तत्र बीजं किम् ? प्राचीनन्याये कापि न्यूनता आसीद् वा ? इति जिज्ञासायामस्यां पठनकाले प्रातःस्मरणीयगुरुवर्यैः म.म. आचार्यविश्वनाथशास्त्रिदातारचरणैः स्फुटं यदुपदिष्टं तदिदानीमपि तथैव स्मर्यते । तेषां मते प्राचीनन्याये पदार्थप्रकाशकशैली यादृशी आसीत् तां श्रुत्वैव कृतकृत्यतां भजमानानां शिष्याणां चेतः यावत् पर्यन्तं शंकाकुलितं नाभूत् नापि च परकीयशङ्काभिः समाक्रान्तं, तावत्पर्यन्तं प्राचीननैयायिकभाषायां यानि यानि प्रमाणप्रमेयसंशयादीनि षोडशतत्त्वानि प्रकाशितानि, तान्याश्रित्य आत्मतत्त्वरूपनिःश्रेयसविषयः चेतसि समारुढ़ोऽभूत् । स च प्राचीनन्यायपद्धत्यैव चिन्तितः सन् कार्यकारी अपि आसीदेव । एतावन्मात्रेणैव ते विद्वांसः कृतार्थतामलभन्त । सारासारविवेकोऽपि जागृतः एतेषु । संसारे स्थिताः अपि ते ते विद्वांसः शान्तिं मतिं चोपलभमानाः महानन्दे निमग्नाः सर्वेषां सामाजिकानां कृते गुरुपदमलङ्कुर्वाणाः वैराग्यं शिक्षयन्तश्च कुपथान्निवर्तकाः वभूवुः । अपि च तान् तान् संसारेषु पतितान् अपि जीवान् संसारसागरात् पारं प्रापयितुं समर्थाः वभूवुः । एवं रीत्या "न नेहाविक्रमनाशोऽस्ति प्रत्यवायो न विद्यते" इत्यादीनि वचनानि सार्थकानि बभूवुः ।

इत्थं यावत्पर्यन्तं भारतवर्षे स्थितेषु देशेषु समाजे स्थितिः जागृताऽभूत् तावत् पर्यन्तं "न मे स्तेनो जनपदे न कदर्यो न मद्यपः । नानाहिताग्निर्नाविद्वान् न स्वैरी स्वैरिणी कुतः ।" इत्यादीनि वर्णितानि तथ्यानि दृश्यतां प्राप्तानि आसन् । किन्तु एवं विधा स्थितिः समाजे तावत्पर्यन्तमेव स्थिरा भवति यावत्पर्यन्तं सामाजिकानां चेतः शंकाक्रान्तं न भवति । अत एव समाजे न्यायशास्त्रमपि प्राचीनभाषायामारब्धम् आत्मस्वरूपप्रदर्शने समर्थम् अपि अभूत् । विषयस्य यथार्थताज्ञापनार्थं यानि वाक्यानि प्रयुक्तानि भवन्ति तेषां स्वरूपं ज्ञापयितुं न्यायेन पञ्चावयवाः-प्रतिज्ञाहेतूदाहरणोपनयनिगमनाख्याः प्रयुक्ताः । प्रतिज्ञायाः निगमनस्य एकरूपतां, उपनयेन पक्षधर्मताम्, उदाहरणेन अन्वय-व्यतिरेकव्याप्ति च ज्ञात्वा निर्णीतोऽर्थः अनिर्णयावस्थां न प्राप्नोत् । फलतः अन्यान्यपि शास्त्राणि न्यायस्य पञ्चावयवसरणिम् अनुकुर्वाणानि स्वकीयं विषयमपि तथैव व्याख्यान्ति स्म । इत्थं प्राचीनन्यायशास्त्रं सर्वत्र विद्वत्समाजे सम्मानमलभत ।

किन्तु यदा किल दैवदुर्विलासात् सामाजिकानां चेतः चंचलं भवत् दुष्पथमारोहति तथा सत्यपि प्राचीनभाषायामाबद्धे न्यायशास्त्रे प्रमेयविद्यासम्बद्धं धर्मशास्त्रम् आत्मबोधकशास्त्रञ्च पुनः कुपथमारोहति तदा शान्तिर्मतिश्च विपरीते भवतः इत्यपि निश्चप्रचम् । एवञ्च दशायामस्यां भगवत्पूज्यपादादिकृतभाष्यसम्मतमर्थं ज्ञात्वापि "अहं वैश्वानरो भूत्वा प्राणिनां देहमास्थितः" इत्यादिवचनश्रवणानन्तरं जनतायां विपरीतधारणा समभूत् । यथा - अहं भगवान् एकः समदृक् सत्यः अन्यत् सर्वं मिथ्या, स एव अहम्, अहमेव सर्वत्र वैश्वानरो भूत्वा अन्नं पचामि, एतादृशम् अर्थमाकलय्य परोऽपि नास्ति कुतः परस्वं, ममैव सर्वम् इत्यादिसमाकलय्य लुण्ठने परदारापहरणे नहि लज्जा नापि पापमतिः, तदा सर्वथा निषिद्ध-अनेकानेकलुण्ठनप्रभृतिकर्माण्यपि धर्माणि एव इति ज्ञात्वा स्तेनकर्म, कदर्यकर्म, मद्यपानप्रभृतिव्यसनानि, स्वैरकर्माणि स्वैरिण्यश्च समृद्धाः दृश्यन्ते । भगवद्भक्तिः, विद्वत्सङ्गतिः, विद्या, मैत्री, शम, दमप्रभृतयः गुणाः अगुणताङ्गताः ।

तथैव अध्यात्मतदतिरिक्तनिगूढ़ार्थौ चिन्तितुमसमर्थाः प्राचीनसिद्धान्तं श्रुत्वा अर्थान्तरं कल्पयित्वा आशङ्कन्ते । तद्यथा–घटो नास्तीति श्रुत्वा घटस्य अभावः घटो नास्तीत्यवबुद्धय नीलघटाभावः, उभयाभावः, अन्यतराभावः, प्रमेयाभावः इत्यादयः सर्वेऽपि अभावाः घटाभावाः सन्त्येव, इत्थं सर्वे घटसम्बन्धिनः अभावाः घटाभावत्वेन संगृहीताः बभूवुः । तथात्वे घटसत्वेऽपि घटो नास्तीति प्रतीत्यापत्तिः जगति भवत्येव ।

इयमेव दुरवस्था धर्मशास्त्रप्रतिपादिते अर्थेऽपि जागृताऽभूत् । तथाहि - अस्पृष्यस्पर्शे शुचितार्थं जलमवगाहन्ते; एवञ्चेदुच्छिष्ठस्पर्शादिप्रसङ्गे शरीरं कथं न अशुद्धं भवति ? कथं न जलेनावगाहनं कुर्वन्ति इत्यादिद्यनेके तर्काः उत्थाप्यन्ते ।

तत्र कारणं विद्यानां वैपरीत्येन अर्थप्रकाशस्योल्लास: जागर्ति । एवं विधोदाहरणेन अनेकान्यहिंसा-शम-दमादिविधायकानि वचनानि विपरीतानामर्थानां प्रकाशनानि बभूवु: । तद्दोषनिराकरणार्थं शुचारुलोकयात्रार्थं भुवनधारणक्षमं राजशासनमपरत्रविपरीतधारणानिवर्तकानां विदुषां समस्तशंकानिवारणक्षमाणां सम्मेलनमा- वश्यकमास्ते । यत: तत्सम्मेलनं विपरीतशंकानां निरसनं यथा भवेत् तथा परिष्कृतभाषया प्रकाश्य तत्तद्जनानां चेत: यथा शंकानिर्मुक्तं भवेत् तथा निगूढ़ं तत्त्वं प्राकाशयत् । तद्दृष्ट्यैव न्यूनवारक-इतरवारकपर्याप्त्यादय: द्वित्वादिसंख्याश्च परिष्कृता: नव्यनैयायिकै: । तथा चाननुगततत्त्वानामनुगतरूपेण विषयप्रकाशनकला यत्र दृश्यते सा नव्यन्यायविद्या ।

वस्तुत: नव्यन्यायस्य भाषागतदुरूहता, सूक्ष्मातिसूक्ष्मतलस्पर्शिविषयप्रतिपादने अत्यन्तसहायिका सती शैलीशालीनतायुक्ता, प्रतिपाद्यपदार्थेषु अन्त: प्रविश्य तेषां सूक्ष्मातिसूक्ष्मनिष्पक्षपरीक्षणं कृत्वा पदार्थतत्त्वस्पष्टीकरणे सफला भवति । एवञ्च प्राचीनन्यायस्य भाषायां सरलायां सत्यामपि शैल्या: प्रायोगिकात् संक्षेपात् साङ्केतिकाच्च विषयगतसूक्ष्मता नि:सृता न भवति । फलत: पदार्थानां यथार्थस्वरूपस्य अप्रकाशितत्वात् नैका: शंका: कुतर्कांश्चो- द्भूता: जायन्ते । परिणामत: सामाजिकानामन्त:करणे भ्रान्तिविस्तारस्यावसर: प्राप्यते नास्तिकै:, येन समाजे कुमार्गगामिनां संख्यावृद्धि: जायते । अस्यामेव परिस्थित्यामाचार्योदयनगङ्गेशप्रभृतय: नैयायिकाचार्या: नव्यन्यायशास्त्रमाध्यमेन परिष्कारपूर्वकं पदार्थानां यथार्थस्वरूपं सामाजिकानामस्माकं पुरत: समुपस्थाप्य भ्रान्तचित्तात् कुपथाच्च संरक्ष्य सन्मार्गं सन्ददर्शु: ।

एतत् सर्वमप्यालोच्य विद्वद्भि: प्रमाणबोधिका, सूक्ष्मतत्त्वप्रकाशिका, प्राचीनार्थसमन्वयभाष्यकर्तृन-व्यन्यायविद्या शरणागतत्वेन स्वीकृता । वस्तुत: नव्यन्यायस्य सर्वस्मिन्नपि शास्त्रे संक्रान्तिरस्ति, यथा पयसि सिताया: समावेश: । अत एव वेदान्तादिदर्शनान्तरं भवतु, साहित्यव्याकरणादिशास्त्रान्तरं वा भवतु सर्वत्र विवेचनाविधौ नव्यन्यायशैली समागच्छति, प्रक्रिया समापतति । नूनं नव्यन्यायेन विना कस्मिंश्चिदपि शास्त्रे तलप्रवेशिता नास्ति सुगमा इति विदुषामनुभव: ।

सन्दर्भेऽस्मिन् पूज्यचरणानां म.म. विश्वनाथशास्त्रिदातारमहाशयानां स्पष्टं मतमासीद्यत् न्यायशास्त्राध्ययनं विना न केवलं लोकव्यवहाराणामपितु वेदानां, विभिन्नदर्शनानाम्, आध्यात्मिकग्रन्थानां श्रीमद्भगवद्गीता - भागवत - रामायणादीनां सूक्ष्मज्ञानं दुष्करं प्रतीयते । अतो नूनं न्यायशास्त्रं सर्वासां विद्यानां प्रकाशकम्, सर्वेषां कर्मणामुपाय: तथा सर्वेषामपि धर्माणामाश्रयभूतमित्यत्र नास्ति संशयावकाश: । एतत् सर्वमालोच्य विश्वगुणादर्श-चम्पूकर्त्तृभिरभाणि– मोहं रुणद्धि विमली कुरुते च बुद्धिं सूते च संस्कृतपदव्यवहारशक्तिम् ।

शास्त्रान्तराभ्यसनयोग्यतया युनक्ति तर्कश्रमो न तनुते किमिहोपकारम् ।। अनेन न्यायशास्त्राध्ययनप्रयोजनं स्फुटं भवति ।

वस्तुत: न्यायशास्त्रस्य मुख्यं प्रयोजनं लक्ष्यं वा किमिति जिज्ञासायाम् ? विवक्षितार्थसिद्ध्यनुकूलप्र- माणादिषोडशपदार्थतत्त्वानि किं वा द्रव्यगुणकर्मप्रभृतिसप्तपदार्थतत्त्वानि: विषया: विवक्षितार्थसिद्धिश्च न्यायशास्त्रस्य फलमिति बहुश: स्वीकृता: । यद्यपि सर्वेऽपि पदार्था: प्रमाणप्रमेययो: अथवा प्रमाण-प्रमेय-प्रमातृषु एव अन्तर्भवन्ति तथापि सामाजिकानामस्माकं बुद्धिवैशारद्यार्थं षोडशपदार्थानां विवरणं प्रस्तुतवान् सूत्रकार: महर्षिगौतम: । कालान्तरे एतेषामपि षोडशपदार्थानां द्रव्यगुणकर्मसामान्यविशेषसमवायाभावाख्येषु सप्तपदार्थेषु अन्तर्भावो विहित: नव्यनैयायिकै: । इत्थं न्यायदर्शनस्य यथा आत्मन: तत्त्वज्ञानमवाप्तिर्लक्ष्यं तथैव आत्मन: तात्त्विकज्ञानस्यावाप्तिं प्रति सद्धेतुभूतानां शरीरेन्द्रियादीनां प्रमेयपदार्थानां ज्ञानमपि साधनभूतं लक्ष्यमेव ।

इदमत्रावधेयम्, भौतिकविकासेन सहाध्यात्मिकविकासस्यावधारणा प्राचीनभारतीयमहर्षिणां विद्यते । ते जानन्ति स्म यद् भौतिकं दृश्यमानं जगत् नहि पारमार्थिकं न वा सदानन्दस्वरूपम् । दु:खपरिणामि सुखं, सुखदु:खमोहात्मकं त्रिगुणात्मकं जगत्क्षणभङ्गुरं विद्यते । अस्य किं प्रयोजनं, किं लक्ष्यं ? क: आनन्द: ? कश्चेतन: ? मृत्यु: क: ? कोऽहम् ? कुत्रत: कुतश्च समागतोऽहम् ? कुत्र वा गन्तव्यम् ? संसारेऽस्मिन् किं कर्तव्यम् ? किमकर्तव्यम् ? किं ग्रहणीयम् ? किमुपेक्षणीयम् ? किं वा हेयम् ? संसारेऽस्मिन् कथं भाव्यम् ? इत्येतद्विषयिणी जिज्ञासैव न्यायदर्शनस्य प्रसवभूमि: ।

नूनं तपोबलेनानुसन्धित्सवो भारतीया: मनीषिण: सृष्टिरहस्यस्य समुद्घाटनं विधाय पुरुषार्थचतुष्टयेन मानवजीवनशैलीं क्रमबद्धां कृत्वा यन्निरतिशयानन्दपरमपुरुषार्थं मोक्षलक्ष्यं कल्पितवान् तत्तेषां परस्सहस्राधिक-वर्षाणामनुसन्धानपरिणामोऽवगन्तव्य: । पश्यन्तु ईशावास्योपनिषद: प्रथमा पङ्क्ति:–

**ईशावास्यमिदं सर्वं यत्किञ्च जगत्यां जगत् ।**
**तेन त्यक्तेन भुञ्जीथा: मा गृध: कस्यस्विद्धनम् ।। इति ।**

इत्थमात्मादितत्त्वज्ञानजन्यपरमपुरुषार्थभूतमोक्ष एव न्यायशास्त्रस्य परमं लक्ष्यम् । वेदप्रामाण्यहेतुत्वात्, सर्व शास्त्रोपकारकत्वात्, सर्वलोकोपकारकत्वात्, मोक्षप्रतिपादकत्वाच्च सर्वेषु शास्त्रेषु मध्ये इदं न्यायशास्त्रं मूर्द्धन्यतमं स्थानं लभते इत्यत्र नास्ति संशयावकाश: । अत: सर्वैरपि ज्ञानपिपासुभि: निजमनीषाया: निकषायितन्नूनमेवाध्येतव्यं न्यायशास्त्रमिति दिक् ।।

अनुशीलिता: ग्रन्था:–

१. न्यायसूत्रम् (न्यायदर्शनम्) चौ.सं.सी.आ.,वाराणसी
२. न्यायभाष्यम्
३. न्यायवार्त्तिकम्
४. न्यायवार्त्तिकतात्पर्यटीका
५. न्यायकुसुमाञ्जलि:
६. पक्षताप्रकरणम्
७. वृहदारण्यकोपनिषद्
८. ईशावास्योपनिषद्
९. मनुस्मृति:
१०. न्यायमञ्जरी
११. कामन्दकीयनीतिसार:
१२. विश्वगुणादर्शचम्पूप्रभृतय:

सहाचार्योऽध्यक्षश्च (नव्यन्यायविभागे)
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी



# संशयपक्षता स्वरूपविमर्श:

डॉ. गणपतिशुक्ल:

श्रीमद् गङ्गेशोपाध्याया: तत्वचिन्तामणिग्रन्थे पूर्वसिद्धान्तव्याप्ती उपपाद्य"व्याप्त्यनन्तरं पक्षधर्मता निरूप्यते " इत्यारभ्य **तत्रनतावत् सन्दिग्धसाध्यधर्मवत्त्वं पक्षत्वमित्यादिग्रन्थेन** संशयपक्षतां निरूपयामासु: । अत्रश्रीमद् गदाधरभट्टाचार्यै: संशयपक्षतानिरूपणावसरे उक्तं यत् स्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताशालित्वं संशयपक्षताया: लक्षणमिति । एवंलक्षणकरणेपर्वत: वह्निव्याप्यवान् धूमादित्यत्र पर्वत:वह्निमान्नवेति संशये अतिव्याप्ति: । तद्वारणार्थं स्वनिष्ठविषयितायां बाधप्रतिबध्यतावच्छेदकत्वस्य निवेश: । एवंपर्वतोवह्निमान् धूमादित्यत्र महानसीयवह्निमान्न वेति संशये अतिव्याप्ति: । तद्दोषवारणाय चरमप्रतिवध्यतायां साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्नत्वस्य निवेश: । तथा च लक्षणप्रकारस्तु बाध्यप्रतिबध्यतावच्छेदकस्वनिष्ठविषयिताघटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयप्रतिबध्यतावच्छेदकावच्छिन्ना प्रतिबध्यता तच्छालीत्वमिति संशयपक्षताया: लक्षणंफलितम् ।

अस्य लक्षणोपरिबहव: क्रोडपत्रकारा:विस्तारेणकोटीरलिखन् । कृष्णम्भट्टीयन्यायरत्नकालीशाङ्कर्यादिग्रन्थकारैरपि साध्यसंशयपक्षतालक्षणविचारे बहुचर्चाकृता । अस्मिन् साध्यसंशयत्वमिति पक्षताया: लक्षणेस्वनिष्ठविषयितायां बाधप्रतिबध्यतावच्छेदकत्वनिवेशे वह्निव्याप्यसाध्यके वह्निमान्नवेति संशयेऽतिव्याप्तिवारणेऽपि पर्वत: महानसीयवह्निमान् धूमादित्यत्र महानसीय वह्निव्याप्यवान् वह्निसामान्याभाववान्वा पर्वतइति संशयेऽतिव्याप्ति: स्यात् । यतो हिस्वनिष्ठा या

बाधनिश्चयप्रतिबध्यतावच्छेदकीभूता विषयिता पदेन महानसीयवह्निव्याप्यविषयिताया ग्रहणं तस्या: महानसीय वह्न्यभाव इत्याकारक बाधनिश्चयनिष्ठप्रतिबन्धकतावच्छेदकत्वेन तद्घटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या तादृशप्रतिबध्यता वह्निसामान्याभाववानित्याकारकबुद्धित्वावच्छिन्ना प्रतिबध्यता तच्छालित्वं महानसीयवह्निव्याप्यवान्वा पर्वतइति संशये सत्त्वात् महानसीयवह्निसाध्यके महानसीयवह्निव्याप्यवान् वह्निसामान्याभाववान्वा पर्वतइति संशयस्य पक्षत्वापत्ति: स्यात् ।

एवंह्रदो वह्न्यभाववान् जलादित्यत्र वह्न्यभावव्याप्यवान् महानसीयवह्निमान्वा ह्रदइति संशये अतिव्याप्ति:। अत्रतादृशविषयिता पदेन वह्न्यभावव्याप्यविषयिताया: ग्रहणात्तादृशविषयिताया: वह्न्यात्मकबाधनिश्चयविष्ठप्रतिबन्ध्कतावच्छेदकत्वेन तद्घटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या महानसीयवह्निरित्याकारकबुद्धित्वावच्छिन्ना प्रतिबध्यता तच्छालित्वं वह्न्यभावव्याप्यवान् महानसीयवह्निमान्वा ह्रद इत्याकारकसंशये सत्त्वात् तादृशसंशयस्य पक्षतात्वापत्तिरतो बाधप्रतिबध्यतावच्छेदकत्वस्यैव निवेश: ।

बाधप्रतिबध्यतावच्छेदकत्वञ्च यदि बाधनिश्चयनिष्ठप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वमित्युच्यते तदा वह्निव्याप्यसाध्यकस्थले वह्निमान्नवेति संशयेऽतिव्याप्ति:स्यात्। यतो हिस्वनिष्ठवह्निविषयतायां स्वनिष्ठवह्न्यभावविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकत्वस्य सत्त्वात् । कथमिति चेत्बाधनिश्चयपदेन पर्वत: वह्निव्याप्याभाववान् वह्न्यभाववांश्चेति समूहालम्बनात्मकबाधनिश्चयस्य ग्रहणात् तन्निष्ठवह्न्यभावविषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यत्वस्योक्तसंशयेसत्त्वादतिव्याप्ति: ।

तद्दोषवारणार्थं बाधविषयित्वावच्छिन्नप्रतिबन्धताविवक्षणे वह्निव्याप्यसाध्यकस्थले वह्निव्याप्याभाववान् वह्न्यभाववांश्चेति समूहालम्बनप्रतिबध्यत्वमादाय उक्तसंशयेऽतिव्याप्ति: या आगतातद्दोषवारणेऽपितत्रैव वह्निव्याप्यसाध्यकस्थले विशिष्टज्ञानमादाय वह्निमान्नवेति संशये अतिव्याप्ति: स्यात् ।यतो हिअत्रविशिष्टज्ञानपदेन वह्निव्याप्याभाववत्पर्वतो वह्न्यभाववानिति ज्ञानस्य ग्रहणम्। एतादृशविशिष्टज्ञानेवह्निव्याप्याभावत्वावच्छिन्नविशेष्यताया: वह्न्यभावत्वावच्छिन्नप्रकारता निरूपितपर्वतत्वावच्छिन्नविशेष्यतायाश्च ऐक्यात् । तेनभाववान्पर्वत: इत्याकारकबाधनिश्चयनिरूपिताया: वह्निव्याप्याभाववत्पर्वतत्वावच्छिन्नविषयिताया: वह्न्यभाववत्पर्वतत्वावच्छिन्नविषयितात्वेन वह्निमानित्यारिकाबुद्धित्वावच्छिन्नप्रतिबन्धकतावच्छेदकत्वात् ।

एतद्दोषवारणार्थं पक्षविषयितानिरूपितसाध्याभावविषयताया: बाधविषयतापदेन निवेशे तादृशविशिष्टज्ञानमादाय उक्तसंशये नातिव्याप्ति: । कथमिति चेत्तादृशविशेष्यताया: ऐक्येऽपि प्रकारताख्यविषयताया: भेदात् । तथा च व्याप्याभावरूपबाधविषयित्वावच्छिन्नत्वं वह्निमान्पर्वत इत्याकारकबुद्धित्वावच्छिन्नप्रतिवन्धकतायां नास्तीति वह्निव्याप्यसाध्यकस्थले विशिष्टज्ञानामादाय वह्निमान्नवेति संशये नातिव्याप्ति: ।

एवंकृतेऽपितत्रैव वह्निव्याप्यसाध्यके वह्निमान्नवेति संशयेऽतिव्याप्ति: । यतो हि बाधनिश्चयपदेन वह्निव्याप्याभावत्ववद्वह्न्यिभाववान्पर्वत: इत्याकारकबाधनिश्चय: तादृशज्ञाने वह्निव्याप्याभावत्वावच्छिन्नप्रकारताया अथ च वह्न्यभावत्वावच्छिन्नप्रकारताया ऐक्यात् वह्न्यभावत्वावच्छिन्नविषयितात्वेन वह्निव्याप्यभावरूपबाधनिरूपिताया: वह्न्यव्याप्याभावविषयिताया: वह्निमान्पर्वत इत्याकारकबुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वात् । एतादृशदोषवारणार्थं बाधविषयतापदेनपक्षविषयतानिरूपिताभावविषयितानिरूपितसाध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वसम्बन्धवच्छिन्नसाध्यविषयताया: विवक्षणेवह्निव्याप्याभावत्ववद् वह्निभाववान्पर्वतइतिबाधनिश्चयमादाय तादृशसंशयस्य पक्षतात्वापत्तिरागता सा इदानींनास्ति ।कथमिति चेत्वह्निव्याप्याभावत्ववद् वह्निभाववान्पर्वतइति बाधनिश्चये पक्षविषयतानिरूपिताभावविषयताया: वर्तमानेऽपि तादृशभावविषयतानिरूपितवह्निव्याप्यत्वावच्छिन्नप्रतियोगिताक-सम्बन्धावच्छिन्नवह्निव्याप्यविषयताया: अभावात् । यतो हितादृशाभावेस्वरूपेण वह्नित्वाभावत्वस्य ,

वह्नित्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन वह्नेः विशेषणत्वात् । अतः बाधनिश्चयपदेन वह्निव्याप्याभावत्ववह्न्यभाववान्पर्वत इति बाधनिश्चयस्य ग्रहीतुमशक्यत्वान्नातिव्याप्तिः ।

तथा च लक्षणप्रकारः स्वनिष्ठा या पक्षविषयतानिरूपिताभावविषयतानिरूपितसाध्यतावच्छेदकावच्छिन्न-प्रतियोगिताकत्वसम्बन्धावच्छिन्नसाध्यविषतयतानिरूपितविषयिताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकीभूता याविषयिता तद्घटितधर्मावच्छिन्नप्रतिबन्धकतानिरूपिता या साध्यवत्तानिश्चयत्वावच्छिन्नप्रतिबध्यतावच्छेदकधर्मावच्छिन्ना प्रतिबध्यता तच्छालित्वमनुमितिकारणतावच्छेदकं साध्यसंशयत्वम् ।

एवंकृतेऽपिपर्वतः वह्निव्याप्यवान् धूमादित्यत्र वह्निव्याप्यभाववत्पर्वतो वह्निमान्नवेतिसंशयस्य पक्षतापत्तिः स्यात् । यतो हिअत्र बाधनिश्चयपदेन वह्निव्याप्यभाववान्पर्वतो वह्न्यभाववानिति निश्चयस्यग्रहणम् । तथा च बाधविषयित्वावच्छिन्नायाः वह्निव्याप्याभाववान्पर्वतो वह्निमानिति बुद्धित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतायाः ग्रहीतुं शक्यत्वात् । तन्निरूपितप्रतिबध्यतावच्छेदकवह्निमत्ववह्निव्याप्याभाववत् पर्वतत्वावच्छिन्नविषयताघटित-धर्मावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः वह्निव्याप्याभाववत्पर्वतो वह्निमान्नवेति संशये सत्वादतिव्याप्तिः । एतादृशातिव्याप्तिवारणार्थं बाधविषयतायां धर्मतावचच्छेदकभिन्नत्वं निवेश्यते ।एतादृशनिवेशेसति वह्निव्याप्याभाववान्पर्वतो वह्न्यभाववानिति बाधनिश्चयस्य ग्रहीतुमशक्यत्वात् । यतो हि एतादृशबाधज्ञानीयविषयतायाः धर्मितावच्छेदकत्वरूपत्वात् । धर्मितावच्छेदकताभिन्नबाधविषयतायाः अस्मिन् बाधनिश्चये अभावात् । अतः बाधनिश्चयपदेन वह्निव्याप्याभाववान्पर्वतो वह्न्यभाववानिति बाधनिश्चयस्य ग्रहणाभावात् वह्निव्याप्याभाववत्पर्वतो वह्निमान्नवेति संशये नपक्षत्वापत्तिः ।

एतादृशलक्षणकरणेऽपिपर्वतः वह्निव्याप्यवान् धूमादित्यत्र वह्निमान्नवेति संशयस्य पक्षत्वापत्तिःदुर्वारैव ।यतो हिपर्वतो वह्निमानित्याकारकबुद्धिं प्रति वह्निव्याप्याभाववान्पर्वत इति बाधनिश्चयस्य निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम् । वह्निव्याप्याभाववान् वह्न्यभाववान् वह्निव्याप्याभाववांश्च पर्वतइति निश्चयविशिष्टनिश्चयत्वेन प्रतिबन्धकत्वम् । एवञ्च वह्निमान्नवेति संशये धर्मितावच्छेदकताभिन्नवह्निव्याप्याभाववत्पर्वतत्ववच्छिन्नविषयत्वावच्छिन्नज्ञानवैशिष्ट्यानवच्छिन्नप्रतिबन्धकतायाः ग्रहीतुं शक्यतया तादृशप्रतिबन्धकतानिरूपितप्रतिबध्यतायाः सत्वादतिव्याप्तिः ।

बाधविषयतासामान्यावच्छिन्नप्रतिबन्धकतानिवेशे वह्निमान्नवेति संशये नातिव्याप्तिः ।एवं वह्निव्याप्याभाववत् पर्वतोवह्निमान्नवेति संशयस्य वह्निव्याप्याभाववत्पर्वतो वह्न्यभाववानित्यादिबाधज्ञानप्रतिबन्धकतामादाय पक्षतात्वापत्तिरागतासाऽपिनास्ति । तत्रप्रथमस्थलेवह्निमान्नवेतिसंशयस्थले समानाकारकज्ञानीयविषयतयोः भेदादितिमते नातिव्याप्तिः । द्वितीयस्थले वह्निव्याप्याभाववान्पर्वतो वह्निमानिति बुद्धिप्रतिबन्धकतायाः ग्रहितुमशक्यत्वात् । यतो हि तादृशप्रतिबन्धकतायाः बाधविषयतासामान्यान्तार्गतपर्वतो वह्निव्याप्याभाववानिति बाधज्ञानीयबाधविषयत्वानवच्छिन्नत्वान्नातिव्याप्तिः ।

समानाकारकज्ञानीयविषयतयोः ऐक्यादिति मतेवह्निमान्नवेति संशये पक्षत्वापत्तिःदुर्वारैव । यतो हि वह्निव्याप्याभाववान् वह्न्यभाववानिति निश्चयासमानकालीनवह्निव्याप्याभाववान्पर्वत इति बाधनिश्चयत्वावच्छिन्नवह्निव्याप्याभाव-वत्पर्वतत्वावच्छिन्नविषयतायाः तादृशप्रतिवन्धकतावच्छेदकत्वात् । एवञ्च तादृशप्रतिवन्धकताघटितलक्षणस्य वह्निमान्नवेति संशये सत्त्वादतिव्याप्तिः ।

यदि धर्मितावच्छेदकताभिन्नबाधविषयत्वावच्छिन्नप्रतिबन्धकतायांज्ञानवैशिष्ट्यानवच्छिन्नत्वं निवेश्यते तदा ज्ञानविशिष्टज्ञानीयप्रतिबन्धकतामादाय वह्निमान्नवेति संशयस्य पक्षतात्वापत्तिर्नास्ति । तथापिपर्वतः वह्निव्याप्यवान् धूमादित्यत्र वह्निव्यापकवह्निव्याप्यकालीनपर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वप्रसङ्गः। यतो हितादृशोपर्वतो

वह्निमानित्याकारकबुद्धिं प्रति वह्निव्यापकं यद् वह्निव्याप्यं तत्कालीनपर्वतो वह्निव्याप्याभाववानिति बाधनिश्चयस्य व्यापकाभावमुद्रया विशिष्टनिश्चयत्वेन प्रतिबन्धकत्वात् ज्ञानवैशिष्ट्या-नच्छिन्नप्रतिबन्धकताघटितलक्षणस्य वह्निव्याप्यसाध्यकस्थले वह्निव्यापकं यद्वह्निव्याप्यं तत्कालीनपर्वतोवह्निमान्नवेति संशये सत्त्वादतिव्याप्तिः ।

तद्दोषवारणार्थं ज्ञानवैशिष्ट्यानवच्छिन्नबाधविषयतासामान्यावच्छिन्नप्रतिबन्धकतानिवेशे तु महद्गौरवम् । तथापि पूर्वेक्तसंशये चातिव्याप्तेः वारणंभवति । कथमिति चेत् वह्निव्याप्यभाववत्पर्वतत्वावच्छिन्नविषयतायाः पर्वतो वह्निव्याप्याभाववानिति ज्ञानीयायाः बाधविषयतासामान्यान्तार्गतत्वात् तदवच्छिन्नत्वस्य तादृशप्रतिबन्धकतायामसत्त्वान्नातिव्याप्तिः । परन्तुएतादृशलक्षणकरणेगौरवं स्यात् । अतः तादृशप्रतिवन्धकतायां बाधनिश्चयत्वव्यापकत्वं विशेषणीयम् । तेनपूर्वोक्तस्थलेषुनदोषः।

**तथा च लक्षणप्रकारः**

बाधनिश्चयत्वव्यापकबाधविषयित्वाप्रतिबन्धकतानिरूपितप्रतिबध्यताव्यापकप्रतिबध्यतानिरूपिता या साध्यवत्ताज्ञानप्रतिबन्धकताव्यापकप्रतिबन्धकता तदवच्छेदकसाध्यनिश्चयप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्ना या स्वनिष्ठबाधनिश्चयप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यता तच्छालित्वमिति संशयपक्षतायाः लक्षणंफलितम् ।

अनुगमप्रकारश्च विषयिताविशिष्टप्रतिवध्यतावत्त्वं साध्यसंशयत्वम् ।विषयितावैशिष्ट्यञ्च प्रतिवध्यतायां स्वावच्छिन्नप्रतिबन्धकतानिरूपितत्वस्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतसाध्यनिश्चयप्रतिबध्यतावच्छेदक-विषयित्वावच्छिन्नत्वोभयसम्बन्धेन इतिसंक्षेपः ।

**सन्दर्भग्रन्थाः**

१.तत्त्वचिन्तामणिः अनुमानखण्डम् ।
२.पक्षतादीधितिः ।
३. पक्षतागादाधरी ।
४. कृष्णभट्टीयम् (क्रोडपत्रम्)।
५. न्यायरत्नम् (क्रोडपत्रम्)।।
६.कालीशङ्करी (क्रोडपत्रम्)।।
७. अभिनवकाशिका (क्रोडपत्रम्)।।

सहायकाचार्यः, नव्यन्यायविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः,पुरी



# योगशास्त्रे चतुर्व्यूहनिरूपणम्

डॉ. अशोककुमारमीना

दर्शनशास्त्रं हि भारतवर्षस्यास्ति सर्वोत्तमो निधिः । एतदेव भारतं देशान्तरेभ्यः समुत्कर्षयति समुन्मूलयति च पाश्चात्यविपश्चितां वस्तुविवेचनचातुर्यस्य सार्वजनीनसमस्या-समाधानधूर्यत्वस्याभिमानम् । वेदप्रामाण्यामभ्युपगन्तृभिः चार्वाकबुद्धजैनैः प्रवर्तितानि दर्शनानि नास्तिकदर्शनानि । वेदवद्धादरैर्महर्षिभिः गौतम-कणाद-कपिल-पतञ्जलि-व्यास-जैमिनिभिः विचारितानि षड्दर्शनानि आस्तिकदर्शनानि इति व्यवह्रियन्ते। आस्तिकदर्शने पूर्णप्रज्ञादिदर्शनानां समावेशे सन्त्यपि न्यायादिदर्शनानामति-प्रसिद्धतया भूयस्त्वेन श्रुत्यनुरोधितया च तेषां तद्वारकं षाड्विध्यमक्षतमेव । यद्यपि आस्तिकशब्दः परलोकमात्रस्यास्तित्वमुपगच्छतः पुरुषस्यास्तिकत्वमवगमयति, तथापि परलोकपदस्य तत्रोपलक्षकत्वेन परलोकविदमीश्वरञ्चावगच्छन् पुरुषः आस्तिक इति व्यपदेशेन लोके श्रद्धीयते एव ।

तथा च ज्ञानविज्ञाननिधानाम्नायं साक्षात्परम्परया वा परलोकमीश्वरञ्च अभ्युपगच्छन्ति षड्दर्शनानि एव आस्तिकदर्शनेषु अवस्थातुं शक्यन्ते, नान्यानि। शास्त्रविषकयजिज्ञासात्वे निराकरणाय उच्यते - यद्यपीति। यद्यपि दुःखं न समूलमुच्छेतुं शक्यते नित्यत्वात्, तथापि तस्य दुःखस्य विनाशसामग्रीसम्पादनीकृतः प्रतिरोधाय कर्तुं शक्यते इति। ननु यतो दुःखं सन् नित्यं च न भावो विद्यते सत्। इत्युक्ते निरुद्धं शक्यम् मिति उच्यते। अनागतस्य दुःखस्य विवेकश्वात्या शक्यानुपत्तिः कर्तुमिति। एवं यद् वर्तमानं दुःखं भोगारूढ़तया क्षणान्तरे स्वयमेव यास्यातीति न तस्यापि निवृत्तिः साधनीया भवितुमर्हति। तस्मात् परिशेषाद् अनागतं दुःखमेव अतीतावस्थायां यापनीयम् ।

यद् यथोक्तं समानतन्त्रेऽपि- "**हेयं दुःखमनागतम् ।**"[1]

अतीतस्य गतत्वाद्वर्तमानस्य भोगेनैव क्षयाद् अनागतमेवदुःखं हेयमित्यर्थः।

**१. हेयम्** — अविद्याप्रभावेण क्लेशकर्मसंस्कारविपाकादीनामुत्पत्तिः । अविद्या मिथ्याज्ञानरूपा । विवेकज्ञानेन तस्याः निवृत्तिः सम्भवति । हेयोपादेयावधारणारूपं सम्यग्ज्ञानम् । अतीतवर्त्तमानागतकालभेदेन दुःखं त्रिविधम् । भोगद्वारा अतीतकालिकदुःखस्य क्षयो जातः । वर्त्तमानकालिकदुःखं भोगारूढम्, द्वितीयक्षणे स्वयमेव तस्य विनाशो भविष्यति, अतो न तत्र साधनापेक्षा । अनागतदुःखस्य तु नाशः पुरुषार्थद्वारा सम्भवति । अतोक्तं सूत्रकारेण – हेयं दुःखमनागतम् इति । दुःखं संसारस्य पर्यायः । अतो दुःखबहुलः संसारो हेयः इति कथनेन दुःखस्य हेयता सिद्ध्यति ।

**२. हेयहेतुः** — "द्रष्टृदृश्ययोः संयोगो हेय हेतुः ।"

द्रष्टा दृश्यरूपः पुरुषो दृश्यं बुद्धिसत्वम्, त्रयः संयोगः स्वस्वामिभावः स चेन्द्रियप्रणालिकया चित्ते विविधशब्दादाकारेण परिणते सति तत्र चितिच्छायाया प्रतिविम्बतायां तदविवेकरूपा विधाकृतः । स च हेयस्य दुःखस्य हेतुरित्यर्थः ।

"द्रष्टृदृश्ययोः संयोगो हेयहेतुः"[2] इति महर्षिपतञ्जलिः । तत्र द्रष्टापुरुषः, दृश्या बुद्धिः, उभयोः संयोगेन दुःखानुभवो जायते पुरुषस्य । अविवेकवशाद् बुद्धिपुरुषयोर्मध्ये संयोगो जायते, येन पुरुषस्य भोक्तृरूपेण बुद्धेश्च भोग्यरूपेणोपस्थितिः । बुद्धिपुरुषयोः एकरूपतया संसारस्योत्पत्तिः । यदा कारणरूपस्यास्य अविवेकजन्यसंयोगस्य निवृत्तिस्तदा कार्यरूपस्य संसारस्य स्वत एव अभावः ।

**दृश्यस्वरूपम्** — "एकाग्रक्रियास्थितिशीलं भूतेन्द्रियात्मकं योगापवर्गार्थदृश्यम्" ।[3]

प्रकाशः प्रख्यारूपः, क्रिया प्रवृत्तिरूपा, स्थितिः नियमरूपा सत्वरजस्तमसां धर्माः शीलं स्वाभाविकं रूपं यस्य तत्तयोक्तम्, भूतेन्द्रियात्मकं भूतानि महाभूतान्यात्मभेदभिन्नानि इन्द्रियाणि बुद्धिकर्मेन्द्रियान्तःकरणभेदभिन्नानि एतदग्राह्यग्रहणरूपमात्मा स्वाभिन्नः परिणामो यस्य तत्तथोक्तम्– योगापवर्गार्थ- भोगमोक्षप्रयोगजन्यं तददृश्यः इत्यर्थः ।

त्रिगुणात्मिका प्रकृतिः । सत्त्वादीनां गुणानां कार्यं स्वतन्त्रम् । सत्त्वं प्रकाशस्वरूपं, रजः क्रियारूपं, तमश्च स्थितिरूपम् । प्रकाशो बुद्ध्यादि -विषयाकारपरिणामरूपालोको भौतिकालोकश्च । क्रिया नाम यत्नं चलनञ्च । स्थितिर्नाम प्रकाशक्रियाशून्यता इति आचार्यविज्ञानभिक्षुनागेशभट्टादयः ।

वृत्तिकारेण सत्त्वादिगुणत्रयाणां क्रमशः प्रकाशक्रियास्थितयो दृश्यस्य वास्तविकं स्वरूपमिति प्रतिपादितम् । तस्मादेव दृश्यतत्त्वसकाशानमहत्तत्त्वाहंकारपञ्चतन्मात्रपञ्चमहाभूतानां पञ्चबुद्धीन्द्रियपञ्चकर्मेन्द्रियमनोभेदेन एकादशेन्द्रियाणां ग्राह्यग्रहणरूपाणां कार्याणामुत्पत्तिः ।

"प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्त्तते इति न्यायेन स्पष्ट्यर्थं प्रकृतौ जायामाना क्रिया पुरुषस्य भोगापवर्गार्थमेव । अतः सूत्रकारेण तदर्थम् एव दृश्यस्यात्मा इति सूत्रे एव पदेन केवलं पुरुषस्य कृते प्रकृतौ स्पष्ट्यर्थं क्रिया जायते इत्युक्तम् । वृत्तिकारेण तु स्वार्थपरिहारपूर्वकं पुरुषार्थसम्पादनार्थं प्रकृतौ क्रिया जायते इति प्रतिपादितम् । अविवेकवशाद् बुद्ध्यादिभिः सह पुरुषस्य संयोगात् तेभ्यः स्वं पृथग्रूपेण न मत्वा बुद्ध्यादिगतसुखदुःखादिधर्माणां स्वयमेव भोक्ता इत्यामनति पुरुषः । दृश्यपदार्थसकाशात् स्वस्यापृथकीकरणं भोगः, यः खलुप्रतिविम्बरूपः अवास्तविकता औपाधिकभोगसकाशात् पुरुषस्य निवृत्तिरपवर्गः एवं पुरुषस्य भोगापवर्गरूपप्रयोजनसिद्ध्यनन्तरं विवेकख्याते-रुत्पत्तिद्वारा अपवर्गं प्राप्नोति पुरुषः । पुरुषस्य भोगमोक्षरूपप्रयोजनसिद्धिद्वारा कृतकृत्या प्रकृतिः स्वव्यापारादनिवृत्ता सति बद्धपुरुषाणां भोगापवर्गसम्पादनार्थं स्वकार्ये व्यापृत्ता सती तिष्ठति । कृतार्थपुरुषम्प्रति यद्यपि सा नष्टा इव प्रतिभाति तथापि बद्धपुरुषाणां कृते तस्याः प्रवृत्तिः (व्यापारः) प्रचलत्येव । अन्धस्य रूपप्रत्यक्षं न सम्भवति, अतो रूपं नास्तीति न वाच्यम्, चक्षुष्मतो जनस्य कृते तत्सम्भवात् । तथैव विवेकख्यातियुक्तपुरुषस्य कृते यद्यपि दृश्यं नष्टं तथाप्यविवेकिपुरुषाणां कृते दृश्यस्य सत्ता तिष्ठत्येव । तथा चोक्तं श्वेताश्वतरोपनिषदि —

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।**
**अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः**[४] । इति ।

पुरुषस्य भोगापवर्गौ व्यावहारिकदृष्ट्या अत्र वर्णितौ, न तु पारमार्थिकदृष्ट्या । वस्तुतो बुद्धेरेव बन्धनं मोक्षश्च सम्भवतः ।

**गुणपर्वाणि** — ''विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ।''[५]

सत्त्वादीनां गुणत्रयाणां वंशदण्डस्वरूपं स्वीकृत्य पर्वचतुष्टये चतुर्विंशतितत्त्वानां दृश्यते सांख्ययोगशास्त्रे । तत्र विशेषाविशेषलिङ्गमात्रमलिङ्गमिति चत्वारि गुणपर्वाणि । अत्र पर्वमिति पदेन अवस्था इत्यर्थग्रहणम् । पर्वचतुष्टयानां सूत्रनिर्दिष्टक्रमानुसारं कार्यतत्त्वात्कारणतत्त्वम्प्रति गमनं सुकरं भवति । विशेषादिपर्वाणि व्युत्क्रमेण योगदर्शनस्वीकृततत्त्वीयसर्गक्रमस्य (कारणात्कार्यरूपक्रमस्य) स्पष्टीकरणं सम्भवति ।

**विशेषपर्व–** पञ्चमहाभूतानि पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाण्युभयात्मकं मनश्च, विशेषपर्वे एतेषां षोडशतत्त्वानामन्तर्भावः । विशेष संज्ञाप्रदानस्य को हेतुः ? इति प्रश्ने व्याख्याकाराः 'विशेष-अविशेषा'दि संज्ञा पारिभाषिकी इति कथयन्ति । विशेषताविशिष्टत्वात् षोडशतत्त्वानां सामूहिकसंज्ञा 'विशेष' इति । अथवा यस्मिन् तत्त्वे प्रकृत्यादितन्मात्रं यावत् पदार्थेषूपलब्ध-तत्त्वान्तरोपादानत्वरूपसामान्यं नोपलभ्यते अपि तु तस्मात् पृथग्भूतविकृतिमात्रत्वरूपविशेषस्तिष्ठति, तस्य 'विशेष' इति संज्ञा महर्षिपतञ्जल्यभिप्रेता[६] इति ।

**अविशेषपव–** शब्दस्पर्शरूपरसगन्धानां पञ्चतन्मात्राणामहंकारस्य चाविशेषपर्वे अन्तर्भावः[७] । एतेषु षट्संख्यकेषु विशेषसंज्ञायाः विशेषत्वं नोपलभ्यते । अथवा एतानि तत्त्वानि एवंभूततत्त्वमुत्पादयन्ति यस्मात् पुनस्तत्त्वान्तरोत्पत्तिर्न सम्भवति । एवंविधा अविशेषता केवलं पञ्चतन्मात्रेषु अहंकारे चोपलभ्यते, न तु महत्तत्त्वे प्रकृतौ वा । प्रकृतिमहत्तत्त्वोत्पन्नपदार्थेषु तु तत्त्वान्तरोपादनकता वर्त्तते । अतः षट्तत्त्वानामेव अविशेष इति संज्ञा पारिभाषिकी इति व्याख्याकारणामभिप्रायः ।

**लिङ्गमात्रपव –** षड्विशेषाणां कारणं महत्तत्त्वम् । आचार्यविज्ञानभिक्षु-नागेशभट्टादिविदुषां मते लयं गच्छतीति

लिङ्गमिति व्युत्पत्त्या बुद्धिः स्वकारणे प्रधाने लयं गच्छतीति कृत्वा लिङ्गपदेनाभिहिता सा । परन्तु नैतद्युक्तम् । यतो हि सत्कार्यवादानुसारं महाभूतादारभ्य उत्तरोत्तरपदार्थाः सर्वेऽपि स्वस्वकारणे लीनाः भवन्तीति कृत्वा लिङ्गपर्वमध्ये अन्तर्भविष्यन्ति ।अतोऽङ्कुरोत्पत्तिद्वारा हि सत्कार्यवादानुसारं महाभूतादारभ्य उत्तरोत्तरपदार्थाः सर्वेऽपि स्वस्वकारणे लीनाः भवन्तीति कृत्वा लिङ्गपर्वमध्ये अन्तर्भविष्यन्ति । अतोऽङ्कुरोत्पत्तिद्वारा बीजस्य यथा क्रमिकविकाशोऽनुमीयते तथा प्रधानस्याद्यपरिणामस्य (महतः) सकाशात् सृष्ट्यारम्भोऽनुमीयते । अथवा सर्वेषां वस्तूनां व्यञ्जकत्वात् लिङ्गमिति संज्ञा इत्यत्र स्मृतिवाक्यं प्रमाणम् ।

**अलिङ्गपर्व–** 'अलिङ्ग' पदमप्यविशेषपदवत् 'नञ्' घटितम् । यथा बुद्धितत्त्वेन स्वकारणस्य प्रधानस्यानुमानं तथा प्रधानस्य प्रकृतिर्वा कारणं नानुमीयते । प्रधानं न कस्यापि कार्यमिति कृत्वा प्रधानस्य कारणं नास्ति किमपि । अतः प्रकृति(प्रधान) स्वरूपमलिङ्गमिति ।

सांख्ययोगशास्त्रे गुणानां द्विविधः परिणामः स्वीक्रियते । सरूपपरिणाम- विरूपपरिणामभेदेन । सरूपपरिणामविशिष्टत्रिगुणं प्रकृतिः विरूपपरिणाम-विशिष्टत्रिगुणं महदादयः ।अतोऽलिङ्गपर्वान्तर्गतप्रकृतितत्त्वं न गुणात्पृथग्-भूतमपित्वाभिन्नमिति । यथा ईक्ष्युर्दण्डम् ईक्ष्युसकाशान् न पृथग्भूतं, तथैव । परन्तु गुणानामवस्थाचतुष्टयं वनवृक्षवदौपचारिकमिति ।

इदानीं शङ्का जायते कथं चत्वारि गुणपर्वाणि ? नाधिकानि न न्यूनानि वेति । स्थावरजङ्गमब्रह्माण्डादिरूपेणानन्तगुणपर्वाणि भवितुमर्हन्ति ।अत्र आचार्यविज्ञानभिक्षु-नागेशभट्टादयः समाधानप्रसङ्गे कथयन्ति यद् ब्रह्माण्डादयः षोडशविशेषाणां न तत्त्वान्तरपरिणामाः अपि तु भूतानां धर्मादिपरिणामे अन्तर्गताः । एतेषां पृथग्रूपेण परिगणनं न सम्भवति । एवं चत्वारि गुणपर्वाणीति सिद्धम् ।

''द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ।''[८]

द्रष्टा पुरुषो दृशिमात्रश्चिन्मात्रो न ज्ञानादिधर्मकः तद्धर्मकत्वे तस्य वृत्तिरूपतया विनाशशीलत्वाद् उपयन्नप्यधर्मो विकरोति हि धर्मिणम्, इति न्यायेनात्मनः कौटस्थ्यं हीयते ।

हेयत्वेन दृश्यस्य स्वरूपविषयकज्ञानं प्रतिपाद्य द्रष्टुः पुरुषस्य स्वरूपं सूत्रकारेण प्रतिपादितम् । ज्ञानं बुद्धेः न स्वरूपम् । बुद्धौ यथा ज्ञानं तिष्ठति तथा अज्ञानमपि ।अज्ञानं ज्ञानस्य प्रतिद्वन्द्वी ।अतः अज्ञानकाले बुद्धौ ज्ञानं न तिष्ठतीति कृत्वा ज्ञानमस्य न स्वरूपम्, अपि तु धर्मः । परन्तु द्रष्टा पुरुषः ज्ञानस्वरूपः । पुरुषे ज्ञानं न कादाचित्कम् । सूत्रे दृशिमात्रपदेन पुरुषस्य ज्ञानस्वरूपत्वं सूत्रकाराभिप्रेतम् । चैतन्यं पुरुषस्य स्वरूपं, न तु धर्मः । अतो धर्मधर्मिभावनिरासार्थं ज्ञानस्वरूपप्रतिपादनार्थञ्च मात्रशब्दस्य प्रयोगो वृत्तिकाराभिप्रेतः ।आचार्यविज्ञानभिक्षुनागेशभट्टादयः श्रुतिस्मृतिवचनमाध्यमेन एतन्मतं परिपोषयन्ति ।पुरुषे ज्ञानाश्रयत्वस्वीकारे धर्मधर्मिभावकल्पनया गौरवदोषः ।अतो लाघवतर्केण श्रुतिस्मृत्वाधारेण पुरुषो ज्ञानस्वरूप इति सिद्ध्यति ।

पुरुषः विषयाकारबुद्धेः प्रतिसंवेदी[९] ।पुरुषः घटादिविषयकारबुद्धौ प्रतिविम्बितः सन् बुद्धिगतधर्मान् स्वधर्म इति मत्वा अहं सुखी, अहं दुःखी, अहं घटं जानामि इत्याद्याकारेण शोचति । बुद्धिरूपदमर्म प्रतिविम्बितः पुरुषो बुद्धिसम्बन्धितद्रव्यैवयं द्रष्टा भवति ।अतः पुरुषो विषयाकारबुद्धेः प्रतिसंवेदी इति प्रत्ययानुपश्य इति पदेन सूत्रकारेणोक्तम् ।

वृत्तिकारमतेन शुद्धपुरुषः अपरिणामी अकर्त्ता उदासीनादिरूपेण स्वचेतनस्वरूपेण प्रतिष्ठितः सन् बुद्धिवृत्त्यनुरूपं पश्यति । विषयोपरागेण युक्तः सन् बुद्धिसामीप्येन एव तस्य द्रष्टृत्वम्, वस्तुतो ज्ञानस्वरूपविशिष्टः पुरुषः[१०] ।

द्रष्टृदृश्ययोः स्वरूपं प्रतिपाद्य उभयोः संयोगः सूत्रकारेण प्रतिपादितः । जडचेतनयोर्मध्ये संयोगसामान्यं संयोगविशेषश्चेतिरूपेण द्विविधः संयोगः स्वीक्रियते सांख्ययोगशास्त्रे । प्रकृतिपुरुषौ उभयोऽपि व्यापकौ नित्यौ च ।अतः स्वाभाविकरूपेण यः संयोगः उभयोर्मध्ये वर्त्तते स तु संयोगः सामान्यमित्युच्यते ।अयं संयोगो न संसारस्य हेतुः । परन्तु पातञ्जलयोगदर्शने संसारस्य हेतुरूपेण उभयोर्मध्ये संयोगस्य कल्पना दृश्यते, येन पुरुषस्य भोगमोक्षरूपकः पुरुषार्थः सम्भवति ।

सः सनिमित्तकः, कादाचित्कः, नाश्यः, संयोगविशेषः, दुःखबहुलसंसारस्य कारणम्, यस्य विनाशे तत्कार्यस्य दुःखस्य संसारस्य वा विनाशः स्यात् ।

वृत्तिकारमतेन भोग्यत्वात् स्वशक्तिसम्पन्नं दृश्यम् । भोक्तृत्वाच्च स्वामिशक्तिसम्पन्नः पुरुषः उभयोः भोग्यभोक्तृरूपेण स्वरूपोपलब्धेः हेतुरूपेण भोग्यभोक्तृभावसम्बन्धरूपसंयोगः संसारस्य कारणम् । नित्ययोः तयोः दृग्दृश्ययोः भोग्यभोक्तृभावस्वरूपातिरिक्तो न कश्चन सम्बन्धो वर्त्तते । अनाद्यविद्या दृष्टृदृश्ययोः संयोगस्य कारणम् । सा च अविद्या विपर्ययस्वरूपयुक्ता अज्ञानरूपा इति वृत्तिकारः ।

**३. हानम्** — ''तदभावात्संयोगाभावो हानं तद्दृशेः कैवल्यम् ।''[११]

तस्या अविद्याया अभावाद्विधा विनाशात्तत्कृतसंयोगविनाशो हानं यत्, तदेव दृशनित्यमुक्तायाश्चितिशक्तेः कैवल्यमित्यर्थः ।

हानं नाम त्यागः । मोक्षार्थे हेयशब्दो योगशास्त्रे प्रयुक्तः । कार्यकारणयोरभेदविवक्षितत्वाद्दुःखकारणस्याविद्यामूलकसंयोगस्याभावात् दुःखरूपकार्यस्याभावो नाशो वा हानमिति । दुःखाभावरूपहानस्य प्राप्तिः हेयहेतुभूतसंयोगस्यात्यन्तिक-नाशद्वारा सम्भवतीति आचार्यणामाशयः ।

सत्त्वपुरुषान्यताख्यातिरूपविवेकज्ञानेन अविद्यायाः विनाशः । कारणरूपाया अविद्याया अभावे दृग्दृश्ययोः संयोगरूपकस्याविद्याकार्यस्याप्यभावो हानं वृत्तिकाराभिप्रेतम् । यथा अन्धकारस्य निवृत्तिः नान्येन केनाप्युपायेन सम्भवति, अपि तु आलोकेन एव, तथा अमूर्त्तवस्तुरूपाया अविद्यायाः विनाशो विवेकख्यात्या एव सम्भवति । एवं बुद्धिपुरुषयोः संयोगाभावः सार्वकालिकसंयोगाभावः संसाररूपबन्धनस्यात्यन्तिकरूपविनाश एव हानम्, तदेव त्रिगुणातीतशुद्धपुरुषस्य कैवल्यम्[१२] ।

**४. हानोपायः** — ''विवेकख्यातिरविप्लवा हानोपायः ।''[१३] अविप्लवा अविद्याविरोधिनी सत्वपुरुषयोः अन्यताख्यातिहानस्य केवल्यस्य हेतुरित्यर्थः ।

अयं सूत्रद्वयस्याभिसंध्यर्थः । आदरनैरन्तर्यदीर्घकालानुबन्धियम् नियमादष्टाङ्गानुष्ठानेन सत्वपुरुषान्यताख्यातौ अविप्लवायां जातायामविद्यादयः पञ्चक्लेशास्तत्कृतसंयोगश्च समूलकांषकीषता भवन्ति । ततश्च परवैराग्येणान्यताख्यानि निवृत्तौ निरोधसमाध्यभ्यासेन चित्ते निवर्त्तिते सति पुरुषस्य निर्लेपस्य स्वरूपप्रतिष्ठारूपं कैवल्यं भवतीति ।

प्रकृतिपुरुषयोः यथार्थस्वरूपज्ञानं दुःखानामात्यन्तिकनिवृत्तौ कारणम् । विद्याया उत्पत्तौ अविद्यायाः क्षयपूर्वकं कैवल्यपदे प्रतिष्ठितो भवति साधकः । इयं विद्या अविप्लुतसत्त्वपुरुषान्यताख्याति रूपा । न विद्यते विप्लवो विच्छेदोऽन्तराऽभ्युत्थानरूपो यस्याः सा अविप्लवा इति 'अविप्लवा' इति शब्दस्य व्याख्या वृत्तिकाराभिप्रेताः । न विद्यते विप्लवो विच्छेदो व्युत्थानरूपो यस्याः, अन्ये गुणा अन्यः पुरुष इति प्रतिपक्षभावनाबलाद् अविद्या प्रविलये निवृत्तज्ञातृत्वकर्तृत्वाभिमानया रजस्तमोम्लानाभिभूताया बुद्धेरन्तर्मुखा या चिच्छक्तिसंक्रान्तिः सा विवेकख्यातिः इति तत्त्वचिन्तामणिकारः ।

सर्वदा प्रतिकूलभावनया अविद्यानिवृत्तिपूर्वकं कर्तृभोक्तृभावनारहिता सती पुरुषस्य प्रतिविम्बरूपेण बुद्धेः परिणतिः विवेकख्यातिरिति वृत्तिकारस्याशयः[१४] । अतो यौगिकपद्धतिद्वारा प्राप्तमविप्लुतविवेकज्ञानमेव हानोपाय इति । अविप्लुतविवेकख्यातिः हानस्य साक्षादुपायः न भवति अपि तु अविद्याक्षयद्वारा परम्परया इति ।

प्रान्तभूमिप्रज्ञा — ''तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ।''[१५]

तस्य संजातविवेकख्यातेः पुरुषस्य सप्तधा जातप्रकारा प्रान्तभूमिः प्रकर्षेणान्तो निवृत्तिः फलत्वेन यासां वा भूमयोऽवस्था यस्याः सा प्रज्ञा प्रान्तभूमिः सप्तप्रकाराः ।

अयमर्थः— संजातविवेकख्यातेः पुरुषस्य सत्वप्रज्ञाभूमयः । तत्र चतस्रः कार्यविमुक्तिसंज्ञा तिस्रश्चित्ताविमुक्तिः संज्ञा । तद्यथा प्रथमभूमिः– ज्ञातव्यमखिलं ज्ञातं मया न किञ्चिज्ञातव्यमिति जिज्ञासानिवृत्तिरेका । द्वितीयभूमिः - हातव्यं

सर्वबन्धजातं हीनं मम किंचिद्धेयमस्तीति जिहासानिवृत्तिः द्वितीया । तृतीयभूमिः - कैवल्यप्राप्त्या प्राप्तव्यमखिलं प्राप्तं ततो न किञ्चित्प्राप्तव्यमस्तीति प्रेप्सानिवृत्तिः तृतीया । चतुर्थभूमिः - विवेकख्यातिलाभेन कर्त्तव्यमखिलं कृतं न किंचिन्मम कार्यमस्तीति चिकीर्षानिवृत्तिः चतुर्थी । तिस्रश्चित्तविमुक्तिः प्रज्ञाभूमयः – कृतार्थं बुद्धिसत्वमिति शोकनिवृत्तिरेका । मम बुद्ध्यादयो गुणाः प्रलीनाः प्रयोजनाभावात्पुनर्न प्ररोहन्तीति भयनिवृत्तिः द्वितीया । तदाहं गुणातीतस्वरूपमात्रेणावस्वितश्चिदेकरस इति सकलविकलनिवृत्तिस्तृतीया । इति सप्तधा प्रान्तभूमिर्दृष्टव्येति ।

राजसतामसयुक्तिरहितविशुद्धसत्त्वगुणप्रधानेकाग्रचेतसि जायमनं विवेकज्ञानं यदा फलोन्मुखं भवति तदा सप्तप्रकारा प्रान्तभिप्रज्ञा उत्पद्यते । प्रकृष्टोऽन्तो यासां भूमीनाम् अवस्थानां तास्तथोक्ताः इति वाचस्पतिमिश्रः । विवेकज्ञानं यद्यप्येकं तथापि प्रज्ञायाः सप्तभेदाः विषयभेदोपरि आधारिता । यथा रूपज्ञानं स्पर्शज्ञानाद्भिन्नं तथैव ।

कार्याविमुक्तिप्रज्ञाचित्तविमुक्तिप्रज्ञेति भेदेन सप्तप्रज्ञायाः वर्गद्वये अन्तर्भावः । कार्यविमुक्तिप्रज्ञा प्रयत्नसाध्या, चित्तविमुक्तिप्रज्ञा तु कार्याविमुक्तिप्रज्ञानन्तरं स्वतः सिद्ध्यति । प्रथमचतुष्टयानां कार्याविमुक्तौ अन्तिमत्रयाणां तु चित्तविमुक्तौ अन्तर्भावः ।

**पादटिप्पणी**

१. यो.सु. २/१६ २. यो.सू., २/१७ ३. यो.सू., २/१८
४. श्वेता. उ. ४/५ । ५. यो.सू., २/१९ ।
६. (क) आकाशादीनि भूतानि शब्दादितन्मात्राणां शान्तादिविशेषशून्यशब्दादिधर्मकसूक्ष्मद्रव्याणामत एवाविशेषसंज्ञकानां विशेषाभिव्यक्त-
शान्तादिविशेषकाः परिणामाः इति । यो.सू., पृ.-२०२ ।
(ख) तथा - ना.बृ.वृ., पृ.-२८६-२८७ ।
७.(क) अविशेषास्तन्मात्रान्तःकरणानि" । इति । रा.मा.वृ., २/१९ ।
(ख) ये विशेषाः विकारा एव तु तत्त्वान्तरप्रकृतयः । त.वै., पृ.-२०३ ।
८. यो.सू. २/२०
९. स पुरुषो बुद्धेः प्रतिसंवेदी" इति । व्या.भा., २/२० ।
१०. जातविषयोपरागायामेव बुद्धौ सन्निधिमात्रेणैव पुरुषस्य द्रष्टृत्वमिति इति । रा.मा.वृ.,२/२० ।
११. यो.सू. २/२५
१२. नैतस्य अमूर्त्त वस्तुनः विभागो युज्यते, किन्तु जातायां विवेकख्यातौ अविवेकनिमित्तः संयोगः स्वयमेव निवर्त्तत इति तस्य हानं, यदेव च संयोगस्य हानं तदेव नित्यं केवलस्यापि पुरुषस्य कैवल्यम्" । इति । रा.मा.वृ., २/२५ ।
१३. यो.सू., २/२६ ।
१४. प्रतिपक्षभावनांबलादविद्याप्रलये निवृत्तकर्त्तृत्वभोक्तृत्वाभिमानाया रजस्तमोमलानभिभूताया बुद्धेरन्तर्मुखा या चिच्छायासंक्रान्तिः सा विवेकख्यातिः। इति । रा.मा.वृ., २/२६ ।
१५. यो.सू., २/२७ ।

उपाचार्यः सांख्ययोगविभागाध्यक्षश्च,
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी ।



# किरातार्जुनीयस्य माहात्म्यम्

डॉ.मेधाकुमारी

किरातार्जुनीयम् अष्टादशसर्गात्मकं महाकाव्यं महाकविभारविरचितम्। तत्र किरातार्जुनीयम् इति नामकरणं चमत्कारि अर्थात् वक्रोक्तिपूर्णमस्ति । इदं नाम हृदयरञ्जनं करोति । परन्तु शिशुपालवध इति नाम न आनन्दप्रदम् । एवं मुद्राराक्षसोऽपि।

**कर्तु: परिचय:-**

किरातस्य कर्ता भारवि: इत्यत्र नास्ति संदेह: ।भासा रवि: अत्र तृतीयान्तप्रयोग: द्रष्टव्य: ।अयं सप्तमशताब्दिक: अथवा षष्ठशताब्दिक: इति समालोचका: वदन्ति । अयम् उत्तरदेशीय: अथवा दक्षिणदेशीय इति संदेहे, कवि: सीमातीत: , कालातीत: सर्वदा वर्तमान: असीमप्रतिभासम्पन्न: रविवत् स्तुत्य: भवति ।

कवे: प्रशंसक: स्तावक:-

आनन्दवर्धन: , मम्मट: , रुय्यक: ,विश्वनाथ: , विष्णुशर्मा , नारायणपण्डित: च भारविं प्रशंसन्ति । रामचरितमानसकार: छायावादी कविश्च ।एते सर्वे भारविं सुष्ठु जानन्ति ।

भावि: कवि: अर्थगौरवस्य कृते प्रसिद्ध: ।अर्थगौरवम् आयाति लक्षणया , व्यंजनया वा । तत: हितान्न य: संश्रुणुते इत्यत्र लक्षणा । रिपुतिमिरमुदस्य इत्यत्र व्यंजना । किरातस्य मङ्गलाचरणपद्ये सौशब्द्यं वर्तते ।

किरातार्जुनीयस्य नामकरणबोध: एवं कर्तव्यम्

किरातश्च अर्जुनश्च किरातार्जुनौ । तदधीकृत्य कृतं काव्यं किरातार्जुनीयम् । तत्र छप्रत्यय: मङ्गलाय भवति ।अस्य उत्स: भवति महाभारतवनपर्व । इदं पञ्चमहाकाव्यान्तर्गतम् । बृहत् त्रयीषु च प्रधानमस्ति ।

**नायकविचार:-**

अस्य काव्यस्य नायक: अर्जुन: धनुर्धर: धीरोदात्तनायक: , जगन्नाथवंशज: ,मध्यमपाण्डव: , वीररसप्रधान: च। वीररस: राष्ट्रहिताय भवति । न तु शृङ्गार: शान्तो वा । मल्लिनाथेन उक्तं यथा-

**नेता मध्यमपाण्डवो भगवतो नारायणस्यांशज:,**
**तस्योत्कर्षकृतेऽनुवर्ण्य चरितो दिव्य: किरात: पुन: ।**
**शृङ्गारादिरसोऽङ्गमत्र विजयी वीरप्रधानो रस: ,**
**शैलाद्यानि च वर्णितानि बहुशो दिव्यास्त्रलाभ: फलम् ।।**

उपनायक: किरात: वनेचर: ,किरातराज:, राष्ट्रदूत: ,मितभाषी , शिवांश:, कर्मवीर: ,बुद्धिमान्, सदाचारी च । अत्र अन्ये नायका: वर्तन्ते यथा युधिष्ठिर: , भीम: , नकुल: ,सहदेव: च ।

**आलंकारिका: इत्थंप्रशंसन्ति -**

**उपमा कालिदासस्य भारवेर्थगौरवम् ।**
**नैषधे पदलालित्यं माघे सन्ति त्रयो गुणा: ।।** इति

श्रीकृष्णकविमतम् नयपथदिपिका भारवे: वाणी इति । तत्र मल्लिनाथमतं

यथा - **नारीकेलफलसम्मितं वचो भारवे:** इति ।

क्षेमेन्द्रवचनं यथा - **वंशस्थविलप्रयोगे सिद्धहस्त: भारवि: ।**

अविवेचितमपि मधुरं विवेचितं तुन्तरतिरसधनत्वात् ।
कदलीफलमिवसत्कविवचनं रसिकस्य भातिमधुरतमम् ।। इतिश्रीकृष्णब्रह्मतन्त्रपरकालसंयमीन्द्र: ।
अत्र सत्कवि: नाम ईश्वरपरायण: । मल्लिनाथमते तु भारवे: वचनम् अर्थगौरवपूर्णं क्लिष्टं च । भारवि: स्वयम् उक्तवान्

यत् -

**स्फुटता न पदैरपाकृता न च न स्वीकृतमर्थगौरवम् ।**
**रचिता पृथगर्थतागिरां न च सामर्थ्यमपोहितं क्वचित् ।।** अत्र वक्रोक्ति वर्तते ।

**किरातस्य अर्थगौरवपूर्णं प्रसिद्धपद्यं यथा -**

**सहसा विदधीत न क्रियामविवेकः परमापदां पदम्।**
**वृणुते हि विमृश्यकारिणं गुणलुब्धाः स्वयमेव सम्पदः** ।। इति

अत्र झटिति कार्यं न करणीयम् । विचार्य कार्यं कर्तव्यम् । परन्तु जनः क्रोधेन बुद्धिहीनः सन् अकृत्यं करोति । स्वजनं हन्ति । ततः पश्चातापं करोति । चीनदेशः अविचार्य अकृत्यं करोति । पाकिस्थानदेशः अविचार्य करोति । दुःशासनः निन्दनीयकार्यं कृतवान् । क्रोधः मानवस्य परमशत्रुः । गीता वदति अत्र-

**क्रोधात् भवतिसम्मोहः सम्मोहात् स्मृतिविभ्रमः ।**
**स्मृतिभ्रंसात् बुद्धिःनाशो बुद्धिनाशात् प्रणश्यति** ।। इति
**इदं पद्यं तुलसीदासेन अनुक्रियते यथा -**
**शहसा करि पाछें पछि ताहीं। कहई वुध वुध ते नाहीं ।।**

**सुयोधनस्य सुन्दरशासनमादाय वदति-**

जासु राज प्रिय प्रजा दुःखारी। ते नृप अवशी, नरक अधिकारी ।। इति

**सर्गव्यवस्था -** किराते अष्टादशसर्गाः विलसन्ति । तेषु प्रथमसर्गः सर्वोत्कृष्टः । सर्वेषां सर्गाणां भित्तिः । अत्र प्रत्येकेऽस्मिन् पद्ये राजनीतिपरकं ज्ञानं वर्तते । अत्र कलापक्षः भावपक्षः च शोभते । कलापक्षः नाम यमकादिरलंकारः। भावपक्षः भवति रसध्वनिगुणादिः इति ।

**सुयोधनदुर्योधनयोः विचारः -** दुःखेन योधनं , मायया ,कपटेन , छलेन शासितुम् इच्छति जेतुम् इच्छति इति दुर्योधनः। सुखेन योध्यते योधनं नयेन धर्मेण प्रजा रंजयितुं शासितुम् इच्छति इति सुयोधनः ल्यु प्रत्ययः । तत्र दुर्योधनः संकीर्णमनाः । अत्र तु उदारमनाः । दुर्योधनः दुर्नीतिमान् । सुयोधनस्तु सुनीतिमान् । एवमेव तत्र महाभारते यत् नीरसः अस्ति । अत्र तु सरसः ।

**किराते मङ्गलपद्यम् -**

किराते यत् मङ्गलपद्यं तत् वस्तुनिर्देशात्मकम् अस्ति । न तु आशीर्वादात्मकम् । न वा नमस्कारात्मकम्। मङ्गलाचरणं कवेः मङ्गलाय पाठकानां हिताय , श्रोतृणां कल्याणाय च भवति । **किराते मङ्गलपद्यम् -**

**श्रियः कुरूणामधिपस्य पालनीं ,प्रजासु वृत्तिं यमयुंक्त वेदितुम्।**
**स वर्णिलिङ्गी विदितः समाययौ , युधिष्ठिरं द्वैतवने वनेचरचरः ।।**

अस्य पद्यस्य वैशिष्ट्यम् -

अत्र वनेचरः दूतः । सुयोधनस्य शासनव्यवस्था ज्ञाता अस्ति । सुयोधनस्य राजनीतिं युधिष्ठिरं प्रति ब्रूते । अस्मिन् पद्ये प्रायेण सर्वेशब्दाः सौशब्द्यम् इति । गुणयुक्ताः सन्ति यथा वर्णी तत्र इन् प्रत्ययः । लक्ष्मी तत्र इन् प्रत्ययः। युधिष्ठिरः इत्यत्र गवि युधिभ्यां स्थिरः इति षत्वम् अलुक् च । शौशब्द्यः गुणत्वेन स्वीकरोति विद्यानाथः । प्रतापरुद्रयशोभूषणे। सशौष्ठवोदार्यविशेषशालिनीम् इति भारविः ।

अत्र अलंकारविचारः

अत्र केचित् वने वनेचरः इत्यत्र वृत्यनुप्रासं वदन्ति । किन्तु अस्ति छेकानुप्रासः । अत्र श्रुत्यानुप्रासोऽपि भवेत्। परिकरः, परिकराङ्कुरः , संसृष्टिः च स्युः । एवम् अलंकारयोजनां सर्वत्र द्रष्टव्या । तत्र प्रसादगुणः वैदर्भीरीतिः सात्वतिवृत्तिः ,सुन्दरवर्णविन्यासरूपशय्या च विभाति इति द्रष्टव्यम् । माघः शिशुपालवधे अस्य पद्यस्य स्मरणं कृत्वा एवं लिखति । यथा -

**श्रियः पतिः श्रीमतिशासितुं जगत्, जगन्निवासो वसुदेवसद्मनि।**
**वसन् ददर्शावतरन्तमम्बराद्, हिरण्यगर्भाङ्गभुवं मुनिं हरिः ।।** इति

इतः ज्ञायते यत् माघः कृष्णभक्तः । भारविः च राष्ट्रभक्तः च । सुयोधनः इत्यत्र राष्ट्रभक्तः प्रतीयते । अत्र भारविः- आद्यभागे राजलक्ष्मीं राष्ट्रलक्ष्मीं राष्ट्रदेवतां स्मरति ।

**वनेचरवर्णित सुयोधनस्य शासनव्यवस्था-** सुयोधनः नयेन जगतीं जेतुं समीहते । सः स्वयशः समग्रगुणसंपदा तनोति। सः नयेन पौरुषं वितनोति । अनुजीविनः प्रति साधुभावं प्रदर्शयति । सः त्रिगुणं समानं सेवते । तस्य दानं साम्ना भवति। सत् क्रियां विना दानं न भवति। जनस्य गुणं दृष्ट्वा सत् क्रियां करोति । रिपौ सुतेऽपि वा समानं दण्डं तनोति । अस्य संपदः सुयोधनस्य उपकारितां सूचयन्ति। सुयोधनस्य सामदानदण्डभेदाः सदा सफलाः भवन्ति । अश्वधनं गजधनं च आर्द्रतां नयति। कृषकाः सुखिनः आसन् । मेदिनी वसूनि सूते । सैनिकाः राष्ट्रस्य हितकराः आसन् । फलानुमेयाः क्रियाकलापाः। सर्वे राजानः अनुकूलाः आसन् । सः वृष्ट्यर्थं यज्ञं करोति स्म । सुन्दरशासकः सन् अपि भवतः युधिष्ठिरात् विभेति । दुःखी च भवति । मम वचनं केवलं सुयोधनस्य सुशासनव्यवस्थासूचकम् अस्ति इति । सुयोधनराज्ये सैनिकाः प्रसन्नाः, राष्ट्रस्य कृते समर्पिताः च आसन् इति वनेचरः वदति -

**महौजसो मानधना धनार्चिता, धनुर्भृतः संयति लब्धकीर्तयः ।**
**न संहतास्तस्य न भिन्नवृत्तयः, प्रियाणि वांछन्त्यसुभिः समीहितुम् ।। १.१९ ।**

सुयोधनः सैनिकान् सम्मानेन धनेन च सन्तोषयति स्म । अतः सर्वे उत्साहेन राष्ट्रहिताय कार्यं कृतवन्तः । तथैव अस्माकं देशस्य सैनिकाः सुरक्षावलाः सुयोधनस्य सैन्यबलवत् भवन्ति । प्रशासकाः सुयोधनं च अनुकुर्वन्ति । अयं श्लोकः मम्मटस्य प्रियः ।

**गुप्तचरव्यवस्था -** सुयोधनस्य गुप्तचराः सच्चरिताः आसन्। यथा -

**महीभृतां सच्चरितैः चरैः क्रियाः, स वेदनिः शेषमशेषितः क्रियः ।**
**महोदयैः तस्य हितानुबन्धिभिः, प्रतीयते धातुरिवेहितं फलैः ।। (१/२०)**

अत्र सुयोधनस्य परराष्ट्रवृत्तान्तज्ञानकौशलं वर्ण्यते । इतः ज्ञायते यथा - पाटलेपुष्पम् अस्ति । अर्थात् वाक्जालम् अस्ति । आम्रे पुष्पं फलं च वर्तते। पनसे केवलं फलमस्ति । सुयोधनः पनसवत् फलं सूचयति । अर्थात् सुयोधनस्य क्रियां प्रजाः फलेन जानन्ति । न ततः पूर्वम्। स प्रजारंजनत्वं फलेन सूचयति न तु वाक्जालेन । एवं शासकाः सुयोधनम् अनुकुर्वन्ति ।

सुयोधनस्य शासनेन प्रीताः सन्तः अन्ये शासकाः तं बहुमानं कुर्वन्ति स्म । यथा -

**न तेन सज्यं क्वचित् उद्यतं धनुः, कृतं न वा कोपविजिह्ममाननम् ।**
**गुणानुरागेण शिरोभिरुह्यते, नराधिपैर्माल्यमिवास्य शासनम् ।। ( १.२१)**

सुयोधनस्य शासने शासकानां प्रजानां मन्त्रीणां च आनुकूल्यम् आसीत् । यथा -

**स किंसखा साधु न शास्ति यो धिपं हितान्न यः संशृणुते स किं प्रभु ।**
**सदानुकूलेषु हि कुर्वते रतिं, नृपेषु अमात्येषु च सर्वसंपदः ।। ( १.५)**

अस्य पदस्य उपदेशः परिवारं प्रति, समाजं प्रति, राष्ट्रं प्रति विश्वं प्रति च अस्ति ।

अत्र तुलसीदासवचनं यथा-

**जहां सुमति तहं, सम्पत्ति नाना ।**
**जहाँ कुमति तहँ, विपति निदाना ।।** इति

**सुयोधनः न्यायवान् आसीत् - विशङ्कमानः भवतः पराभवं, नृपासनस्थोऽपि वनाधिवासिनः ।**
**दूरोदरच्छद्मजितां समीहते, नयेन जेतुं जगतीं सुयोधनः ।। (१.७)**

सुयोधनः सम्राट् शक्तिशाली सन् अपि न्यायवतः युधिष्ठिरात् बिभेति । सः अन्यायेन राजलक्ष्मीं

जितवान् अतः इदानीं न्यायेन राज्यं जेतुमिच्छति। सः अशान्तः अस्ति। अशान्तस्य कुतः सुखम् इति गीता वदति।

**सुयोधनस्य दण्डविधि व्यवस्था -** स धर्मविप्लवं दण्डेन दण्डयति। **वसूनिवांछन्नवशीन मन्युना, स्वधर्म इत्येव निवृत्तकारणः। गुरूपदिष्टेन रिपौ सुतेऽपिवा, निहन्ति दण्डेन स धर्मविप्लवम्।** (१.१३)

अत्र सुयोधनः दण्डविधाने रिपौ सुते च भेदं न कृतवान्। सः समदर्शी आसीत्। अत्र गीतावचनम्-

**विद्या विनय सम्पन्ने ब्राह्मणे गवि हस्तिनि।**

**शूनि चैव श्वपाके च पण्डिताः समदर्शिनः।।** (५.१८)

**सुयोधनस्य धार्मिकप्रवृत्तिः-** तत्र पुरोहिताः प्रसन्नाः सम्मानभाजनाः आसन्। स यौवराज्ये नव यौवनद्धतं, विधाय दुःशासनमिद्धशासनम्। स हवनं मुनिवत् कृतवान्। हवनेन वायुमण्डलं स्वच्छी भवति। हवनेन यज्ञेन वृष्टिः भवति इति। गीतायां गदितमस्ति -

**अन्नाद्भवन्तिभूतानि पर्यन्यादन्न संभवः।**

**यज्ञात् भवति पर्जन्यो यज्ञकर्मसमुद्भवः।।** (३.१४)

**कृषिव्यवस्था -** सुयोधनराज्ये प्रजावर्गः सुखी, कृषकाः च वर्षावलम्बनाः न आसन्। अत्र जलसेचनव्यवस्था वर्णितास्ति। **सुखेन लभ्या दधतः कृषीवलैः, अकृष्टपच्या इव शस्य संपदः।**

**वितन्वति क्षेममदेवमातृका, श्चिराय तस्मिन् कुरवश्चकासति।।** इति (१.१७)

संप्रति राज्ञः अपि कृषकाणां कृते सुयोधनवत् सुव्यवस्थां कुर्वन्तु। कृषकसमाजः एव देशस्य मानदण्डः।

सुयोधनशासने गुणैः संपृक्ता मेदिनी बहुधनानि ददाति स्म। अत्र सुयोधनस्य प्रजारंजनमेव मूललक्ष्यम् आसीत्। सांप्रतिकशासकानां लक्ष्यं सुयोधनवत् भवतु। न प्रतिश्रुतिवागाडम्बरः भवतु। (१.१८)

**द्रौपद्याः प्रेरकवचनम्-**

**ब्रजन्ति ते मूढधियः पराभवं, भवन्ति मायाविषु ये न मायिनः।**

**प्रविश्य हि घ्नन्ति शठास्थथाविधा ,नसंवृत्ताङ्गानिव इवेषवः।।** (१.३०)

अत्र अर्थगौरवं प्रतीयते यत् कपटीनाम् अपहरणकारीणां च कृते कपटाचरणं विधेयम् इति द्रौपदीवचनम्। अत्र युधिष्ठिरः कापुरुषः राष्ट्रशासने अयोग्यः इति सूचयति द्रौपदीवचनम्। क्षमागुणं मुनीनां धनं न तु राज्ञाम् इति। अथ क्षमामेव निरस्तविक्रम ..इतिपद्यम्। ये शासकाः समये समये सन्धिदूषणानि विदधति ते राष्ट्रहितकारिणः। पाकिस्थान ,चीनादिदेशः सन्धिं दूषयति, तथैव अस्माकं देशः सन्धिदूषणः भवतु। राष्ट्रं रक्षतु। किरातार्जुनीयस्य विद्यार्थिनः अध्येतारः मनोहारिवचनाः राष्ट्ररक्षकाः, न्यायप्रियाः, धर्मचारिणः, परिश्रमिणः, स्वाध्यायशीलाः च भवेयुः। किराते राष्ट्रविज्ञानं मनोविज्ञानं, कृषिविज्ञानं, समाजविज्ञानं कलाविज्ञानं च विलसति। तत्र एतानि सर्वाणि राष्ट्रहिताय प्रजारञ्जनाय च सन्ति। किराते अन्तिमे मङ्गलाचरणे राजलक्ष्मीः बर्धनलिप्सा भारवेः प्रतीयते। किरातार्जुनीयस्य उपदेशवचनेन शासकाः नीतिनिपुणाः ,नीतिपरायणाः, प्रजारंजकाः, भेदभावविमुखाः धर्मपरायणाः च भवेयुः। एवमेव किराते अर्थगौरवपूर्णं माहात्म्यं समाजकल्याणाय वर्तते।

**सहायकग्रन्थसूची**

१.किरातार्जुनीयम्, नवलकिशोरकाङ्करः, जगदीशसंस्कृतपुस्तकालयः, जयपुरम्, संस्करणम् - प्रथम, २०१६।
१.श्रीमद्भगवद्गीता, गीताप्रेस्.गोरखपुरम्, २०१६।
३.शिशुपालवद्धम् ,चौखम्वासंस्कृतसिरिज्, २०१५।

अध्यापिका, संस्कृतविभागः,
सामसीकलेज, मालदा, पश्चिमवङ्गः

# ज्यौतिषशास्त्रस्य वैज्ञानिकत्वम्

डॉ. विजयलक्ष्मीमहापात्रः

वैदिककालात् अद्यावधि ज्यौतिषशास्त्रस्य महत्वपूर्णस्थानं वर्त्तते । षड् वेदाङ्गेषु शिक्षाकल्पव्याकरण-निरूक्त-ज्यौतिषच्छन्दस्सु ज्यौतिषस्य स्थानं सुष्ठुतया गव्यते । पुरा यज्ञस्य कृते कालगणनाया आवश्यकता भवति स्म । दर्शपौर्णमासयोः कालः कदा भविष्यति ? नक्षत्रस्योदयं कदा भवति ? अद्य का तिथिरस्ति ? इति सर्वस्य ज्ञानाय कालविधान शास्त्रस्याऽऽवश्यकता वर्त्तते । एतत्कालगणना शास्त्रमेव ज्यौतिषशास्त्र नाम्ना प्रसिद्धम्, तद्यथा वेदाङ्ग ज्यौतिषे[१]-

वेदा हि यज्ञार्थमभिप्रवृत्ताः
कालानुपूर्वाविहिताश्च यज्ञाः ।
तस्मादिदं कालविधानशास्त्रं
यो ज्यौतिषं वेद स वेद यज्ञान् ।।

वेदानां प्रयोजनं यज्ञार्थमेव । यज्ञाः कालज्ञानं विना न कर्त्तुं शक्याः । एतस्मात्कारणात् कालज्ञानशास्त्रमपेक्षते । एत्ततु ज्यौतिषशास्त्रमेव शास्त्रमेतत् कालगणनां सहितं शुभाशुभस्य फलस्याऽपि द्योतनं करोति । ज्यौतिषविषये सर्वत्र प्रश्नोऽयमायाति यत् एतत् शास्त्रस्य वैमानिकत्वमस्ति अथवा नास्ति ?

एतस्मिन् प्रश्ने सति सर्वप्रथममतद द्रष्टुं शक्यते यद् वैदिककाले ज्योतिषसम्बन्धं यत्किञ्चिदुपलभ्यते तत्र वैज्ञानिकत्वमस्ति नास्तिवा ?

पृथिव्या आकारो गोल इति न नवीनं मतमापितु ऋग्वेद संहितयामुक्तमस्ति यत्पृथिवीगोलाकारा वर्त्तते ।

**चक्राणार्सः परीणर्हं पृथिव्या हिरण्येन**
**मणिना शुम्र्भमाना ।**
**न हिन्वानासस्तितिरुस्त इन्दुपरि**
**स्पर्शो अदधात् सूर्येण ।।**[२]

एवमेव गोपथव्राह्मणे पृथिव्या गोलाकारत्वं निराधारत्वं च वर्णितम् ।[३]

भास्कराचार्येण सिद्धान्तशिरोमणेः गोलाध्याये प्रोक्तं यत् पृथिवी निराधारा सति स्वशक्त्याऽऽकाशेऽवलम्बिताऽस्ति ।[४]

वैज्ञानिका अपि स्वीकुर्वन्ति पृथिव्या निराधारत्वं गोलत्वश्च ऋग्वेदकाले ज्यौतिषस्य पर्याप्तज्ञानं जनेषु वर्तते स्म । यतोह्वेकस्मिन् मन्त्रे भचक्रस्य भ्रमणं दर्शितम् । तत्रोक्तं वर्त्तते यद् द्वादशारं चक्र मृतस्य भ्रमति कदापि जरां न गच्छति । तत्र विंशत्युत्तर सप्तशतानि पुत्रमिथुनानि तस्थुः ।।[५]

अत्र द्वादशारस्यतात्पर्य द्वादशमासा इति कर्तुं युज्यते । विंशत्युत्तर सप्तशतानि वेर्षेऽहोरात्ररूपाणि भवितुमर्हति । एकस्मिन्नपरे मन्त्रे द्वादश परिधीनां नाभित्रयस्य षष्ट्युत्तरत्रिशतं दिनानां च समुल्लेखो वर्त्तते ।

**द्वादशपधर्यश्चक्रमेकं त्रीणि नभ्यानिक उतच्चिकेत ।**
**तस्मिन्त्साकं त्रिंशता न शङ्कर्वोऽर्पिताः षष्टिर्नर्चलाचलार्सः ।।**[६]

एतत् सर्वं वेदे वणि;तम् । अत्रापि द्वादश प्रधयो द्वादशमासत्वेन निगदिताः । नाभिप्रयं केन्द्रत्रयं वर्षे दिनासंख्या च ३६० उक्ता । किमेतत्सर्वं वैज्ञानिकं नास्ति ? द्वादशमासातिरिक्तमधिमासस्यापि ज्ञानं वेदे सम्प्राप्यते ।[७] अतो ज्यौतिषशास्त्रस्य वैज्ञानिकता तस्मिन्कालेऽपि प्रामाणोभवति ।

**ज्यौतिषशास्त्रस्य स्कन्धत्रयाणां वैमानिकत्वम् -**

ज्योतिषशास्त्रस्य विभाजनं त्रिपुस्कन्धेषु क्रियते । सिद्धान्त-संहिता-होरा भेदात् ।[८] दिद्धान्तज्योतिषे ग्रहाणां स्पष्टीकरणार्थं गणितविधि वर्त्तते । सिद्धान्तज्यौतिषमपि सिद्धान्ततन्त्रकरण भेदात् त्रिधा विभज्यते । सृष्ट्यादितो ग्रहाणां

स्पष्टीकरणार्थ गणितसिद्धान्ताः सिद्धान्ते वर्णिताः । कलियुगाद् ग्रहाणां स्पष्टीकरणं यत्र विधीयते तत् तन्त्रमित्याभिधियते । इष्टसंवत्सरात् स्पष्टीकरणं ग्रहाणां यत्र गणितद्वारा कथ्यते तत् करणमित्युज्यते ।

संहिताज्यौतिषेऽनेके विषया आयान्ति । यथा संवत्सरस्य शुभाशुभं, भूकम्पेन्द्रधनुषधूमकेतु ग्रहचाराणां फलाफलत्वं, मेदिनीय ज्योतिषम्, वास्तुशास्त्रम्, स्त्रीपुरुष पश्वादीनां लक्षणम्, शकुनम्, सामुद्रिकशास्त्रमङ्गस्फुरणं च ।

होरा ज्यौतिषशास्त्रे जातकशास्त्रमायाति यथा जन्मकुण्डली द्वारा जातकस्य शुभाशुभफलत्वं, दशान्तर्दशा, अष्टकवर्गाः, आयुर्दाय, राजयोगाः, स्त्रीजातकम्, ताजिकशास्त्रञ्चेति, प्रश्नज्यौतिषमपि ताजिकशास्त्र एवाऽऽयाति ।

ज्यौतिषस्य एतेषु त्रिस्वपि स्कन्धेषु वैज्ञानिकत्वं कथं दरीदृश्यत इति विचारोऽत्र विधातव्यः । विज्ञानस्य किं लक्षणमिति प्रश्ने सति वक्तुं शक्यते यद यत्र सिद्धान्तानां प्रायोगिक पक्षे शुद्ध परिणामा आयान्ति, अपवादा विप्रतिपत्रयो वा न भवन्ति अतिन्यूना वा भवन्ति स विषय एव विज्ञानस्य । एतदपि कथयितुं शक्यते यद् यस्मिन् विषये निश्चितरूपेण शुद्धपरिणामः प्राप्यते तदेव विज्ञानमुच्यते । ज्यौतिषशास्त्रीया विषया वैज्ञानिकाः सन्ति अथवा न सन्ति ? एतस्मिन् विषये त्रिषु ज्यौतिष स्कन्धेषु के के विषया वैज्ञानिका इति विचारयितुं तत्र दृष्टिपातो विधेयः अनेन ज्योतिर्विज्ञानस्य वैज्ञानिकत्वं मातुं शक्यते ।

**सिद्धान्त ज्यौतिषस्य वैज्ञानिकत्वम् -**

सिद्धान्तज्यौतिषं गणितोपरि समाधृतं वर्तते । गणितशास्त्रस्य वैज्ञानिकत्वमस्त्येवा नास्ति कस्यचिद वैज्ञानिकस्य विषयेऽस्मिन् विप्रतिपत्तिः । भारतवर्षे प्राचीनकालादेव गणितशास्त्रस्य सम्यग् ज्ञानं जनेषु वर्तते ।

सिद्धान्तग्रन्थेषु वैज्ञानिकसिद्धान्तापि दरीदृश्यन्ते । गुरुत्वाकर्षण सिद्धान्तेऽद्यापि न्यूटनमहोदयेन प्रत्यपादि मिथ्यैषा चर्चा सर्वत्र प्रचलति । न्यूटन महोदयात् पूर्वमेव भास्कराचार्येण गोलाध्याये पृथिव्या गुरुत्वाकर्षण शक्ते र्विवेचनमकारि भाष्कराचार्येणोक्तं यदेषा पृथिवी समाकर्षण शक्तियुता वर्त्तते । स्वाकर्षणशक्त्या पृथिवी सर्वाणि वस्तुनि स्वं प्रयाकर्षति । अतएव वस्तु पृथिव्यां पततीवेति दृश्यते ।

**आकृष्टिशक्तिश्च मही तथायत् स्वस्थं गुरुं स्वाभिमुखं स्वशक्त्या ।**
**आकृष्यते तत्पततीव भाति समेसमन्ताद् क्व पतत्विथं खे ।।**[९]

पृथिवी गतिशीलाऽस्ति । आर्यभट्टेन उक्तं यत्पृथिवी दैनन्दिनं भ्रमति स्वधुर्याम् । आर्यभट्टीय ग्रन्थ रचयिता प्रथम आर्यभट्ट मनुते यद् भूमि रचला नास्ति यथोक्तं-

गोलपादे -[१०] **अनुलोमगतिः नौस्थः पश्यत्यचलं विलोमगं यद्वत् ।**
**अचलानिभानि तद्वत् समे पश्चिमगानि लङ्कायाम् ।।**

कश्चिन्नौकारुढो मनुष्यो यथाऽनुलोमगमनात् स्थिरान् वृक्षादीन् विपरीतदिग्गामि भूतान् इव पश्यति तथैव पृथिव्या भ्रमणेन भचक्रं लङ्कातः समानान्तर गातयो याम्योत्तर राशयोः समगत्या भ्रमद् दृश्यते । अतएव भूमेर्गति यथा -

वैज्ञानिकैः स्वीकृता तथैव सिद्धान्तज्यौतिष ग्रन्थेऽपि सुष्ठुतयाऽङ्गीक्रियते । ग्रहाणां विषये यद् विचारो विधीयते तत्सर्वं विज्ञान सम्मतम् । सूर्यग्रहः स्थिरः पृथिवी च गतिशीला । एषा भूमिः सूर्यं परितो द्वादश मासेषु परिक्रमणमेकं विदधति । ज्योतिषशास्त्रे यत्सूर्यस्य गतिर्विलिख्यते वास्तविकरूपेण सा तु पृथिव्या गतिरेव । सूर्य-चन्द्र-मङ्गल-बुध-गुरु-शुक्र-शनि नामधेयाः स्पष्टग्रहा ज्यौतिषशास्त्रे मन्यन्ते । आधुनिक वैज्ञानिकाः नेपच्यून (वरूणः) दृर्शल (प्रजापतिः) यूरेनस (इन्द्रः) इति नामधेया स्त्रयोग्रहाः सन्तीति स्वीकुर्वन्ति । राहुकेतू न ग्रहौ, अपितु छायाग्रहौ । विन्दुरूपौ च स्तः ।

सिद्धान्तज्यौतिषे रविचन्द्रयोर्गहणविषये वैज्ञानिकता भूरिशो दृश्यते । सूर्यग्रहणे सूर्योपरि चन्द्रमसच्छाया पतने भवति । अतः सूर्यस्यच्छादकश्चन्द्र एव । चन्द्रमसि यदि भूच्छायां निपतति तदा चन्द्रग्रहणं दृश्यते । चन्द्रच्छादिका भूच्छायैवेति सर्वं सिद्धान्तज्योतिषग्रन्थेषु वहुधा समुल्लिखितम् । यथा -[११]

**छादक भास्करस्येन्दुरधःस्थो धनवद् भवेत् ।**
**भूच्छायां प्राङ् मुखश्चन्द्रो विशत्यस्य भवेदसौ ।।**

ग्रहण विषये वैज्ञानिका अपि ज्यौर्तिविज्ञानोक्तं वचनमेव व्रुवन्ति । सिद्धान्तज्योतिषस्य वैज्ञानिकता तत्रापि प्रमाणी भवति यत्र ग्रहाणां वेधो वेधशालास्तु क्रियते ।
नवीन यन्त्रै दर्शनेन यत्परिणामो ग्रहाणामायाति स एव परिणामो प्राचीन वेधशालासु प्रायोगिकतया ज्ञायते । तत्कथं ज्योतिषस्याऽस्य नास्ति वैज्ञानिकता ?

**२. संहिताज्यौतिषस्य वैज्ञानिकत्वम् -**

ज्योतिर्विज्ञानस्य प्राय: सर्वे विषया: संहिताज्यौतिषशास्त्रे दृश्यन्ते । संहिताग्रन्थेषु ग्रहाणां चारस्तत्फलश्च निरूपितम् ।
सिद्धान्तज्यौतिषशास्त्रेण ग्रहाणां तत्तद् शरीषु ततन्नक्षत्रेषु भ्रमणं तु प्रमाणितमेव । परन्तु फलमेतस्यानुभवैकगम्यं वर्तते । यथा सूर्यो यदा विशेष राशिनक्षत्रेषु विचरति तदा शैत्यमौष्णं वृत्तिश्च भवति । एतस्य सर्वस्य प्रभाव: प्राणिनामुपरि भवत्यैव सूर्यस्य प्रभाव: प्राणिनामुपरि भवत्यैव । सूर्यस्य प्रभाव: पादपेषु वृक्षेषु च नितरां दृश्यते । समेषां कृते सूर्यकिरणानामावश्यकता वरीवर्ति, इति वैज्ञानिका अपि आमनन्ति । ग्रहाणां वर्णानुसारमपि फलं संहितायां लिखितम् ।

तद्यथा - [१२]

**श्यामेऽर्के कीटभयं भस्मनिभे भयमुशन्ति परचक्रात् ।**
**यस्यर्क्षे सच्छिद्रस्तस्य विनाश: क्षितिशस्य ।।**
**शशरुधिरनिमे भानौ नभस्तलस्थे भवन्ति सग्रामा: ।**
**शशिसदृशो नृपतिवध: क्षिप्रं चान्योन्तप्रोभति ।।**

वृहत्संहितायां कुर्मचक्र विभाणनमुक्तम् ।[१३] कुर्मचक्रविभाजनानुसारं कृतिका रोहिणो मृगशीर्ष नक्षत्त्रत्रयं तालिवानदेशाद् भारतवर्षस्योत्तर प्रदेशर्द्धभागं यावदभिन्यस्तम् एतेषां नक्षत्राणां शनिराहु पीडितत्वाद् रुधिरपातोऽराप्तिश्च प्रत्यक्षमेव दृश्यते । संहितायां अन्ये विषया यथा दकार्गलम्, वास्तुशास्त्रम्, रत्नलक्षणम्, वृक्षायुर्वेद उल्कापात:, सामुद्रिक शास्त्रश्च सर्वथा वैज्ञानिकतामङ्गीकुर्वन्ति । धूमकेतुनामुद्य विषये वैज्ञानिक अध्ययनं कुर्वन्ति संहिताशास्त्रेऽपि धूमकेतूल्कादीनां फलं चरप्रोक्तं तद् वैज्ञानिकदृष्ट्या समीचीनमेवेति ऋतुविज्ञानं वृष्टिविज्ञानं वायुविज्ञानञ्च संहितायां प्राप्यन्ते । नारदीय संहितायां वृष्टिविषये श्लोकोऽयं प्राप्यते यत् ।[१४]

''सिंहेभिन्ने कुतोवृष्टिरभिन्ने कर्कटे कुत: । कन्योदये प्रभिन्ने चेत्सर्वथा वृष्टिरुत्तमा ।।'' यदि सिंहसंक्रान्तौ वृष्टिर्भेधा: वा स्यु: कर्कसंक्रान्तौ वृष्टिर्वायुर्भेधो वास्युश्चेत्तर्हि वर्षेऽत्युत्तमा वर्षा भविष्यन्तीति वक्तव्यम् । एतरसव्रमृत्युविज्ञानतुल्यं वैज्ञानिकतां प्रतिपादयति संहिताज्यौतिषस्य ।

**होराज्यौतिषस्य वैज्ञानिकता -**

होरा ज्यौतिषशब्देन जातकशास्त्रमतं स्वीकर्त्तव्यम् । अस्मिन् स्कन्धे जातकस्य जन्मपत्रिकां निर्माय दशान्तर्दशाऽष्यकवर्ग षड्वर्गभावफल दृष्टिफल राजयोग नामसयोग स्त्रीजातकादि विविध विषयाणां विचारपूर्वकं जातकस्य भविष्यफलं प्रोच्यते ।

यदा जातकस्य जन्म भवति तदा तत्समयानुसारं लग्नमानीयाऽकाशीय ग्रहाणां स्थापना तत्तद्राशिमध्ये क्रियते । जन्मकुण्डली, कस्यचिज्जातकस्य जन्मसमये रवगोलीयग्रहस्थितिरेव भवति । या राशि: पूर्वक्षितिजे समुदिता भवति तद्राशिरेव लग्नम् । पश्चिमक्षितिजे या राशिरस्तुमुपागच्छति स्वैव सत्पमभावराशि: । एवं द्वादशभावेषु राशिन्यासं विधाय पुनश्चभावेषु ग्रहाणां स्थापनाज्जन्मचक्रं निर्मीयते । एवं जन्मपत्रिकायां वैज्ञानिकत्वं प्रतिभाति । तद्यथा ।[१५]

**''कालाङ्गानि वराङ्गमाननमुरोहृत्क्रोडवासोभृतो ।**
**वस्तिर्व्यञ्जनमुरुजानुयुगले जङ्घे ततोऽङ्घ्रिद्वयम् ।''**
**''मेषाश्विप्रथमानवर्क्षचरणाश्चक्रस्थिता शशयो ।**
**राशिक्षेत्र गृहर्क्षभानिभवनं चैकार्थ सम्प्रतया ।।''**

अस्य कालपुरुषस्योङ्गविभाजनोदेश्यनिदं वर्तते यद् यस्यां राशौ यादृशो ग्रहोबलो निर्बलो वा स्यात्तत्र तादृश एवं रोगोभवति । अङ्गानां सुबलत्वं निर्वलत्वं भवितुमर्हति । एतत्तु सर्वथा सत्यमत एव विज्ञान सम्मतमेव । ये ये ग्रहा: पृथिव्या:

समीपे वर्त्तन्ते तेषां ग्रहाणां प्रभावो मनुष्याणामुपरि बहुदृश्यते । दैवज्ञोर्यदि परीक्षणं विधीयते तर्हि फलितज्जोतिषस्य वैज्ञानिकत्वान्युन्मीलितानि भवन्ति । अनेकेषां जातकानां जन्मकुण्डलीभि स्तत्तज्जीवनघटनानां कोऽपि देवज्ञ: परीक्षणं कुर्यात् तेषां भाविघटनां सूचयेच्चेतर्हि पूर्णप्रायोगिक दृष्ट्या फलितज्यौतिषस्य वैज्ञानिकता स्वयममेव प्रामाण्यमुपस्थापयिष्यति ।

एतेन प्रामाणिक विवरणेन ज्योतिविर्ज्ञानस्य वैज्ञानिकत्वं ज्ञातुं शक्यते दैवज्ञ: फलानां सम्यकृतया परीक्षणं विधाय जनमध्ये ज्यौतिषशास्त्रस्य प्रामाण्यं दर्शयेयु: ।

**सन्दर्भसूची -**

१- ऋग्वेदज्यौतिषं, श्लो. ३
२. ऋग्वेदे - १/३३/८
३. गोपथब्राह्मणे ९/८
४. सि.शि. गोलाध्याय: - भुवनकोशे - ८
५.न ऋग्वेदे १/१६४/११
६. ऋग्वेदे १/१६४/४८
७. ऋग्वेदे १/२५/८
८. वृहत्संहिता- १/९
९. सि.शि.गोलाध्याय:३/६
१०. गोलपादे - ९
११. सूर्यसिद्धान्त: - ४/९
१२. बृहत्संहिता - आदित्यचाराध्याय: श्लो. २९,३०
१३. बृहत्संहिता - कुर्मविभागाध्याय:
१४. नारद संहिता
१५. वृहत्जातक - १/४

सहायकाचार्या, ज्योतिषविभाग:,
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी ।



# योगदृष्ट्या व्यक्तित्त्वं चिन्तनञ्च

**डॉ. ओमनारायणमिश्रा**

**व्यक्तित्त्वम्** - मनोविज्ञानस्य एक: श्लिष्टो विषय: वर्तते व्यक्तित्वम्। विषयेऽस्मिन् न केवलं पाश्चात्यमनोविज्ञाने चिकित्साशास्त्रे च व्याख्यानं प्राप्यते अपि तु भारतीयशास्त्रेष्वपि चर्चा प्राप्यते। साङ्ख्यदर्शने पुरुषस्य प्रकृति: त्रिगुणात्मिका इति कल्प्यते। तादृशमेव मानवव्यक्तित्वमपि सत्व-रज-तमादीनां गुणानां समाहार: एव।

योगशास्त्रे मानवशरीरं वात-पित-कफेत्यादीनाम् अन्तर्प्रकृतीनाञ्च योग: वर्तते। तथा च अन्तर्प्रकृतिरियं व्यक्तित्वं परिप्रकाशयति। सारांशत्वेन मानवस्य आन्तरिक-बाह्यगुणानाञ्च समाहार: एव व्यक्तित्वम्।

साङ्ख्य-योगरुभयो: सिद्धान्तयो: परिशीलनेन ज्ञायते यत् मानवानां त्रिगुणात्मकप्रकृतौ साम्यं न भवति अपितु भिन्नेषु जनेषु सत्व-रज-तमादीनां मात्रा भिन्ना भवति। तथैव भिन्नेषु जनेषु वात-पित्त-कफेत्यादीनां स्थिति: भिन्ना दृश्यते। पाश्चात्यसिद्धान्तेषु भारतीयदर्शनस्य प्रभाव: तु दृश्यते परञ्च व्याख्यापद्धति भिन्ना जायते। संदर्भेऽस्मिन् पाश्चात्यमनोवैज्ञानिकानां चिन्तनं तर्कपूर्णं जायते।

वाल्टरमिशेलमहोदयस्य चिन्तनं जायते यत् मानवव्यक्तित्वस्य तात्पर्यं व्यवहारस्य चिन्तन-संवेगयो: गुणविशिष्टयो: समाहार: एव। एतयो: गुणविशेषयो: नूतनपरीस्थित्या सह समायोजनं भवति व्यक्तित्वम्। तादृशरेव वैरोनमहोदयेनोक्तं यत् संवेग-चिन्तन-विशिष्टव्यवहारादिभि: व्यक्तित्वनिर्माणं भवति।

**आलपोर्टमहोदयस्य** व्यक्तित्वसंदर्भे चिन्तनं जायते यत् व्यक्तित्वं मानवस्य मनोशारीरिकतंत्राणां गत्यात्मकसंगठनं भवति। अनेन स: स्वकीयै: वातावरणै: सह अपूर्वं संयोजनं प्रदर्शयति।

**योग: -** व्युत्पत्तिदृष्ट्या पातञ्जलयोग: चित्तवृत्तिनेरोध एव। येषाम् आत्यन्तिकरूपेण चित्तवृत्तय: निरुद्धा: जायन्ते ते सर्वे स्वयंसिद्धा: इति प्रसिद्धा:। किञ्चित् कालं यावत् चित्तवृत्तीनां निरोध: योग: नैव अपि तु चित्तवृत्तीनां आत्यन्तिकैकान्तिकनिरोध: इति योग: ।

योगविषये ऋग्वेदे उक्तमस्ति यत् यै: देवै: विना प्रकाशपूर्णज्ञानिनां जीवनयज्ञोऽपि न साफल्यमाप्नोति। तेषु देवेषु विद्वद्भि: स्वबुद्धे: स्वकर्मणश्च योग: कर्तव्य:। तेषां बुद्धि: तद्देवेन सह तदाकारो भवति। तथा स: तेषां कर्मणि अप्याप्लावितो: भवति। अथर्ववेदे अपि उक्तमस्ति -

**अष्टचक्रा नवद्वारा देवानां पूरयोध्या।**
**तस्यां हिरण्मय: कोश: स्वर्गो ज्योतिषावृत:।।**[१]

अष्टचक्रयुक्ता: नवद्वारयुक्ता: च अस्माकम् एषा देहपुरी एका अपराजेयदेवपुरी अस्ति। अस्यां देहपूर्यामिको तेजस्वी कोशोऽस्ति। एतान् विहाय ऋग्वेदे, अथर्ववेदे चानैकेषु स्थलेषु योगवर्णनमवलोक्यते। तथा च योगस्य स्थिरतायां धारणायां परिपुष्टिर्भवति य: योगस्य प्राचीनत्वं सिद्धयति।

महाभारते याज्ञवल्क्यस्मृतौ च योगस्य आदिप्रवर्तकत्वेन हिरण्यगर्भ: प्राप्यते। महाभारते स: वेदे स्तुत: योगिभि: पूजित: तथा संसारस्य विभूत्वेन प्राप्यते योग:। श्रीमद्भागवतपुराणे अपि हिरण्यगर्भो योगस्य प्रवर्तकत्वेन प्राप्यते।

**व्यक्तित्वचिन्तनयो: गुणात्मकनिरूपणम् -** व्यक्तित्वं जनस्य मनोशारीरिककारकाणां गत्यात्मकसंघटनं जायते। व्यक्तित्वे न केवलं वाह्यकारका: ये दृश्यमाना: जायन्ते प्रभवन्ति अपितु आन्तरिका: करकाश्चेति महत्वपूर्णा:। आन्तरिके पक्षे शरीरस्यान्तरिकी संरचना, रसायनोत्पादनं निर्गमनञ्च प्रभवन्ति तथैव वाह्यशारीरे जनानां शारीरिकं सौष्ठवं क्रियाशीलत्वञ्च मुख्यभूमिकां निर्वहन्ति।

व्यक्तित्व-चिन्तनयो: निरूपणेऽस्मिन् प्रसङ्गे साङ्ख्यदर्शनस्य अनुभूतिगम्या: त्रिविधा: गुणा: महत्त्वपूर्णा: सन्ति यथा- सत्त्वगुण:, रजोगुण:-तमोगुणश्चेति। सत्वस्य कार्यं सुखम्। रजोगुणस्य कार्यं दु:खम्। तथैव तमोगुणस्य कार्यं मोहोत्पादनमेव। गुणा: दर्शनेन्द्रियगोचरा: भवन्ति। तदुक्तं वर्तते यथा - **गुणानां परमं रूपं न दृष्टिपथमिच्छति** इति। सर्गकाले एते त्रयो गुणा: एव मिलित्वा सृष्टिकार्यं सञ्चालयन्ति। लयकाले बीजरूपेण प्रकृतौ एते विलीना: जायन्ते। एषां गुणानां साम्यावस्था प्रलय: सृज्यते।

अस्य प्रभाव: जनानां चिन्तनशक्तौ तथा च सम्पूर्णे व्यक्तित्वे भवति। सत्वगुण: श्वेतवर्णीय:, सुखदायक:, प्रकाशक: लघुश्च भवति। रजोगुण: दु:खदायक: प्रेरक: तथा च रक्तवर्णीयो भवति। तमोगुण: अवरोधक: प्रेरक: कृष्णवर्णीयश्चेति।

**सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रज:।**[२]
**गुरुवरणकमेव तम: प्रदीपवच्चार्थतो वृत्ति:।।**

प्रत्ययसर्ग इति साङ्ख्यस्याकर्षक: मनोवैज्ञानिकञ्च विमर्शो जायते। प्रतीयन्ते अनेनिति प्रत्यय: बुद्धि: तस्य सर्ग: प्रत्ययसर्ग इत्युच्यते। तत्र बुद्धि: धर्माधर्मद्यष्टरुपोपन्ना एकरूपेण अवस्थिता सतीसमष्ट्या प्रत्ययसर्गेति संज्ञया बोध्यते। एष: प्रत्ययसर्ग: आदौ चतुर्विधो भवति। यथा - **विपर्यय, आशक्ति:, तुष्टि: सिद्धिश्चेति**। तत्र **विपर्ययो** नाम मिथ्याज्ञानं तस्मिंतद्बुद्धिर्वा। अयं पञ्च प्रकारका: सन्ति यथा - **तम:, मोह:, महोमोह:, तामिस्र:, अन्धतामिस्त्र**श्चेति।

**आशक्ति: –** करणकैवल्यहेतुका आशक्ति:। एषा अष्टाविंशतिप्रकारका: सन्ति। यथा - आन्ध्य–बाधिर्य-अजिध्रत्व–मूकत्व-जडत्व–कुष्ठित्व-पञ्गुत्व-कौण्व–क्लैव्य-उदावर्त-उन्माद-असुवर्णा-अज्ञत्रानमलिना-मनोज्ञा-अदृष्टि-अपरा-सुपरा-असुनेत्रा-वसुनाडिका-अनुत्तमाम्भसिका-अप्रतार-असुतार-उतारतार-अरम्यक-असदामुदित-अप्रमोद-अमुदित-अमोदमाना च।

**तुष्टि: -** तुष्टि: नवधा भवति। यथा **-प्रकृति-उपादान-काल-भाग्य-पार-सुपार-परापार-अनुत्तमाम्भ-उत्तमाम्भरूपात्ति:।**

**सिद्धि: -** सिद्धि अष्टविधेत्युच्यते। यथा -अणिमा-लघिमा-महिमा-गरिमा-प्राप्ति- प्राकाम्य-वशित्व-ईशित्वरूपा:।

अस्य प्रत्यसर्गस्य प्रभाव: जनस्य मानसिकस्थितौ भवति यद्यपि अस्य प्रभाव: न भवति अपितु वक्तं शक्यते एतेन अस्माकं चरित्रनिर्माणं न केवलं अपितु समष्टि निर्माणं जायते। पूर्वे यथोक्तं वर्तते साम्यावस्था गुणानाम्। अस्यां साम्यावस्थायां परिवर्तनेन विविधा प्रकृति: निर्मिता जायते।

**त्रिगुणसिद्धान्ताधारितं व्यक्तित्वम् -** मानवव्यक्तित्वनिर्माणे जैविकप्रक्रियाया: भूमिका महत्त्वपूर्णा अस्ति। यद्यपि अस्माकं सम्पूर्णव्यक्तित्वं मनोशारीरिकतत्त्वाभ्यां विनिर्मितम्। व्यक्तित्वे यावत् महत्त्वं गतिशीलस्य रशायनस्य शारीरिकसौष्ठवस्य च भवति तावदेव महत्त्वम् अदृश्यगुणानामपि उपजायते।

यथोक्तं पूर्वं सत्वस्य लक्षणं प्रकाशकं श्वेतवर्णीया च जायते सत्वस्य प्रकृति: परोपकारिणी चेति।

अत एव यस्मिन् शरीरे वा व्यक्तित्वे सत्त्वगुणानां प्राधान्यं भवति तस्य व्यक्तित्वं सरलं व्यावहारिकञ्च भवति। तेषु जनेषु सहकारित्वं भावप्राधान्यञ्चाधिकं भवति। यस्मिन् व्यक्तित्वे तमोगुणानां प्रभावाधिक्यं भवति चेत् तस्मिन् व्यक्तित्वे उत्साहोर्जा च बलवती भवति। गुणोऽयं प्रभावोत्पादक: दु:खकारक: परन्तु सृजनात्मको भवति। व्यक्तित्वे अस्य गुणस्याधिक्येन जन: साहसी वीर्ययुक्त: आमोद-प्रमोदविलाशी च भवति। एतेषां गुणानां निम्नप्रकारेण कर्तुं शक्यते। तद्यथा -

**त्रिगुणात्मकव्यक्तित्वं चिन्तनञ्च**

तमो प्रधाने व्यक्तित्वे नकारात्मिकाशक्ति: बलवती भवति। नकारात्मकचिन्तनस्य प्रामुख्यं भवति एतस्मिन् व्यक्तित्वे। धनस्य बलातपहरणं सुख-मोहादिकी प्रवृत्ति: धनार्जनायेच्छा च प्रबला भवति एतेषेषु जनेषु।

भारतीयायुर्वेदे त्रिगुणेषु वैषम्य: दोषकारको भवति। त्रिगुणेषु वैषम्याधारिद्दोषा: व्यक्तित्वं तथा च चिन्तनं प्रभावयन्ति।

**व्यक्तित्वानुगुणं चिन्तनम् -** चिन्तनं व्यक्तित्वस्य महत्त्वपूर्णमङ्गं वर्तते। यादृशं व्यक्तित्वं भवति तादृशमेव चिन्तनं जायते। व्यक्तित्वं मनोगत्यात्मिका एका प्रक्रिया। मनोगत्यात्मिकाप्रक्रियाया: आसय: वर्तते जैविकाजैविकक्रियाया: प्रक्रियाया: सङ्घटनम्। तेषु सङ्घटने व्यक्ते: आचार: व्यवहार: वाह्याकृति: स्वास्थञ्च क्रियमाणो भवन्ति।

साङ्ख्ययोगदर्शने प्रकृति: त्रिगुणात्मिका इति विवक्षिता। तथा च प्रकृति: क्रियाशीला वरीवर्ति। प्रकृतौ क्रियाशीलत्वं तस्या त्रिगुणाधारेण अनुमीयते। भौतिकदृष्ट्या अपि कल्प्यते यत् यादृशी प्रकृति: भवति तादृशमेव व्यक्तित्वं सञ्जायते। प्रकृत्यानुगुणं व्यक्तित्वं सप्तविधं भवितुमर्हति। तस्य निर्माणं त्रिगुणात्मकसिद्धान्तस्याधारे भवति।

प्रसङ्गेऽस्मिन् व्यक्तित्वस्य निर्धारका: भवन्ति सत-रज-तमेत्यादय: गुणा:। सत्वं लघु: प्रकाशञ्च भवति तादृशरेव रज: उत्साहकारक: सौन्दर्यबोधकश्च तथा च तमोगुणाधिक्येन जनेषु प्रमाद: विसाद: नकारात्मकचिन्तनञ्च वर्धते। इत्यनया व्यक्तित्वम् इत्थं निरूप्यते। तद्यथा -

**(क) निष्क्रियचिन्तनम् -** तटस्थव्यक्तित्वे एतादृशं चिन्तनं जायते। येषु इत्थं चिन्तनं जायते ते जना: निष्क्रिया: भवन्ति। यद्यपि अत्र निष्क्रियत्वं मूढता न जायते। भगवत्प्रसादत्वेन यत् मिलति तस्मिन्नेव सुखमनुभवन्ति एते। न केनचिदपेक्षा न कस्मिन्नपि अपेक्षा भवति अस्मिन् चिन्तने। चिन्तनं प्रायश: निर्मूलं भवति न तु धनस्य चिन्तनं कुर्वन्ति न तु निधनस्य। प्राय: एते जना: एकाकीजीवनं यापयन्ति। संसारे एतेषां समर्पणं न्यूनमेव जायते। एते जना: तावदेव उत्पादयन्ति यावत् तेषामावश्यकता भवति। एतेषां श्रेणीनिर्धारणं दुष्करं भवति यतो हि एते विरला: भवन्ति येषु सामाजिकं पारिवारिकञ्च दायित्वं न भवति।

**(ख) लोकोपकारिचिन्तनम् -** येषां व्यक्तित्वं वहिर्मुखी, मानवतावादी विद्वत्वरेणयञ्च भवति तेषां चिन्तनं जनकल्याणकारीति मन्यते। एते जना: महान्त: पण्डिता: भवन्ति। लोककल्याणाय तेषामुपयोगिता कथं भवेदिति विषये प्रायश: चिन्तयन्ति। लोककल्याणाय एतेषां जीवनम्। परमार्थाय सर्वाणि कार्याणि विदधन्ति। लौकिकजीवने समस्याया: सार्थकसमाधान सरलतया अन्वेषयन्ति। एतेषु मायाया: प्रभाव: क्षीणो जायते।

व्यष्टिभावं विहाय समष्टिभावं प्रति चिन्तयन्ति। व्यक्तिगद्धनं नेच्छन्ति, न तु एतेषां धनार्जस्य औत्सुक्यं भवति अपितु यद्धनं

वर्तते तेषां जनहिताय कथमुपयोगः भवेदिति चिन्यन्ति। श्रेण्यामस्यां प्रायशः समाजसेविनः, धर्माचार्याः, कवयः लेखकाश्चागच्छन्ति।

**(ग) प्रभुत्वात्मकचिन्तनम् -** अन्तर्मुखिविदुषां चिन्तनं स्वार्थपरको भवति। इमे जनाः परसुखार्थैः सह आत्मसुखाय अपि चिन्तयन्ति। इमे प्रतिभाशालिनाः मायावृत्तो भूत्वा आत्मसुखं प्रति चिन्तयन्ति। आत्मसुखं कथं लभेत्? इत्यर्थम् आत्मप्रतिभायाः पूर्णोपयोगः कुर्वन्ति। महत्वाकांक्षिणः इमे जनाः राष्ट्रनिर्माणे समाजनिर्माणे च महत्त्वपूर्णं योगदानं प्रयच्छन्ति। साहसिकाः इमे जनाः राष्ट्ररक्षायां, औद्योगिककार्येषु च महतीं भूमिकां निर्वहन्ति।

परन्तु योगदानोऽयं प्रथमम् स्वार्थपूर्णो भवति। स्वस्य सामाजिकस्थितिं प्रति चिन्तनशीलाः भवन्ति। समाजे प्रायशः एतेषु जनेषु केचन छद्मसमाजसेविनः, अभियन्तारः तथा च आधुनिकचिकित्सकाश्च अस्यां श्रेण्यामागच्छन्ति।

**(घ) प्रभवात्मकचिन्तनम् -** समाजसुधारकं व्यक्तित्वं भवति एतेषां चिन्तकानाम्। समाजे एतेषां जनानां भूमिका सर्वाधिकमहत्त्वपूर्णा भवति। समाजस्य नेतृत्वकर्तारः एते। प्रायशः राजनैतिक-कूटनीतिककार्येषु तथैव औद्योगिककार्येषु च इमे सिद्धहस्ताः भवन्ति। एतेषां जनानां मस्तिष्कः उत्पादनकार्येषु निमग्नो भवति। समाजस्य भौतिकविकासाय एतेषां भूमिका विशिष्टा। व्यवस्थापरिवर्तने एतेषां जनानां भूमिका अग्रगण्या भवति। इमे जनाः व्यावसायिनः, उद्योगपतयः, प्रखरचिन्तकाः, राष्ट्रनिर्मातारः, चिकित्सकाः, सैनिकाः, अभियन्तारश्च भवन्ति।

**(ङ) लोभपरकचिन्तनम् -** व्यक्तित्वेन नेतृत्वकर्तारः भवन्ति एतेषां चिन्तकानाम्। नूतनविचारयुक्तानाम् एतेषां जनानां परिवर्तनकारिणीच्छा सदैव बलवती भवति। प्रत्येकं क्षेत्रे एते जनाः नेतृत्वमिच्छन्ति। यद्यपि एतेषु लोकहितकारिणिगुणवत्तायाः अभावो विद्यते। व्यक्तित्वे एते दम्भिनः, आलेचकः, इर्षालुप्रवृत्तिकाः जनाः भवन्ति। सर्वत्रलाभमनुचिन्तयन्ति इमे जनाः। अब्राहममाशलो एतादृशानां जनानां स्थानं आदिमात् तृतीयावस्थापर्यन्तं परिकल्प्यते।

समाजे एतेषां भूमिका दृष्टनेतृत्वकर्तुः, छद्मराजनेतृत्वकर्तुः वा धूर्तवणिकस्य भवति। चारित्रिदृष्ट्या इमे जनाः सर्वत्रकामुकदृष्ट्या आलोकयन्ति। आपराधिकप्रवृत्तिं सेवयन्ति तथा च यत्र लाभो विद्यते तत्र दुष्कर्मणापि कार्यं साधयन्ति। राष्ट्रनिर्माणे समाजे च एतेषां सहकारिता प्रायशः ओलोचनीया एव भवति।

**(च) विखण्डनात्मकचिन्तनम् -** षडयन्त्रकारिव्यक्तित्वं भवति एतेषां चिन्तकानाम्। समाजे सर्वत्र विधटनकार्यं कुर्वन्ति कारयन्ति च। एतेषां जनानां बौद्धिकक्षमता अधिका भवति परञ्च विश्लेषणात्मकक्षमता न्यूना भवति, अत एव एतेषां चिन्तने आलोचनाशक्तिः न विद्यते। स्वयमेव न जानन्ति यत् कार्यं कुर्वन्ति तस्य कार्यस्य परिणामः किं भविष्यति? परिणामस्य चिन्तनं विना लाभचक्षुसा सर्वाणि कार्याणि विदधन्ति। **अब्राहममासलो** आवश्यकतापदानुक्रमे प्रथमद्वयोः स्तरयोः एते जनाः आगच्छन्ति, येषां भौतिकावश्यकतायाः पूर्तिः न जायते। अत एव इमे जनाश्च सर्वत्र आत्मलाभाय चिन्तयन्ति।

सामाजिकदृष्ट्या एतेषां भूमिका सहयोगपूर्णा न भवति। एते जनाः अपि अन्तर्मुखिनो भवन्ति। मनसि सर्वादा एतेषां विखण्डनात्मिका याजना जायमाना भवति। सामाजिकषडयन्त्रम्, असहिष्णुभावं, क्लेशादिकञ्च जनयन्ति। राष्ट्रियस्तरे एतेषां भूमिका द्रोहात्मिका, अनिष्टकारिका च भवति।

**(छ) पाशविकचिन्तनम् -** अधमः भवन्ति एते चिन्तकाः। समाजे एतेषां स्थितिः अत्यन्तक्षीणा भवति। अर्थात् अधमव्यक्तिनां कार्यं समाजिकदृष्ट्या अनुपयोगी भवति। न केवलं एतेषां चरित्रमशिष्टं भवति अपि च सामाजिकषडयन्त्रे एतेषां भूमिका स्पष्टा भवति। न तु आत्मना सुखमनुभवन्ति नैव अन्येभ्यः सुखं प्रयच्छन्ति। लोभीप्रवृत्तिकाः भवन्ति इमे जनाः। राष्ट्रियान्ताराष्ट्रियस्तरे आतङ्के वैचारिकविषोत्पादने च सिद्धहस्ताः भवन्ति। अतः मानवीयविकासे एतेषां भूमिका नकारात्मिका भवति। एतेषु नियन्त्रणम् आवश्यकम्। स्वतन्त्ररूपेण अधमाः समाजेभ्यः अहितकारकाः सन्ति। एतेभ्यः संवैधानिकीदृष्टिः तथा च तदनुगुणं दण्डव्यवस्था अपेक्षिता वर्तते। धनार्जनाय द्रोह-विद्रोह-आतङ्क-अधमकार्याणि सम्पादयन्ति इमे जनाः। अत एव कथ्यते,

अधमा धनमिच्छन्ति धनं मानं च मध्यमा:। ३
उत्तमा मानमिच्छन्ति मानो हि महतां धनम्।।

**(४.५) कोषाधारितव्यक्तित्वम् -** तैतरीयोपनिषदि पञ्चकोषाणामालेख: प्राप्यते। यत्र आध्यात्मिकशरीरं पञ्चकोषेषु विभक्त: वर्तते। ते पञ्चकोषा: सन्ति - अन्नमयकोष-प्राणमयकोष-मनोमयकोष-विज्ञानमयकोष-आनन्दमयकोषेत्यादय:।
एतेषां सर्वेषां प्रपूर्ति: चित्तशुद्धर्थमावश्यकता जायते। मानवशरीरस्य चित्तशुद्धि: क्रमिकरूपेण भवति। यत्र सर्वेषां कार्याणां संस्कार: प्रथमतया अन्नमयकोषे आगच्छन्ति। तत्परं कार्याणां विश्लेषणमनुशीलनञ्च जायते।
यानि कार्याणि मायारहितानि जातानि तानि पुनर्योजितानि भवन्ति अन्यथा प्राथमिकस्तरे एव समाप्तानि भवन्ति।

**(क) अन्नमयकोषयुक्तचिन्तनम् -** शरीरस्य भौतिकावश्यकताया: प्रपूर्ति अन्नमयकोषादेव भवति। अत्र बुभुक्षा सर्वेषां कारकाणाम् आधार: भवति। बुभुक्षया जना: श्रमं सम्पादयन्ति। परिश्रमेण अन्नसंग्रहणं कुर्वन्ति जना:। पाककार्यादिकं कृत्वा अन्नमयकोषस्य तृप्त्यर्थं ग्रहणं कुर्वन्ति। येन शरीरं स्वस्थं भवति। तथा चाग्रिमे स्तरे तच्छरीरम् आत्मना चिन्तयति।

**(ख) प्राणमयकोषयुक्तचिन्तनम् -** पञ्चप्राणानां परिकल्पना अत्र विद्यते। ते सन्ति यथा - प्राण-अपान-समान-व्यान-उदान। एतेषु प्राण: प्रत्यक्षीकरणस्य कार्यं करोति। य: पञ्चज्ञानेन्द्रियै: बाह्यत: सम्वेदनां प्राप्य तस्या: समालोचनां करोति। शरीरस्य अपरा शक्ति: जायते अपानशक्ति:। यस्या: कार्यं शरीरस्य आन्तरिकशुद्धिकरणम्। अपानशक्त्या शरीरं स्वेद-वायु-विकारादिकं वहिर्निष्काषयति। शरीरस्य समानशक्ति: जठराग्निं प्रदीप्य भोजनं पाचयति। यया सम्पूर्णशरीरे उर्जाप्रवाह: सारल्येन भवेत्। अपरा शक्ति: शरीरस्य व्यानशक्ति:। यस्या: कार्यं भवति पाचनादनन्तरं रक्त-मज्जा-वसा-मांशादीनां निर्माणम्। प्राणमयकोषस्य अन्तिमो स्तर: जायते उदानशक्ति:। या चिन्तनस्य कार्यं करोति। नवीनसङ्कल्पानां विकास: अनया शक्त्या एव भवति।

**(ग) मनोमयकोषयुक्तचिन्तनम् -** मन: बुद्धि-शरीरयो: सम्बन्धस्य सर्जको भवति। सर्वप्रथमं मनोमयकोषस्य प्रमुखं कार्यं भवति प्राणमयकोषस्य नियन्त्रणम्। येन कोषेन शरीरस्य सामान्यकार्यं सुचारुरूपेण भवेदिति।मनोमयकोष: ज्ञानेन्द्रियै: प्रदत्तसूचनानां विश्लेषणं कृत्वा प्राणमयकोषस्य पञ्चप्राणान् निर्दिशति किं करणीयमकरणीयं किम्?

**(घ) विज्ञानमयकोषयुक्तचिन्तनम् -** मनोमयकोष: ज्ञानेन्द्रियै: प्राप्तसूचनानां यथा विश्लेषणं करोति तस्य अस्माकं जीवने का प्रासङ्गिता जायते अस्य निर्धारणं करोति। सुख-दु:खादीनां सङ्कल्पस्य निर्णय: विज्ञानमयकोषात् जायते। मनोमयकोष: समेषां प्रागानुभवानां साम्प्रतिगानुभवनाञ्च केन्द्र: वर्तते। अत्र बहुप्रकारिका: सूचना: जायन्ते। तासु सूचनासु प्रासङ्गिकी सूचना का? कया सूचनया अस्माकं जीवनस्य सार्थकताया: सिद्धिर्भविष्यति इत्येषां प्रश्नानुत्तरं शोधयति।

**(ङ) आनन्दमयकोषयुक्तचिन्तनम् -** आनन्दमयकोष: सच्चिदानन्दस्वरूपस्य स्थिति: जायते। कोषेऽस्मिन् समस्तलौकिकविषयाणां चिन्तनं समाप्तं भवति। तथा आत्मसाक्षात्कारस्य विषया: ईश्वरसमर्पणस्य विषयाश्च अवशिष्टविषयत्वेन तिष्ठति।

एतेषां समस्तकोषाणां प्रभाव: अस्माकं भौतिकजीवने भवति। यथा क्रमे कोषाणां प्रपूर्ति भवति तथा एव क्रमे अस्माकं व्यक्तित्वं शुद्धं विभाति। एतस्य पञ्चकोषस्य प्रभाव: न केवलं व्यक्तित्वमुपरि भवति अपि च चिन्तनेऽपि भवति।

**(४.६) त्रिदोषसिद्धान्ताधारितचिन्तनम् -** भारतीयायुर्वेदशास्त्रं त्रिदोषसिद्धान्तमुपरि प्रतिष्ठितमस्ति। यतो हि शरीरस्य मूलकारका: सन्ति दोष-धातु-मला:। वायु: पित्तं कफश्चेति दोषत्रयमेव शरीरे रोगानुत्पादयन्ति। देहधारणात् एतेषां वातादिदोषत्रयाणां प्रत्येकस्य पञ्चप्रकारका: भवन्ति। यदा एते शरीरं दूषयन्ति तदा एतेषां संज्ञा दोष: एव। यदा एते शारीरिकस्वास्थ्यं रक्षयन्ति तदा एतेषां धातु: इति संज्ञा। तथैव शरीरमलिनीकरणात् मला इति संज्ञा उपजायते।

यदा एतषां त्रयाणां वात-पित्त-कफादीनां स्थितौ साम्यं वर्तते चेत् शरीरं स्वस्थं भवति तथा च स्वस्थे शरीरे एव स्वस्थमष्तिष्कस्य विकाशो जायते।

यदा एतेषु एकस्य द्वयोर्वा ह्रास: वृद्धिर्वा भवति तदा शरीरे विकारोद्भवो जायते। दोषवैषम्यात् रोगोत्पत्ति:

दोषसाम्यात् आरोग्यं भवतीति महर्षिचरकेणोक्तं वर्तते।
मुनिकश्यपेनोक्तं वर्तते यथा- वातादितदोषाणां साम्यतावशात् शरीरस्य वृद्धि: तथा वर्ण-बल-ओज-जठराग्नि-मेधा-आयु-सुखेत्येषां प्राप्ति: भवति। किञ्च यदा एते वैषम्यावस्थायामागच्छन्ति। तदा तस्मिन् शरीरे विकारमेव जनयन्ति। एते वात-पित्त-कफ: एव शरीरस्य उत्पत्तिकारक: विद्यते।
यथा -
**वात: -** दोषत्रयेषु वातस्य माहात्म्यं विवृण्वन् श्रीशारंगधराचार्य: प्रतिपादयति यथा -पित्तं कफस्तथाऽन्ये मलधातव: पङ्गव: सन्ति अर्थात् एकस्मात् अन्यं स्थानं प्रति गमनागमने अक्षमा: सन्ति। तेषु तद्विषये वायुरेव सक्षमोऽस्ति य: तान् एकस्मात् स्थानात् अन्यं स्थानं प्रति नयति। वायो: लक्षणं प्राप्यते अनेन प्रकारेण यत् वात: वायुर्वा शब्द: वा-धातोरुत्पन्नोऽस्ति। यस्यानुसारेण यत् तत्वं शरीरे गतेरुत्साहयोर्वा उत्पन्नं करोति तत् तत्त्वं वायु: वात् वा उच्यते। अस्य तत्त्वस्य विकृतिवसात् रोगा: जायन्ते तथा च मृत्युरपि भवितुमर्हति।

वायो: गुणविषये उक्तमस्ति यत् वायु: रजोगुणमय-सूक्ष्म-शीत-रुक्ष-लघु-चञ्चलगुणवान् भवति। अन्येषां मते तु रुक्ष-शीत-लघु-सूक्ष्म-चल-विषद-खर-इत्येतै: सप्तगुणौ: युक्तो भवति वायु:। केचन तु रुक्ष-लघ–शीत-दारुण-खर-विषदेत्येतै: गुणै: युक्तै: भवति वायुरिति वदन्ति।

वैद्यवर: धनवन्तरिस्तु वायुगुणान् गणयति अनेन रूपेण यत् वायु: अव्यक्ततत्वेन स्थित्वा अपि व्यक्तत्वेन कार्यं करोति। स: रुक्ष-शीत-लघु-खरगुणवान् अस्ति। स: तीर्यग्गामी, शब्दस्पर्शरूपद्विगुणवान्, रजोमय: अचिन्त्यवीर्यवान् दोषाणां नेतृत्वकर्त्ता, रोगसमूहेषु राजासदृश:, आशुकारी तथा च सदैव गतिमान् भवति।

एष: वायु: पक्वाशय-कटी-सक्थि-श्रौत्र-अस्थि-त्वचेत्येतेषु अवस्थानं करोति। तेष्वपि पक्वाशय एव मुख्यत: वायोरधिष्ठानं प्रतीयते।

वैद्यवरशारङ्गधराचार्येणोक्तं यत् लघु-रुक्ष-मिताहार-अतिशीतपदार्थानां सेवनात्, अतिश्रमाचरणात्, प्रदोषसमये, काम-शोक-भीति-चिन्ता-रात्रिजागरणप्रभावात्, अभिधातात्, अधिकस्नानात्, भोजनजीर्णतावसात् तथा रसरक्तादिधातूनां क्षयात् प्रकूपितो वायु: एतेषां विपरीदाहारविहारै: प्रशाम्यति।

अनेन स्पष्टं भवति यत् वायु: यै: गुणै: युक्तो भवति तद्विपरीतानां गुणानां सेवनेन तथा यै: कारणै: वायु: प्रकुपितो भवति तद्विपरीतानां कार्याणां करणेन प्रकुपितो वायु: प्रशाम्यति।
**पित्तम् -** पित्तमपि त्रिदोषेषु एकम्। पित्तशब्द: चुरादिगणीयतप्-धातो: निष्पन्न: यस्यार्थौ भवति तपतीति पित्तम्। आहारपाक-धातुपाक-मलहाकादिक्रियाणां मूलप्रवर्तकत्वेन स्थितं देहाग्नितत्वमेव पित्तत्वेन ज्ञायते।

पित्तलक्षणं विवृण्वन् महर्षिचरको वदति यत् पित्तमस्ति किञ्चित् स्नेहयुक्तम्-उष्णं-तीक्ष्णं-द्रवं-अम्लं-सरसकटुगुणयुक्तञ्च। पित्तेऽस्मिन् अतिस्नेहतत्वस्य अभावो विद्यते तथा दोषोऽयं शुक्ल-अरुणेति वर्णद्वयं परित्यज्य अन्यवर्णान् भवति।

एतत् तत्त्वं शरीरे उष्णतां समुत्पाद्य पाचनक्रियां सम्पादयति। पित्तं शरीरे दाह-उष्णता-पाक-स्वेद्-क्लेथ-कोथ-कण्डू-स्राव-रोगेत्यादीन् उत्पादयति।

इतोपि अनेकस्थानानुसारेण पित्तं केन प्रकारेण कार्यं करोति तद्विषये प्राप्यते यत् त्वचिस्थितं पित्तं शरीरिकान्ते वृद्धिकरं तथा लेप-अभ्यङ्ग-इत्यादीनां पाचकमस्ति, यकृतस्थितं पित्तं शोणितं निर्माति। नेत्रयुगले स्थितं पित्तं दृष्टिशक्तिं ददाति। हृदये स्थितं पित्तं मेधा-प्रज्ञा-इत्येतयो: द्वयोर्गुणयो: वृद्धिकारकञ्चास्ति।

नाभि-आमाशय-स्वेदमल-लसिका-रक्त-रस-चक्षु-त्वचेत्यादय: पित्तस्थानत्वेन स्वीकृतेऽपि नाभिरेव पित्तस्य स्थानमस्ति।

पित्तं पञ्चधा विभक्तमस्ति यथा - पाचक-भ्राजक-रञ्जक-आलोचक-साधनभेदेन। अन्नादीनां पाचकत्वात् अग्नाशयस्थं

पाचकं, लेप्याङ्गादीनां परिपाकेन त्वच: भ्राजनात् त्ववस्थं भ्राजकं, रसरञ्जनात् आमाशयस्थं रञ्जकं, रूपालोचनात् दृक्स्थम् आलोचकं तथा बुद्धि-मेधा-अभिमानाद्यैरभिप्रेतार्थसाधनात् हृद्गतं साधकमुच्यते।

अत: पित्तं प्रकुपितं कै: कारणै: वा प्रशमितं भवति तद्विषये शारङ्गधराचार्येण उक्तं यत् यै: कारणै: पित्तं प्रकुपितं भवतितद्विपरीतानां कारणानाम् आचरणेन प्रकुपितं पित्तं प्रशाम्यति। प्रकुपितप्रशमनक्षेत्रे विरेचनमेव श्रेष्ठम्। तदुपरि मधु-सर्पि-अजाक्षीर-अनन्तमूल-उत्पल-कुमुद-पद्मकिञ्जल्क-दुरालभा-इत्यादीनां औषधिनामपि पित्तप्रशमनक्षेत्रे उल्लेखनीया भूमिका अस्ति।

**कफ: श्लेष्मा वा -** केन जलेन फलतीति कफ: इति संज्ञा। कफगुणविषये भावप्रकाशग्रन्थे उक्तमस्ति यत् कफ: श्वेत-गुरु-स्निग्ध-पिच्छिल-शीतल-तमोगुणाधिक्यवत्-स्वादु-विदग्घवत्-लवणगुणान्वितो भवति। शारङ्गधराचार्येणापि तन्मतमेव समर्थितमस्ति। महर्षिचरकेणापि कफगुणा गणिता अनेन रूपेण यत् कफ-शीत-गुरु-मृदु - स्निग्ध-स्थिर-पिच्छिलेत्येतै गुणैरन्वितो भवति।

साम्यावस्थायां एष: मधुरगुणवान् भवति तथा वैषम्यावस्थायाम् एष: लवणगुणवान् भवतीति तेन विशेषतया उक्तम्। केन कारणेन कफ: प्रकुपितो भवति तद्विषये सुस्रुत: वदति यत् ये जना: स्वपन्ति मात्रं , व्यायामादिसंलग्ना: न भवन्ति, आलस्यमाश्रयन्ति तेषां कफ: प्रकुपितो भवति। तदुपरि मधुर-अम्ल-लवण-शीत-स्निग्ध-माषादिगुरुपदार्थ-पिच्छिल-अभिष्यन्दकारक-हायनक-यव-नैषध-इत्कट-माष-महामाष-गोधूम-तिल-पिष्ट-दधि-दुग्ध-कृशर-पायस-इक्षुनिर्मितपदार्थ-आनूप-देशजप्राणीनां मास-जलीयस्थानजप्राणीनां मास-वशा-मृणाल-कृशेरु-शृङ्गाटव-मधुरफल-वल्लीफलेत्येतेषाम् अधिकतया सेवनेन कफ: प्रकुपुतो भवति।

अत: साम्यावस्थायां स्थिता: एते दोषा: शरीरं परिपुष्टि: प्रददति तथा वैषम्यावस्थायां स्थित्वा एते एव शरीरं रोगाक्रान्तं कुर्वन्ति। अत: एतेषां साम्य-वैषम्योपरि एव शरीरस्य आरोग्यतानारोग्यते निर्भरे भवत:। गुरुपदिष्टमार्गेण योगमेव समभ्यसेदिति। गुरुसन्निधौ एव योगासन-प्राणायाम-ध्यानादीनामाभ्यास: करणीय:।

**सन्दर्भग्रन्था: -**


**आप्टे वामन शिवराम** : **संस्कृत हिन्दी शब्दकोश**,अशोक प्रकाशन दिल्ली, २००९

**शर्मा, श्रीराम** : **ऋग्वेदभाष्य**, संस्कृति संस्थान ख्वाजा कुतुब (वेद नगर)बरेली (उ.प्र.) १९८८

**कुमार कृष्ण, शास्त्री हरिदत्त** : **ऋक्सूक्त संग्रह**, मेरठ, साहित्य भण्डार,१९९९

**दत्त योगेश्वर** : **पातञ्जल योगसूत्र एवं व्यासभाष्य का आचारमीसांसीय अध्ययन**,सत्यम पब्लि. हाउस, नई दिल्ली, प्रथमसंस्क २०१०

**द्विवेदी, डा. प्रतिभा रानी** : **योग प्रतिभा** - पातञ्जलयोगसूत्राव्यासभाष्य, हिन्दी टीका, राधा पब्लिकेशन नई दिल्ली, प्रथम संस्करण - २०००

**देशवाल, जगवन्ती** : **अष्टाङ्गयोग** (राजयोग एवं हठयोग के संदर्भ में), अभिषेक प्रकाशन, पीतमपुरा नई दिल्ली, संस्क. २००५

**शर्मा, आर. ए.** : **शिक्षा अनुसन्धान के मूल तत्व एवं शोध-प्रक्रिया**, आर. लाल प्रकाशन, मेरठ, २०११

**सिंह, अरुण कुमार** : **उच्चतर सामान्य मनोविज्ञान**, पञ्चम् संस्करण, पटना प्रकाशन।



सहायकाचार्य: शिक्षाशास्त्रविभाग:

केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी




# वेदान्ते कालस्वरूपविमर्शः

नेपालदासः

**भूमिका**– कालस्वरूपविचारात्प्राक् ज्ञातव्-ं कालो नाम कः। साधारणतः काल इत्-ुच्-ते चेत् वर्तमानातीतभविष्-दित्-ेतेषां कल्पनं मनसि आ-ाति। वस्तुतः सः एव कालः। कालेनैव व-ं बद्धाः। कालमतिरिच्-ा किमपि कर्तुं चिन्त-ितुमपि न शक्-ते। वेदे अपि कालमाहात्-ं दरिदृश-ते। दर्शनभेदे कालविष-े तस्-ा स्वरूपमपि भिन्नं भिन्नमस्ति। म-ा वेदान्तानुसारेण कालस्वरूपमालोच्-ते। वेदान्तदर्शने बहवः भागाः वर्तन्ते। तेषु मतभेदाः भिन्नाः सन्ति। तेषां कालविष-े मतं स्वीकृत-ोच्-ते।

अत्र भाट्टाः कालं द्रव्-त्वेनैव स्वाकृतवन्तः। प्रभाकरमते कालस्-ा द्रव्-त्वम्, एकत्वम् अतीन्द्रि-त्वं विभूत्वञ्चेति। अद्वैतसिद्धान्ते ब्रह्मातिरिक्तस्-ा कस्-ाचित् पारमार्थिकस्-ा वस्तुनः अभावे कालनाम्ना कश्चन पारमार्थिकः पदार्थः नैव वर्तते इति। रामानुजाचा-र्स्-ा मते सत्त्वशून्-ं कालः इति। माध्वमतानुसारेण कालो नाखण्डः किन्तु क्षणलवाद्यनेकरूपोऽनित्-ः इति।

तत्रादौ द्वैतिनां विष-े उच्-ते– तत्र प्रधानाः मीमांसकाः। कुमारिलभट्टः मुरारिमिश्रः प्रभाकरश्चेति त्र-ो मीमांसकाः मुख्-ाः। एते एव क्रमेण भट्टमिश्रगुरवः इत्-ुच्-न्ते। तदितर मुरारिमिश्रस्-ा ग्रन्थे कालविष-े तथा किमपि न लभ्-ते। किन्तु कुमारिलभट्टेन कालस्वरूपविष-े आलोच्-ते।

**भट्टमीमांसकमतम्**– भट्टमते तावत् कालस्-ा द्रव्-त्वमेवाङ्गीकृतम्। भट्टचिन्तामणौ प्रत्-क्षसूत्रे – द्रव्-ाणि पृथिवी–अप्–तेज–वा-ु–आकाश–काल–दिक्–आत्मा–अन्धकार–शब्द–रूपाणि एकादश इत्-ुक्तम्। भाट्टमते कालः विभुः। अत एवात्मवद् नित्-त्वञ्च स्वीक्रि-ते। -द्यपि कालः विभुः नित्-ः तथापि उपाधिवशात् क्षण–मास–दिनादिव्-वहारः। तथा चोक्तम् मानमे-ोद-े कालस्-ापि विभुत्वेपि औपाधिको भेदे व्-वहारोऽस्ति इति। स च कालः षडिन्द्रि-ग्राह्यः अर्थात् कालः न स्वातन्त्रेण इन्द्रि-ैः गृह्यते। अथ च विष-ेषु गृह्यमाणेषु तद्विशेषणत-ा सर्वैरपीन्द्रि-ैः गृह्यते।

अद्वैतसिद्धौ प्रथमपरिच्छेदे श्रीमत्परमहंसपरिव्राजकाचा-र्मधुसूदनसरस्वतीपादैरपि कालस्-ा प्रत्-क्षविष-त्वं मीमांसासम्मतमिति प्रत्-ापादिकालस्-ा च रूपादिहीनस्-ा मीमांसकादिभिः सर्वेन्द्रि-ग्राह्यत्वाभ्-ुपगमाद् इति।

लघुचन्द्रिकाकारैः श्रीमद्गौडब्रह्मानन्दस्वामिपादैरपि विशेषोऽभिहितः। न सोऽस्ति प्रत्-ा-ो लोके कालो -त्र न भासते इति। मीमांसकानां मते ज्ञानं सर्वं किञ्चित्कालावच्छिन्नमेव स्वविष-ं गृह्णाति। क्षणस्-ातीन्द्रि-त्वेऽपि ज्ञानसामान्-सामग्रीवलात् ज्ञानमात्रविष-कत्वे बाधकाभावात्। क्षणस्-ा स्वातन्त्रेण प्रत्-क्ष-ोग्-ता नास्ति इति सूचना-ा अत्र क्षणस्-ातीन्द्रि-त्वमुक्तम्।

**प्रभाकरमीमांसकमतम्**– प्रभाकरमते कालस्-ा द्रव्-त्वम्, एकञ्चाम् अतीन्द्रि-त्वं विभुत्वम् उपाधिभेदेन क्षणादिव्-वहारहेतुत्वं वैशेषिकसिद्धान्तवदङ्गीक्रि-ते। वैशेषिकमतमेव एते अङ्गीकुर्वन्ति।

अथ अद्वैतवेदान्ते कालस्वरूपविष-े आलोच्-ते।

**उपनिषद्**– मुण्डकोपनिषदि तावत् कालस्-ोत्पत्तिराम्नाता। -था अन्-ेषां पदार्थानामुत्पत्तिकारणं ब्रह्म। तथा कालस्-ापि स्पष्टमभिहितम्। तत्रोच्-ते–

**तस्मादृचः साम-जुंषि दीक्षा -ज्ञाश्च सर्वे क्रतवो दक्षिणाश्च।**
**सम्वत्सरश्च -जमानश्च लोकाः सोमो -त्र पवते -त्र सू-र्ः।।** इति।

अत्र संवत्सरशब्देन कालः उच्-ते इति स्पष्टमेव। कालस्-ा वि-न्ता परमेश्वर एव इत्-ुक्तं बृहदारण्-के। तत्रोच्-ते एतस्-ा वा अक्षरस्-ा प्रशासने गार्गि: निमेषा मुहूर्ता अहोरात्राण्-द्र्धमासा ऋतवः सम्बत्सरा इति तिष्ठन्ति इति। अत्रापि कालविशेषाणां सङ्गणनात् कालः परमेश्वराधीनः इति स्पष्टमेव उक्तम्।

एवञ्च उपनिषन्मते कालस्-ोत्पत्तिमत्त्वेन विनाशित्वम्। अत एव अनित्-त्वमिति प-र्वसितम्।

शाङ्कराद्वैतमतम्- आचा-सिम्मते अद्वैतसिद्धान्ते त्रिविधा सत्ता अभ्-ुपगम्-ते।
(क) पारमार्थिकी सत्ता- -स्-ा सत्ता कालत्र-ेपि न ऽ-ाभिचरति सा पारमार्थिकी सत्ता।
(ख) ऽ-ावहारिकी सत्ता- संसारदशा-ां -ेषामाकाशादिनां -ाा सत्ता सा ऽ-ावहारिकी सत्ता
(ग) प्रातिभासिकी सत्ता- भ्रमवि-ाषीभूतपदार्थानां शुक्तिरजतरज्जुसर्पादीनां -ाा सत्ता सा प्रातिभासिकी।
तथा च, अद्वैतसिद्धान्ते ब्रह्मातिरिक्तस्-ा कस्-ाचित् पारमार्थिकस्-ा वस्तुन: अभावे कालनाम्ना कश्चन पारमार्थिक: पदार्थ: नैव वर्तते इति विदुषां मतम्।

खण्डनखण्डखाद्ये चतुर्थपरिच्छेदे कारणलक्षणखण्डनप्रसङ्गेन वर्तमानत्वादिप्रत-ााख्-ाानऽ-ाजेन वस्तुत: कालस्-ैव प्रत-ााख्-ाानं विहितं श्रीहर्षेण । -द्यपि पारमार्थिक: कश्चित्पदार्थ: कालो नाम अद्वैतवादिभि: नैव अङ्गीकर्तुं शक्-ते, तथापि कालस्-ा ऽ-ावहा-त्वि ऽ-ावहारिक: कश्चित्काल: अद्वैते स्वीकृत:। अत एव वेदान्तपरिभाषा-ां धर्मराजध्वरीन्द्रेण अनधिगताबाधितविष-ज्ञानत्वमिति प्रथम प्रमालक्षणस्-ा धारावाहिकप्रत-ाक्षे अऽ-ाप्तिवारणा-ा इत्-ाादि क्रमेण। अनेन हि ग्रन्थेन स्वसिद्धान्ते कालस्-ा सत्ता तस्-ा प्रत-ाक्षविष-ाता चोक्ता। अस्मिन्प्रसङ्गे एव शिखामणिनामकटीका-ां कालस्-ा प्रत-ाक्षज्ञाने एव विशेषणत-ाा भानम्। न त्वनुमित-ाादिपरोक्षज्ञानेपि प्रतिपादितम्।

ब्रह्मसूत्रं -ादद्वैतीनां मूलभूतं तत्र शाङ्करभाष्-े वा कालविष-े विचारणा न दृश्-ते। वेदान्तपरिभाषादिषु प्रकरणग्रन्थेषु आकाशादीनां ऽ-ावहारिकप्रमे-ावर्ग: -द्यपि निरूपित: तथापि तत्र कालविष-े स्वातन्त्र्-ेण न किमपि उक्तम्। अद्वैतीनां मते -था आकाशादीनां ऽ-ावहारिकी सत्ता वर्तते तथा कालस्-ा पृथक्सत्ता न दुर्लभा:।

केषाञ्चिदद्वैतवेदान्तिनां सिद्धान्ते अविद्या-ाा: कालत्वं अङ्गीकृतम्। अपरेषां मते ब्रह्माविद्य-ो: सम्बन्धस्-ैव कालत्वमभ्-ुपेतम्।एवञ्च शुद्धब्रह्मातिरिक्तानां परमेश्वरादिसर्वपदार्थानामाधार: काल:, स च अविद्यारूपोपि न शुद्धाविद्यास्वरूप: किन्तु चैतन्-ााभास-ुक्ताभासरूप: वेदान्तसिद्धान्ते कालस्-ाापारमार्थिकत्वम-विद्यारूत्वञ्च ऽ-ाज्-ते। सा-ाणाचा-स्तु अथर्ववेदस्-ा कालसूक्तस्-ा ऽ-ााख्-ााने कालरूपपरमात्मा स्तू-ते इति प्रतिपाद-न्ति। कालसूक्ते उच्-ते

**पूर्ण: कुम्बोधि काल आहितस्ते वै पश्-ाामो बहुधा नु सन्त:।**
**स इमा विश्वा: भूतानि प्रत्-ाङ्कालं तमाहु: परमे ऽ-ोमन्।।**

अर्थात् सर्वजगत्कारणभूत: नित्-ा: अनवच्छिन्न: आत्मा सर्वत्र ऽ-ाप्त:। विद्वांस: कालरूपं परमात्मानं संसारसुखदुख:शुन्-ात्वेन कल्पितवन्त: इति मन्त्रार्थ: आचा-ै: निरूपित:। अनेन कालस्-ा परमात्मोपाधित्वं स्पष्टं प्रतिपादितं भवति। कालादेव सर्वेषां सृष्टिविष-े उच्-ते। भगवद्गीता-ाामपि भगवत् पद्मनाभेन उक्तं कालोस्मि लोकक्ष-ाकृत इति। अर्थात् जगत: नाशा-ा कोलोऽहम्। पुनश्च उच्-ते दशमे अध्-ाा-े काल: काल-ातामहम् इति। कालसूक्ते सा-ाणा-ेण काल: परमात्मत्वेन स्वीकृत: इत्-ेतदुच्-ते -तो हि भगवता स्व-ामुच्-ते काल: काल-ाताम्यहम् इति।

श्रीरामानुजाचा-स्-ा मतम्- श्रीरामानुजाचा-ाद-ो वैष्णवा: श्रीसम्प्रदा-ानिविष्टा:। एतेषां मते त्रिविधं तत्त्वं, ते च चिदचिदीश्वरभेदात्। अचित्तत्वं त्रिधा भिद्यते- शुद्धसत्त्वं मिश्रसत्त्वं सत्त्वशून्-ं चेति। तत्र सत्त्वशून्-ं काल:, अ-ाञ्च प्रकृतिप्राकृतानां परिणामहेतु: काल:। कालिकेन सर्वाधारत्वात्। सत्त्वशून्-म् इत्-ास्-ा सत्त्वादिगुणत्र-ाशुन्-ामित्-र्थ:।
कालस्-ा परमेश्वरशरीरत्वकथनेन तस्-ा परमेश्वरात् पृथक् सिद्धत्वमुक्तम्। परमेश्वरस्-ा लीलाविभूतौ कालस्-ोप-ोग:, नित्-ाविभूतौ कालापेक्षा नास्ति। सार्वत्रिक: काल: नित्-ा इति श्रीलोकाचा-ाणां मतम्। केषाञ्चित्मते लीलाविभूतौ निमेषादिना उत्पत्तिमत्त्वात् अनित्-ात्वम्, नित्-ाविभुतौ निमेषादीनां ऽ-ावहाराभावात् नित्-ा: काल:। स: च काल: प्रत्-ाक्षागमाभ्-ां सिद्धि:।

वैंकटनाथेन कालस्-ा अनुमानत्वं परत्वापरत्वं च निराक्रि-ते सू-स्-ा गत्-ाानुसारेण। एतेषां मते सू-स्-ा गत्-ाा: साकं पदार्थस्-ा सम्बन्धं स्वीक्रि-ते चेदपि कालस्-ा परत्वापरत्वे मानं न भवति। अस्माभि: अधिकाधिकं पदार्थसू-ो: सम्बन्धं स्वीकर्तुं शक्-ते। अधिकाल्पप्रतिज्ञानमपि कालस्-ोपरि निर्भरति। अत: सू- गते: संख्-ाा-ाा: साकं कालस्-ा सिद्धौ आत्माश्र-ा: दोष: भवति। परत्वापरत्वरूपेण कालमनुमातुं न शक्-ते इति अनुभवसिद्धतम्। अत: कालस्-ा प्रत्-ाक्षत्वं

सिद्ध-ाति। सर्वेषां प्रत-ाक्षग्राह्यवस्तुनां विशेषणरूपेण कालं गृह्यते। किन्तु केवलं क्षणरूपेणैव अस-ा प्रत-ाक्षं भवति। अत्र प्रश्नः उदेति -ात् भूतवर्तमानभविष-ातकालानां ज्ञानं कथं भवति। समाधानत्वेनोच-ाते -ात् वैङ्कटनाथैः सू-ास-ा गतिकारणादेव भवति। परन्तु वैशेषिकानां मते भूतवर्तमानभिष-ात्कालमखण्डकालस-ौपाधिक-रूपेण व-ावहारः।

श्रीमाध्वी-ामतम्– एतेषां मतानुसारेण कालस-ा द्रव-ातां प्रतिपेदरे। श्रीमध्वमतानु-ाा-िश्रीपद्मनाभरचिते पदार्थसङ्ग्रहे दशपदार्थाः विंशतिद्रव-ााणि च स्वीकृतानि। तेषां द्रव-ाानामन-ातमः कालः। सः बद्धानां जीवानामा-ुव-िवस्थापकः। स च कालो नाखण्डः किन्तु क्षणलवाद्यनेकरूपः। कालश्चा-ामुत्पत्तिविनाशवान्। अतएव अनित-ाम्। कालोपादानं प्रकृतिरेव, ननु कृत्स्ना-ाः प्रकृतेः कालोपादानत्वे महदादिनां सृष्टिः कथं स-ाात्।

तत्रोच-ाते प्रकृतेः सर्वत्र व-ााप्तत्वात् तत्र कतिप-ाप्रकृतिसूक्ष्माणां कालोपादानत्वं, कतिप-ाादीनां महदाद्युपादनत्वं, कतिप-ाानां मूलरूपेण स्थितिः। स चा-ां कालः सर्वका-ार्ोत्पत्तिहेतुः। श्रीमध्वसिद्धान्ते सर्वे पदार्थाः साक्षिविष-ााः। अतएव कालोपि साक्षिणः विष-ाः। साक्षिश्चात्र परमेश्वर एव।

विष्णुपुराणे तु विवर्तवादमेव निरूपितः। एकस-ैव अद्विती-ास-ा भ्रान्त-ाा नानारूपेण प्रतिभासनम्। एकस-ैव ब्रह्मणः व-ाक्ताव-ाक्तपुरुषकालरूपेण स्थितिर्वर्णिता। अत्र उच-ाते कालः नित-ाः, सृष्टिप्रल-ाोविद्यमानत्वात्। सृष्टिस्थितिप्रल-ाानां कारणञ्च।

बाल्लभी-ामतम् – पारमार्थिकः कालस्तु सच्चिदानन्दात्मक एव भवति, किन्तु व-ावहारिककाले सतः आंशिकाभिव-ाक्तिः दृश-ाते। कालः एव प्रकृतेः सत्त्वरजतमसः सम-ाावस्थाश्याया: परिवर्तनं करोति।
कालविष-ो बोधः प्रत-ाक्षदृष्ट-ाा भवति परोक्षदृष्ट-ाा वा इत-ास्मिन्विष-ो संश-ाो भवति। भाट्टमीमांसके तथा विशिष्टाद्वैते च कालः प्रत-ाक्षगम-ाः। अन-ो मीमांसकाः जैनाः अद्वैतिनः कालमनुमानत्वेत स्वीकुर्वन्ति।
अतः परिलक्ष-ाते कालस-ाास्तित्वं सर्वे आचा-ार्ाः अङ्गीकुर्वन्ति इति स्पष्टम्। एवं प्रकारेण कालस्वरूपविष-ो वेदान्तसम्प्रदा-ो विभिन्नानामाचा-ार्णामभिमतं संक्षेपेण आलोचितम्।

ग्रन्थसूची –


१. एम्.वि. सुब्रह्मण-ाशास्त्री (सं.). (2010). सिद्धान्तसिन्धुः. तिरूपतिः: राष्ट्रि-ासंस्कृतविद्यापिठम्।
२. जगदीशशास्त्री (सं.). (19 4). उपनिषत् संग्रहः,. देहली: मोतीलालवनासीदाशः.
३. दीनेशशास्त्री. (19 0). पञ्चदशी. वाराणसी: चौखाम्बा प्रकाशन.
४. नारा-णाचा-र्ाः. (19 1). अद्वैतसिद्धिः. गोरखपुरः गीताप्रेस.
५. वानार्जी दीपकदास. (1990). छान्दोग-ोपनिषद्. कोलकाताः देशप्रकाशन.
६. शङ्कराचा-र्ाः. (2000). ब्रह्मसूत्रशाङ्करभाष-ाम्(परिमलो कल्पतरु भामती टिका सहित). (श्रीमदनन्तकृष्णशास्त्रिः, सं.) वाराणसी: कृष्णदास अकादमी.


१. भट्टचिन्तामणि
२. मानमे-ोद-ो
३. मानमे-ोद-ो
४. अद्वैतसिद्धिः
५. बृहदारण-ाकोपनिषद्
६. भ.गी
७. भ.गी
८. विष्णुपुराणम्।


सहायकाचार्यः
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्री सदाशिवपरिसरः, पुरी।




# अभिज्ञानशाकुन्तले रसविमर्शः

डॉ नवीनकुमारप्रधानः

भोगविलासरूपकविषयकुसुमं मनोभृङ्गः यथेच्छमास्वादयति । आस्वादनमिदं तु परिणामे विरसमवश्यमिति ज्ञात्वा सः अधुना ततः विरतः सन् व्रह्माद्वैतानन्दे मग्नः आस्ते। एतेन ज्ञायते यत् सांसारिकतृष्णा सर्वदा मधुरापि परिणामविरसा भवति । अतः धीमन्तः यथाशक्ति एतस्मात् दूरे स्थित्वा ब्रह्माद्वैतानन्दमनुभवन्ति । ऐतेन शान्तरसं प्रति कवेः परमाग्रहः लक्ष्यते । एवं अस्मिन् प्रबन्धे अग्रेऽपि चर्च्चयिष्यते । रसः भवति अनुभूतेः विषयः। वेदान्ते ब्रह्म यथैव रहस्यमयं साहित्ये यथा रसः अनुभवस्य विषयः। अस्मिन् रसविषये बहवः आलङ्कारिकाः वहूनि ब्याख्यानानि कृतवन्तः। तेषु आलङ्कारिकः विश्वनाथः स्व साहित्येदर्पणे उल्लिखति यत्-**विभावानुभावेन व्यक्तः सञ्चारिणा तथा। रसतामेति रत्यादि स्थायिभावः सचेतसाम्।।** अर्थात् सहृदयानां हृदये स्थिताः रतिप्रभृतयः स्थायिभावाः ये विभावानुभावव्यभिचारिभावसमूहैः उद्रिक्ताः भवन्ति। ते रसा इति उच्यन्ते। कार्यकारणद्वारा हृदयस्य भाव एव उद्दीप्तः भवति। इमानि कार्यकारणानि विभावानुभावसञ्चारिभावा इति वदन्ति। सहृदयानां दर्शकानां हृदये रत्यादिभावाः विभावानुभावव्यभिचारिभावैः प्रकाशितः भवति। अयं प्रकाशितः स्थायिभाव एव रसः। कः रसः कदा प्रकाशो भवेदिति विभावादीनां वर्णनोपरि निर्भरं करोति। रससृष्टिकरणेकविकुलगुरुः कालिदासः प्रवीणः। तेन अभिज्ञानशाकुन्तले नवरसाः चतुरतया प्रतिपादिताः। इमे नवरसाः यथा-

**शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।**
**बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः।।६१६।।**
**स्वं स्वं निमित्तमासाद्य शान्ताद्भावः प्रवर्तते।**
**पुनर्निमित्तापाये च शान्त एवोपलीयते।। ६/८८।।**
**एवं नवरसा दृष्टा नाट्यज्ञैर्लक्षणान्विताः।।६/८९।।**

ते रसाः अभिज्ञानशाकुन्तले कस्मिन् कस्मिन् स्थले विद्यन्ते तत् सर्वं मया अत्र वर्ण्यते। (१)शृङ्गाररसः-शृङ्गाररसस्य लक्षणं यथा- **शृङ्गं हि मन्मथोद्भेदस्तदागमनहेतुकः। उत्तमप्रकृतिप्रायो रसः शृङ्गार इष्यते।।३/१८६।।** शृङ्गाररसः द्विविधः यथा-सम्भोगशृङ्गार विप्रलम्भशृङ्गारश्च, उक्तञ्च साहित्यदर्पणे-विप्रलम्भोऽथ संभोग इत्येष द्विविधो मतः।।३/१८६।। शृङ्गाररसः अभिज्ञानशाकुन्तले प्रमुख रसः भवति। प्रथम-द्वितीय-तृतीय-सप्तमाङ्केषु शृङ्गाररसविषये अनेकेषु स्थलेषु दृष्टिगोचरः भवति। प्रथमाङ्के शृङ्गाररसः यथा-अङ्केऽस्मिन् शकुन्तलां दृष्ट्वा दुष्यन्तस्य हृदये शृङ्गाररसस्य स्थायिभावः रतिः जागरितः भवति। तथा चोक्तम्- **अक्ष्णां यद्यपि स्वार्थे प्रवृत्तिः काम उच्यते**
**तथापि सः प्रधानत्वात् विशिष्टः स्पर्शगोचरः ।**
**पुंसः स्त्रियां स्त्रियः पुंसि संभोगं प्रति या स्पृहा**
**सः शृङ्गारः रसः ज्ञेयः क्रीडारत्यादि कारणम्।।**

तेनोक्तम् **अहो मधुरमासां दर्शनम्** अर्थात् दुष्यन्तः शकुन्तलादीन् अवलोक्य आश्चर्यं प्रकटयन् कथयति एतासां रूपम् अन्तःपुरे निवसन्तीनां स्त्रीणामपेक्षया अधिकं रमणीयं वर्तते, तदा निश्चितमेव प्राकृतिक्या वनशोभया कुत्रिमा उद्यानलता तिरस्कृता इत्यहं जानामि। शकुन्तलां प्रति आकृष्टः सन् दुष्यन्तः वदति यत्-

**इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति ।**
**ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति।।१/१७।।**

लोकातिशयरूपसंभारां शकुन्तलामाश्रमोचितधर्माचरणेषु वृक्षसेचनदिषु नियुक्तामवलोक्य राजा दुष्यन्तः चिन्तयति अहो! निसर्गसुन्दरेण अनेन वपुषा य आश्रमधर्मान् साधयितुम् इच्छति । सर्वथा अविमृश्यकारी सः ऋषिः नीलकमलपत्राग्रभागेन कठिनां शमीवृक्षस्य शाखां छेत्तुं प्रयासं करोति। पुनश्च शकुन्तलायाः नैसर्गिकेण सौन्दर्येण विमुग्धः सन् प्रशंस्य वदति-

शैवालपत्रेण अपि सम्पृक्तं कमलं कमनीयं मनोहारि भवति, । यत: कृष्णमपि चन्द्रस्य लक्ष्म(कलङ्क:) शोभां विस्तारयति। यत: एषा पुरो दृश्यमाना कृशाङ्गी निसर्गसुन्दरी शकुन्तला वृक्षत्वग्वस्त्रेण अधिकं मनोहारिणी हृद्या अस्ति। यत: कतमत् वस्तु कमनीयानाम् आकृतीनां भूषणं न भवति, अपितु सर्वं भवत्येव। सर्वमपि वस्तु रम्याणां सुषमां वर्धयत्येव। यथा नीलकण्ठस्य कण्ठे विषमिव, कलङ्केन चन्द्रस्येव, शैवालेन कमलस्येव; अनेन वृक्षत्वग्वस्त्रेण अस्या: शकुन्तलाया: शोभा एव, यथा कवे: भाषया- **सरसिजमनुबिद्धं शैवलेनापि रम्यं मलिनमपि हिमाशोर्लक्ष्म लक्ष्मीं तनोति।**

**इयमधिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणां मण्डनं नाकृतीनाम्।।१/१९।।**

कामासक्त: दुष्यन्त: आश्रमे प्रविश्य शकुन्तलाया: मुखं परित: उड्डीयमानभ्रमरकृतअधरपानं दृश्यं दृष्ट्वा बिह्वलोऽभवत्। तत्र स: भ्रमरं कथयति, हे भ्रमर! भवान् कम्पनवतीं भ्रमरवाधाकातरां तां दृष्टिं पुन: पुन: स्पृशति। रहस्याख्यायीव रहस्यमाख्यातुं कर्णान्तिकचर: सन् मधुरं मन्दाक्षरं मन्त्रयत, निवारणार्थं हस्तौ क्षिपन्त्या: रतिसर्वस्वं संभोगनिधानमधरमधरोष्ठं चुम्बति। अत: भो मधुकर! वयं तत्त्वान्येषात् अर्थात् का इयं, कस्य कन्या? , क्षत्रियेण ग्राह्या वा नेति तथ्यान्येषणात् हता:,। परन्तु त्वं पुन: अस्या: स्पर्शनचुम्बनादिना निश्चयेन भाग्यशाली असि। कवे: भाषया यथा-

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमती**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तकचर: ।**
**करौ व्याधुन्वत्या: पिवसि रतिसर्वस्वमधरं**
**वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती।।१/२२।।**

राज्ञ: प्रत्यावर्त्तनसमये राजानं एवं द्रष्टुं शकुन्तला स्वपादे अभिनवकुशसूच्या क्षतमिति उक्तवती, हे अनसूये! अभिनवकुशसूच्या क्षतं मे चरणं मोचयामि। तृतीयाङ्के शकुन्तलाया: प्रेमभावं प्रदर्शयितुं दुष्यन्तं प्रियंवदानुसूये वदत: यत्-एषा अस्माकं प्रियसखी शकुन्तला भवता कामदेवेन अस्यामवस्थायामानीता भवति। दुष्यन्त: शकुन्तलाया: कामपीडां प्रणयमिलनेच्छां च सुष्ठुतया ज्ञात्वा प्रभावित: सन् अस्यां प्रेम कुर्यात्। तत: शकुन्तला कथयति यत्-हले! तिरस्कारेण भीतं मे हृदयं कम्पते। वृक्षान्तरितो राजा शकुन्तलावचनानि श्रुत्वा आत्मनि हर्षपूर्वकं सम्भाषते-अयि भीरु शकुन्तले! यस्मात् त्वं तिरस्कारस्य भयाद् भीता सती आशङ्कसे, स एव दुष्यन्त: ते एव मिलनोत्सुक: वर्तते। प्रार्थी लक्ष्मीं प्राप्नुयाद् अथवा न प्राप्नुयात् किन्तु लक्ष्म्या प्राप्तुम् इष्ट: जन: कथं वा दुर्लभ: स्यात्। अर्थात् लक्ष्म्या: कृते तु इष्ट: जन: सर्वथा सुलभ एव भवति। कवे: भाषया यथा-

**अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु! यतोऽवधीरणाम्।**
**लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुराप: कथमीप्सितो भवेत्।।३/११।।**

शृङ्गारस्य प्रथमभेद: भवति संभोगशृङ्गार:-दुष्यन्त: प्रणयपाशेन आवद्ध: भूत्वा तां शकुन्तलां भोक्तुं गान्धर्वविवाह: कृतवान्। अष्टप्रकारेभ्य: विवाहेभ्य: गान्धर्वविवाह: अन्यतम:, य: विवाह: परस्परं प्रणयेच्छाजन्यमैथुनात् संघटित: भवति। मनुस्मृतौ महर्षिणा मनुना उक्तम्-

**इच्छयाऽन्योन्यसंयोग: कन्यायाश्च वरस्य च।**
**गान्धर्व: स तु विज्ञेयो मैथुन: कामसम्भव:।।३/३२।।**

यदा शकुन्तला लज्जया प्रस्थानं कर्त्तमुद्यता, तस्मिन् समये दुष्यन्त: उपसृत्य तस्या: पटान्तं अबलम्बते । तत् दृष्ट्वा शकुन्तला दुष्यन्तं वदति हे पौरव! रक्ष रक्ष विनयम् इतस्तत: ऋषय: सञ्चरन्ति । अस्मान् ते द्रक्षन्ति। पुनश्च राजा तां प्रति वदति हे सुन्दरि! गुरुजनात् भयेन अलम्। महामान्य: कण्व: लोकाचारेण अभिज्ञ:। योग्यभर्तृगामितया पश्चात्तापं न प्राप्स्यति। तव त्रुटिं न ग्रहिष्यति। अपि च अनेका: तापसकुमार्य: गान्धर्वविवाहविधिना परिणीता:। ता: खलु पश्चात् पितृभि: अभिनन्दिता: च इति श्रूयते। यथा कविना उक्तम्-

**गान्धर्वेण विवाहेन बह्व्योऽथ राजर्षिकन्यका:। श्रूयन्ते परिणीतास्ता: पितृभिश्चानुमोदिता:।।३/२८।।**

पुनः तस्मिन् तृतीयाङ्के शकुन्तलया सह सङ्गमोत्सुकः दुष्यन्तः स्वाङ्गुलीभ्यां तस्याः मुखम् उत्तोल्य आत्मगतं वदति हे सुन्दरि! अहं पिपासितः अस्मि। तव अधरः अपरिक्षतः कोमलश्च वर्तते। अतएव यथा भ्रमरः नवप्रस्फुटितस्य पुष्पस्य रसं गृह्णाति। अहमपि तथैव सर्वादौ अस्य रसं सदयभावेन ग्रहिष्यामि। कवेः भाषया यथा-

**अपरिक्षतकोमलसद्य यावत् कुसुमस्येव नवस्य षट्पदेन ।**
**अधरस्य पिपासता मया ते सदयं सुन्दरि गृह्यते रसस्य।।३/३६।।**

सप्तमाङ्के दुष्यन्तः समागतां विरहिणीं शकुन्तलां दृष्ट्वा वदति-अहो पूर्वानुभूता इयं पुरः दृश्यमाना मान्या शकुन्तला इत्युक्त्वा तस्याः दशां निजमनसि विमृशति, परिधूसरं युगलवस्त्रं परिदधाना , व्रतनियमादिभिः कृशाङ्गी केवलाम् एकवेणीं धारयन्ती सरलस्वभावा इयं शकुन्तला केवलं मम कारणादेव एतादृशं विरहिणीव्रतं धारयति। अतः नूनम् अहम् अपराधी इति। कवेः भाषया यथा-**अये सेयमत्र भवती शकुन्तला सैषावसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणी।**

**अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति।।७/२१।।**

तदनन्तरं शृङ्गारी दुष्यन्तः शकुन्तलायाः चरणयोः क्षमाप्रार्थनां करोति तथा शकुन्तलायाः हृदयात् पूर्वं स्वकृततिरस्कारदुःखं दूरीकर्त्तुं प्रयतो नृपः दुष्यन्तः तां शकुन्तलाम् उन्नयन् तस्याः चरणयोः पतित्वा वदति यत्-हे सुन्दराङ्गि! प्रिये पूर्वं मया तव कृते प्रदत्तं परित्यागदुःखं सम्प्रति त्वया निष्कासनीयम्। यतो हि ज्ञात्वा तत्कार्यं मया न कृतम्। तदानीन्तनकाले मम हृदये महर्षेः दुर्वाससः शापात् प्रबलः सम्मोहः आसीत्। इदानीम् अङ्गुलीयकदर्शनेन सः मोहः व्यपगतः। यथा नेत्रहीनः पुरुषः अपरेण पुरुषेण स्वकण्ठे निहितां सुरभिपुष्पमालामपि सर्पस्य आशङ्कया स्वगलाद् निस्सार्य दूरम् उत्क्षिपति तथैव पूर्वं तव प्रत्याख्यानकाले स्मृतिरहितेन मया स्वयमुपस्थितापि त्वं तिरस्कृता। अतः मया भवती क्लेशिता च तदेतत्सर्वम् अज्ञानेन कृतम् इति मत्वा क्षम्यताम्। कवेः भाषया यथा-

**सुतनु! हृदयात्प्रत्यादेशव्यलीकमपैतु ते किमपि मनसः संमोहो मे तदा बलवानभूत।**
**प्रबलतमसामेवंप्रायाः शुभेषु प्रवृत्तयः स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया।।७/२४।।**

**विप्रलम्भशृङ्गारः-न विना विप्रलम्भेन शृङ्गारः पुष्टिमश्नुते** इति न्यायेन नाटकेस्मिन् विप्रलम्भशृङ्गाररसस्यापि बहुलरूपेण दृश्यमानः भवति। विप्रलम्भस्य लक्षणं यथा-यस्मिन् शृङ्गारे रतिः अर्थात् अनुरागः उत्कृष्टः भूत्वापि अभीष्टं नायकं नायिकां वा प्राप्तः न भवति सः विप्रलम्भः इति उच्यते। यथा विश्वनाथेन साहित्यदर्पणे उक्तम्-**यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ।३/१८७।** द्वितीयाङ्के राजा दुष्यन्तः शकुन्तलायाः वियोगस्य हेतोः खिन्नमनाः भवति। राजा दुष्यन्तः विरहेण उद्विग्नमनसं शकुन्तलां मनसा स्मरन् विमृशति । यद्यपि शकुन्तला सुखेन अवाप्तुं न शक्यते इति निश्चितमस्ति, तथापि मे मनः शकुन्तलायाः अनुरागव्यञ्जकचेष्टावलोकनेन आश्वस्तमस्ति। असफलोऽपि कामः परस्पराभिलाषं प्रीतिं समुत्पादयति। यथा कविना उक्तम्- **कामं प्रिया न सुलभा मनस्तु तद्भावदर्शनाश्वासि।**
**अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते।।२/१।।**

पुनश्च शकुन्तलाविषये निराशो राजा दुष्तन्तः तस्याः हावभावं दृष्ट्वा तथा शकुन्तलाचेष्टादिकं संस्मृत्य विरहेण विचारयति स्वमनसि- विभिन्नवस्तुषु इतस्ततः दृष्टिं प्रक्षिपन्त्यापि तया शकुन्तलया यत् अहं साभिलाषम् अवलोकितः। कटिपश्चाद्भागयोः भारवत्तया विलासपूर्वकं यत्तया मन्दमन्दं गतम्। मा गच्छ इति कथनेन तद्गमनं निवारयन्ती प्रियंवदा यत्तया क्रोधपूर्वकम् उक्ता, एते सर्वे क्रियाव्यापाराः तस्याः मदर्थम् एव अनुरागप्रकटनपरा आसन्। आश्चर्यकरम् एव तथ्यमिदं यत्कामपरवशो जनः सर्वत्र आत्मीयभावम् एव सम्भावयति । कामिजनः अन्यविषयकमपि भावं स्वविषयकम् एव सम्भावयति। यथा कविना उक्तम्-

**स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया**
**यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव।**
**मा गा इत्युपरुद्धया यदपि तत्सासूयमुक्ता सखी**

**सर्वं तत्किल मत्परायणमहो कामी स्वतां पश्यति।।२/२।।**

एतद् विहाय षष्ठाङ्केऽपि विरहिणः राज्ञः वर्णना दृश्यते। दुष्यन्तः अङ्गुरीयकदर्शनात् परं यदा शकुन्तलां स्मृतवान् तदा सः वदति साक्षराङ्गुरीयकदर्शनेन उत्पादिता शकुन्तलापरिणयजन्यस्मृतिः अहं पुनः व्याकुलः सन् अकारणप्रत्यादिष्टां प्रियतमां लक्ष्यीकृत्य पश्चात्तापात् आक्रन्दामि। पुनः वसन्तोत्सवादिसुखं समुपस्थितं च। तथा च सद्यः क्षतव्रणे लवणसंयोग इति विरहिणः विषये वसन्तकालसमागमोऽतितरां क्लेशदायितया दुःसहः एव भवति। यथा कविना उक्तम्-

**उपहितस्मृतिरङ्गुलिमुद्रया प्रियतमामनिमित्तनिराकृताम्।**
**अनुशयादनुरोदिमि चोत्सुकः सुरभिमाससुखं समुपैति च ।।६/९।।**

इत्थं विप्रलम्भशृङ्गारस्य परिचयः दृश्यते।

**हास्यरसः-**

**विकृताङ्गवचोवेषैर्हास्यकरो विदूषकः इति आचार्यैः प्रतिपादितस्य** विदूषकस्य लक्षणानुसारं सर्वलक्षणसमन्वितस्य राज्ञः दुष्यन्तस्य मित्रम् अभिज्ञानशाकुन्तलनाटकस्य विदूषकः अस्ति। माधव्यः एतस्य नाम **करुणरसः-** यदा अवगुण्ठनस्य अपसारणे सत्यपि राजा शकुन्तलां पत्नीत्वेन नैव परिचिनोति तदा शकुन्तला प्रमाणरूपेण अङ्गुलीयकं दर्शयितुम् उद्यता भवति। सा कथयति यदि वस्तुतः माम् अन्यस्य भार्या इति मत्वा न स्वीकरोति तर्हि अहं भवता प्रदत्तम् अङ्गुलीयकं दर्शयामि। अनेन मुद्रिका इति परिचायकचिह्नेन भवतः शङ्कां दूरीकरोमि। येन भवान् मां परिचेष्यति। तदनन्तरं मुद्रिकारहितम् अङ्गुलिमूलं स्पृष्ट्वा शकुन्तला कथयति, हन्तः कष्टं दुर्भाग्येन मम करशाखा मुद्रया शून्या वर्तते। मम अङ्गुल्याम् अङ्गुलीयकं नास्ति। एवम् उक्त्वा शकुन्तला विषादपूर्वकं गौतमीम् अवलोकयति। यतः करुणरसस्य विषादः भवति व्यभिचारिभावः। शकुन्तलायाः अङ्गुलीयकरहिताम् अङ्गुलीं दृष्ट्वा गौतमी अङ्गुलीयकपतनस्य सम्भावनां कृत्वा शकुन्तलां स्मारयति यद् निश्चयेन शक्रावतारनामके तीर्थप्रदेशे यदा भवती शचीतीर्थस्य सलीले नमन्ती आसीत्। तदा जले नमयन्त्याः भवत्याः मुद्रिका करात् च्युता सती जले पतिता स्यात्। एवं श्रुत्वा विहस्य राजा कथयति एतद् गौतम्याः कथनं तात्कालिकी प्रतिभायाः लक्षणं वर्तते। जगति प्रसिद्धम् अस्ति यत् स्त्रीजाति चातुर्य्येण अनुक्षणम् उपायं कर्त्तुं समर्था भवति। एतत् कथनं सत्यमेव वर्तते। यतो हि एकतः तापसतरुणी अङ्गुलीयकदर्शनस्य मिथ्याकल्पनां कृतवती। अन्या च वृद्धा तपस्विनी अङ्गुलीयकस्य अदर्शने तत्क्षणम् अङ्गुलीयकपतनस्य नूतनताम् अनृतकल्पनां कृत्वा शकुन्तलायाः असत्यकथनस्य समर्थनं कृतवती एवं श्रुत्वा शकुन्तला मनसि दुःखमनुभवति। यदा दुष्यन्तः शकुन्तलां वदति अहं त्वया सह विवाहस्य वृत्तान्तं न स्मरामि तदा सकुन्तला दुष्यन्तं वदति तव मृदुवार्तासु वशवर्तिनी अभवम्। तव हृदये निहितं कपटं न अवगतवती। एवम् उक्त्वा शकुन्तला वस्त्रप्रान्तेन वदनमाच्छाद्य रोदिति। नूनमत्र कविना शकुन्तलायाः करुणविप्रलम्भरसस्य चित्रणं कृतम्। चतुर्थाङ्के अपरः एकः विप्रलम्भकरुणरसः पतिगृहगमनावसरे दृश्यते। शकुन्तलायाः विरहेण मृगी तावत् कुशान् चर्वितान् अपि मुखात् बहिः निःसारयति। मयूरी उज्झितनृत्या दृश्यते । कवेः भाषया उक्तं यथा-

**उद्गलिता दर्भकवला मृग्यः परित्यक्तनर्तना मयूराः ।**
**अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रूणीव लताः ।।४/११।।**

**रौद्ररसः-**अस्मिन् नाटके पूर्णरूपेण रौद्ररसस्य उपलब्धः न दृश्यते। तथापि चतुर्थाङ्के क्रोधेन दुर्वाससः अभिशापः रौद्ररसस्य द्योतकः भवति। यतः रौद्ररसस्य स्थायिभावः भवति क्रोधः। अतः विश्वनाथेन साहित्यदर्पणे उक्तम्-

**रौद्रः क्रोधस्थायिभावो रक्तो रुद्राधिदैवतः। आलम्बनमरिस्तत्र तच्चेष्टोद्दीपनं मतम्।।**

अत्र उग्रतपस्वी शत्रुरुपदुर्वासा आलम्बनविभावः। शापचेष्टादि उद्दीपनविभावः। प्रकृतिवक्रः दुर्वासोमुनिः अन्यमनस्कायै शकुन्तलायै शापं दत्वा वदति-हे शकुन्तले! एकाग्रचित्ता त्वं यं जनं ध्यायन्ती, तपोराशिं मम सदृशं ऋषिं न विभावयसि, स पुरुषः दुष्यन्तः स्मारितोऽपि सन् त्वां तथैव न स्मरिष्यति यथा कोऽपि उन्मत्तः जनः पूर्वम् उक्तां वार्त्तां बोधितोऽपि न स्मरति। स्वयं स्मरणस्य तु का कथा ? त्वया अन्यैः च ज्ञापितोऽपि सततं स्मारितोऽपि इयं शकुन्तला मया परिणीतपूर्वा इति

नैव स्मरिष्यतीति भाव:। उक्तञ्च तत्र-

**विचिन्तयन्ती यमनन्यमानसा तपोनिधिं वेत्सि न मामुपस्थितम्।**
**स्मरिष्यति त्वां न स बोधितोऽपि सन् कथां प्रमत्त: प्रथमं कृतामिव।।४/१।।**

अत्र प्रकारान्तरेण दुर्वाससः क्रोधस्य हेतोः रौद्ररसस्य परिस्फुट: भवति।

**वीररस:**-वीररस: नाटकेऽस्मिन् प्रथमाङ्के षष्ठाङ्के च परिदृश्यते। साधरणत: वीराणां लक्षणं असहायजनानाम् अथवा निरपराधजनानां रक्षणम् दुष्टानां विनाशनं च। नाटकस्य प्रथमाङ्के यावदेव राजा मृगस्योपरि शरसन्धानं करोति तावदेव अकस्माद् उपस्थित: वैखानस: आगत्य हस्तौ उत्थाप्य कथयति राजन्! आश्रममृगोऽयं न हन्तब्यो न हन्तब्यो अर्थात् हे राजन्! अयम् आश्रमस्थ: मृगो वर्तते। अत: अस्य हननम् न कर्तब्यमिति। वस्तुत: तव शस्त्रं दीनानां जनानां रक्षणाय प्रवर्तते। निरपराधानां प्राणिनां मारणाय नास्ति। तथा चोक्तम् कविना- **तत्साधुकृतसन्धानं प्रतिसंहर सायकम्। आर्तत्राणाय व: शस्त्रं न प्रहर्तुमनागसि।।** षष्ठाङ्केऽपि दुष्यन्तस्य इन्द्रस्य साहाय्यकरणावसरे वीररस: द्रष्टुं मिलति, नेपथ्ये विदूषकस्य करुणक्रन्दनं श्रुत्वा तस्य रक्षार्थं धनुर्वाणं च गृहीत्वा राजा दुष्यन्त: यावत् परिक्रामति तावदेव नेपथ्ये केनापि अदृश्येन पुरुषेण प्रोच्यमानं वचनं शृणोति यत् शार्दूलहरिणादीनां रुधिरमिव तव कवोष्णं रुधिरं पिपासु: अहं त्वां हन्मि। आर्त्तानां भयनिवारणाय गृहीतबाण: दुष्यन्त: यदि समर्थोऽस्ति तर्हि आगत्य अत्र त्वां रक्षतु। अहं मन्ये मया गृहीतकण्ठस्य तव रक्षणे नास्ति तस्य पार्श्वे शक्ति: यत् स: आगत्य सम्प्रति तव रक्षां कुर्यात्। यथा कवे: भाषया-

**एष त्वामभिनवकण्ठशोणितार्थी शार्दूलपशुमिव हन्मि चेष्टमान:।**
**आर्त्तानां भयमपनेतुमात्तधन्वा दुष्यन्तस्तव शरणं भवत्विदानीम्।।६/२७।।**

तिरस्करिणीविद्यागर्वितं सत्त्वं चक्षुषा अपश्यन् वीरदर्पेण राजा दुष्यन्त: धनुषि बाणं संयोजयन् वदति यद् अये अदर्शनविद्यया अहंकारवान्! यदि अहं द्रष्टुं न पारयामि तथापि मम आयुधं त्वां निश्चयमेव पश्यति हनिष्यति च । अहं सम्प्रतिएवंविधं दिब्यं बाणं धनुषि संयोजयामि य: अपराधिनं त्वां हनिष्यति रक्षणीयं माधब्यं च रक्षिष्यति। यथा जले मिश्रिताद् दुग्धात् हंस: दुग्धमात्रं पिवति जलं च त्यजति तथैव हंसतुल्य: मम बाण: दुग्धतुल्यं त्वां मारयिष्यति। जलसदृशं माधब्यं च परित्यक्षतिइति हंस इव मम बाण: दुग्धमिव त्वम्। तस्मात्वमेव मम बाणस्य ग्राह्य:। इत्युक्त्वा वीरत्वेन राजा अस्त्रं गृहीत्वा बाणं धनुषि समारोपयति। तथा चोक्तम्-

**यो हनिष्यति वध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम्।**
**हंसो हि क्षीरमादत्ते तन्मिश्रा: वर्जयत्यप:।।६/२०।।**

राजानं दुष्यन्तं क्रुद्धं ज्ञात्वा विदूषकं परित्यज्य मातलि: वदति यत् हे राजन्! सम्प्रति स्वर्गलोके राक्षसानां महान् आतङ्कोवर्तते। अत: तान् हन्तुं इन्द्र: तुभ्यं निवेदयति तत्कार्ये नियोजयति च। अत: एते तव शरा: तेषु राक्षसेषु एव पतन्तु। न ममोपरि यतोहि सज्जना: मित्रेषु कृपावर्षणं कुर्वन्ति न तु शरवर्षणम् इति। यथ चोक्तम्-

**कृता: शरण्यं हरिणा तवाशुरा: शरासनं तेषु विकृष्यतामिदम्।**
**प्रसादसौम्यानि सतां सुहृज्जने पतन्ति चक्षूंसि न दारुणा: शरा: ।। ६/**

पुनश्च दुर्जयनामकस्य दानवगणस्य वधाय राजानं दुष्यन्तं वीरोचितं कार्यं कर्त्तुं प्रेरयन् इन्द्रसारथि: मातलि: वदति। यद्यपि महाप्रभाबस्य तव मित्रस्य इन्द्रस्य अपि अजय्य: स: दुर्जयो नाम दानवगण: तथापि तं हन्तुं भवानेव समर्थ: इति ज्ञात्वा सर्वै: देवै: इन्द्रेण च भवानेव विश्वासभूमिमानीत:। अत: समर्थ: भवान् शतक्रतो: अपि अजय्यं तं कथं विजेष्यामीति शङ्कां न करोतु। भवान् तं विजेष्यति एव। लोके हि एक: दृष्टान्त: प्रसिद्ध: वर्तते यत्-सहस्रकर: अपि दिवाकर: रात्रौ अन्धकारं दूरीकर्त्तुम् असमर्थ: भवति तदुदीयमान: चन्द्र: एव दूरीकरोति ।अत: भवान् सम्प्रति एव स्वशस्त्रं गृहीत्वा इन्द्ररथमारुह्य दानवविजयाय प्रस्थानं करोतु इति।

**भयानक:**-नाटकेऽस्मिन् त्रिषु स्थानेषु भयानकरसो दृश्यते। प्रथमाङ्के भयभीतस्य मृगस्य वर्णनं भवति। धनुर्वाणं गृहीत्वा राजा दुष्यन्त: धावमानं कृष्णसारमृगं हन्तुं उद्यतोऽस्ति। अस्मिन् अवसरे राजा सूतम् उद्दिश्य वदतियत् वयम् अमुना मृगेण

बहुदूरम् अकृष्टा:। अयं च मृग: स्वीयां ग्रीवां परावृत्य पश्चात्पतिते रथे स्वीयां दृष्टिं स्थिरीकृतवान्। शरपतनभयकारणात् अस्य शरीरस्य पूर्वकायं प्रति पश्चाद्भाग: प्रविष्ट: अस्ति। अतिशयश्रमकारणाद् अस्य उन्मुक्तमुखाद् अर्धभुक्तानि तृणानि मार्गे पतितानि दृश्यन्ते । उत्कटलम्फप्रदानाद् आकाशे अधिकं, पृथीव्यां च अल्पं गच्छति। यथा कवे: भाषया-

**ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने बद्धदृष्टि:**

**पश्चार्द्धेनप्रविष्ट: शरपतनभयाद् भूयसा पूर्वकायम् ।**

**दर्भैरर्धावलीढै: श्रमविवृतमुखभ्रंशिभि: कीर्णवर्त्मा**

**पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति।।१/७।।**

भयनकरसस्य लक्षणं भवति यत्-भयानको भयस्थायिभावो कालाऽधिदैवत:। स्त्रीनीचप्रकृति: कृष्णो मतस्तत्त्वविशारदै:।। यस्मादुत्पद्यते भीतिस्तदत्रालम्बनं मतम्। चेष्टा घोरतरास्तस्य भवेदुद्दीपनं पुन:।। अनुभावाऽत्र वैवर्ण्यगद्गदस्वरभाषणम्। प्रलयस्वेदरोमाञ्चकम्पदिक्प्रेक्षणादय: ।। जुगुप्सावेगसंमोहसंत्रासग्लानिदीनता:। शङ्कापस्मारसम्भ्रान्तिमृत्व्वाद्या व्यभिचारिण:।। अत्र मृगस्य भय: भवति स्थायिभाव: । आलम्बनविभाव: भवति मृगस्य भीति:। मृग: तस्य जीवनरक्षार्थं भयङ्करचेष्टा भवति उद्दिपनविभाव: भवति। मृगस्योपरि शरपतनभयात् शरीरस्य कम्प: भवति अनुभाव:। अत्र मृगस्य संत्रास: भवति ब्यभिचारिभाव:। पुनश्च प्रथमाङ्कस्य अन्तिमे राज्ञ: दुष्यन्तस्य रथनेमिध्वनिमाकर्ण्य भयभीतो निजदन्तेन बिद्धं दन्तेन एव समाकर्षन् पादेन मार्गस्थं लतासमूहं वहन् मार्गमध्ये समागतानां मृगाणां यूथं विद्रावयन् अस्माकं तपस्याया अन्तरायभूत: शरीरधारी विघ्न इवैष आरण्यकगज: इव धर्मारण्यं प्रविशति। अतो भो: भो: आश्रमवासिन: यूयं सर्वे अपसरत। महता भयेन भीत एष आरण्यको गज: न दक्षिणत:, नापिवामत:, अपितु समक्षमेव धावति। मार्गे यद् यद् आपतति तत् सर्वं मर्दयित्वा प्रचलति। तस्मात् शीघ्रं पलायित्वा मार्गमस्मै पज्ञाय आत्मनो रक्षा विधेया। तथा चोक्तम्- **तीव्राघात-प्रतिहतत–स्कन्धलग्नैकदन्त: पादाकृष्ट-व्रततिवलयासङ्गसंजातपाश: । मूर्तो विघ्नस्तपस इव नो भिन्नसरङ्गयूथो धर्मारण्यं प्रविशति गज: स्यन्दनालोकभीत:।।** अपि च तृतीयाङ्कस्य अन्तिमे कवि: राक्षसानां पंक्तिबद्धच्छायां भयानकरसस्य उदाहरणरूपेण प्रस्तौति, मुनीनां ज्ञशालासु सायङ्कालीनहोमावसरे हव्यद्रव्यगन्धमाघाय समागतानां राक्षसानां पंक्दतिबद्धच्छायां दृष्ट्वा मुनय: ससंभ्रमं राज्ञे निवेदयन्ति। राजन! अस्माकं संरक्षक: भवान् ,समीपे एवास्तीति मत्वा अस्माभि: सान्ध्यकालीन: होम: समारब्ध: तत्र हुतभुक्प्रदत्तघृतगन्धमाघ्राय समागता: भयङ्कराकारा: रक्तश्मस्त्रुकेशा: राक्षसा: अस्मान् भीषयन्त: । यज्ञवेदी: समन्तात् इतस्तत: परिभ्रमन्ति। अत: शीघ्रतरं भवता तत्प्रतीकार: करणीय: नोचेद् विलम्बकरणेन यज्ञहान्या तव राजधर्मविलोप: भवेत्। कविना उक्तम् यथा-

**सायन्तने सवनकर्मणि संप्रवृत्ते वेदीं हुतासनवतीं परित: प्रयस्ता: ।**

**छायाश्चरन्ति बहुधा भयमादधाना: संध्यापयोदकपिशा: पिशिताशनानाम्।।३/२४।।** बीभत्सरस:- बीभत्सरसस्य लक्षणं यथा-

**जुगुप्सास्थायिभावस्तुबीभत्स: कथ्यते रस:।**

**नीलवर्णो महाकालदैवतोऽयमुदाहृत:।।**

**दुर्गन्धमांसरुधिरमेदांस्यालम्बनं मतम्।**

**तत्रैव कृमिपाताद्यमुद्दिपनमुदाहृतम्।।**

**निष्ठीवनास्यवलननेत्रसङ्कोचनादय:।**

**अनुभावास्तत्रमतास्तथा स्युर्व्यभिचारिण:।**

नाटकेस्मिन् पूर्णरूपेण बीभत्सरसस्य वर्णनं न दृश्यते। तथापि षष्ठाङ्के धीवरप्रसङ्गे अस्माभि: बीभत्सरस: परिकल्प्यते। यथा श्याल: जानुकं प्रति वदति–अङ्गुलीयकमाघ्राय जानुक! विस्त्रगन्धोगोधादिमत्सगन्ध एव नि:संशयम् अर्थत् श्याल: धीवरात् अङ्गुलीयकम् आनीय जिघ्रति तत: समागतेन आमगन्धेन स निश्चयं करोति यद् निश्चयमेव मत्स्योदरात् गृहीतं भवेद्

यतो हि अङ्गुरीयकाद् मत्सस्य आमगन्धः आगच्छति तथायं पुरुषः अपि नूनमेव मत्स्योपजीवी अस्ति एतस्य शरीरादपि तथा पूर्ववद् गन्ध आगच्छति। अनेन सामान्येन जुगुप्साभावः आगच्छति। यतः बीभत्सरसस्य स्थायिभावः भवति जुगुप्सा। मत्स्योदरात् दुर्गन्धः भवति आलम्बनविभावः।

**अद्भूतरसः**-कलात्मकदृष्ट्या कथावस्तुनि अद्भूतरसस्य स्थानमपि अतीव महत्त्वपूर्णम्। नाटकेस्मिन् निर्वहणसन्धौ महाकविः कालिदासः अद्भूतरसस्य परिवेषणं करोति। अद्भूतरसस्य लक्षणं यथा-अद्भुतो बिस्मयस्थायिभावो गन्धर्वदैवतः।। पीतवर्णो वस्तु लोकातिगमालम्बनं मतम्। गुणानां तस्य महिमा भवेदुद्दीपनं पुनः।। स्तम्भः स्वेदोऽथ रोमाञ्चगद्गदस्वरसंभ्रमाः। तथा नेत्रविकासाद्या अनुभावाः प्रकीर्तिताः।। वितर्कावेगसंभ्रान्तिहर्षाद्या व्यभिचारिणः। सप्तमाङ्के रक्षाकरण्डकस्योपरि अद्भुतरसस्य कल्पना कविना उपस्थापिता। यतः अद्भुतरसस्य स्थायिभावः भवति विस्मयः। राजा यदा तद् रक्षाकरण्डकम् उत्थापयितुं प्रयतते तदैव उभेऽपि तापस्यौ कथयतः यत् तत् करण्डकं न स्वीकरणीम्। ततः उभे कथयतः किम् अनेन तत् करण्डकं गृहीतं वा इति। तत्पश्चात् उभेऽपि स्वहस्तौवक्षसि संस्थाप्य परस्परम् अवलोकयतः च। तयोः तादृशीं स्थितिम् अवलोक्य राजा कथयति यत् हे तापस्यौ भवत्यौ किमर्थं रक्षाकरण्डकम् उत्थापनेमाम् अवरोधयतः। राज्ञः तथा आकाक्षां समाकर्ण्य प्रथमा तापसी महाराजं प्रति कथयति यत् हे महाराज! शृणोतु भवान्। इयम् अपराजिता नाम काचिद् औषधिः बालकस्य जातकर्मसंस्कारकाले भगवता मारीचेन उपहृता आसीत्। तदानीं तेन उक्तमसीत् यद् एनाम् औषधिं मातापितरौ गृहीतुं शक्नुतः अथवा स्वयं च वर्जयित्वा अपरो जनः भूमिपतितां औषधिं न गृह्णीयात्। तापस्याः तथा वचांसि श्रुत्वा विस्मितः राजा तयोः पुरतः अपरं प्रश्नं स्थापयति यत् यदि कोऽपि तद् रक्षाकरण्डकं गृह्णाति चेत् किं वा भविष्यति? इति राज्ञः प्रश्नमाकर्ण्य प्रथमा तापसी उत्तरति यद् इदं रक्षाकरण्डकं सर्पत्वेन परिणमय्य तं स्पर्शकत्तारं दशति अयमेव भवति अद्भुतम्।

**शान्तरसः**-सप्तमाङ्के मारीचऋषेः आश्रमस्य तथा ऋषेः वर्णनायां शान्तरसस्य अनुभुतः भवति। यथा मारीच ऋषिः दुष्यन्तं वदति, अये पुत्र दुष्यन्त! समय आगतः अतः भवान् स्वपुत्रेण सर्वदमनेन पत्न्या शकुन्तलया च सह मित्रेण इन्द्रेण प्रेषिते रथे आरुह्य स्वनगरं प्रस्थानं कुरु। राजा दुष्यन्तः मारीचं प्रणमति, ततः यथा महर्षिः आज्ञापयति तथा अहं करोमि इति कथयति। महर्षिकाश्यपः लोककल्याणकामनया दुष्यन्तं आशीर्वादः प्रयच्छन् उपदिशति, हेदुष्यन्त! भवान् इन्द्रश्च उभौ अपि लोककल्याणपरकाणि कार्याणि कुरुताम्। भवान् यज्ञानुष्ठानादि सम्पादनेन इन्द्रं पसादय, इन्द्रोऽपि यथोचितकाले मेघवर्षणादि कार्यैः भूमिं शस्यश्यामलां विधाय मनुष्यान् भवतश्च प्रसादयतु एवं प्रकारेण भूलोकस्वलोकयोः कल्याणं कुर्वाणः सुदीर्घकालम् अतिवाहयतं युवयोः च सहस्रं समाः परस्परं प्रीतिः भूयात्, समेन वासं कुर्यात् यथा कवेः भाषया-

**तव भवतु विडौजाः प्राज्यवृष्टिः प्रजासु त्वमपि बिततयज्ञो वज्रिणं प्रीणयालम्।**
**युगशतपरिबृत्तैरेवमन्योन्यकृत्यैः जयतमुभयलोकानुग्रहश्लाघनीयैः ।। ७/३४।।**

**वत्सलरसः**-केचित् विद्वांसः वात्सल्यरसं एकस्वतन्त्ररूपेण स्वीकुर्वन्ति। सप्तमाङ्के सर्वदमननामकस्य बालकस्य वर्णनायां वात्सल्यरसस्य परिप्रकासः भवति। दुष्यन्तः मारिचाश्रमस प्राप्य शकुन्तलास्मृतौ दःखितो भवति। एतन्मध्ये एव राजा पश्यति यत् कश्चित् बालकं द्वे तपस्विन्यौ सिंहशावकात् वारयतः। किन्तु सः बालः प्रक्रीडितुं सिंहशिशुं बलात्कारेण कर्षति। तपस्विनीभ्यां सह दुष्टःबालः सिंहशावकस्य दन्तान् गणयितुं प्रयतते। बालकस्य तादृशं हठम् अवलोक्य राजा निःश्वस्य वदति यत् दुर्ललिताय अर्थात् दुष्टकर्मकत्रे अस्मै बालकाय अहं स्पृहयामि अर्थात् स्निह्यामि इति राज्ञः दुष्यन्तस्य तं बालकं प्रति वात्सल्यरसेन निमय्य वदति। अकारणहासैः येषां किञ्चिन्मात्रं दन्तकुड्मलाः दृश्यन्ते, अस्पष्टवर्णानाम् उच्चारणकारणेन येषां वचांसि अतीव रमणीयानि प्रतिभान्ति, अपि च ये अङ्कमागन्तुं लालायिता दृश्यन्ते। तादृशान् पुत्रान् निजक्रोडे धारयन्तः तस्य शरीरस्य धूल्या आत्मशरीरं मलिनीकुर्वन्ति। ते पितरः निश्चयेन धन्याः अर्थात् भाग्यशालिनो वर्तन्ते।तथा चोक्तम्-

**आलक्ष्यदन्तमुकुलाननिमित्तहासै रव्यक्तवर्णरमणीयवचः प्रवृत्तीन्।**
**अङ्काश्रयप्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनी भवन्ति।।७/१७।।**

ततः तं बालकं वीक्ष्य दुष्न्तः स्वाभाविकतया पुत्रस्नेहेन जायते। राजा बालकं वात्सल्यस्नेहेन कथयति यद् एवं प्रकारेण आश्रमस्य विरुद्धाचरणेन त्वया जन्मनः एव जीवानाम् आश्रयस्थलत्वात् सुखप्रदमपि आश्रमं कृष्णसर्पस्य शिशु इव किमर्थं दूष्यते ? यथा खलु कृष्णसर्पशिशुः बाल्यादेव चन्दनवृक्षं मलिनी करोति तथैव भवान् अपि एतं सुखप्रदं अपि आश्रमं मलिनीकरोति। अर्थात् एतादृशे सुखप्रदे आश्रमे स्थित्वा भवता आश्रमजीवानाम् अरण्यवासिनां च परिपालनमेव कर्तव्यं न तु तेषां कृते कष्टोत्पादनम्। तथाकवेः भाषया चोक्तम्-

**एवमाश्रमविरुद्धवृत्तिना संयमः किमिति जन्मतस्त्वया ।**
**सत्त्वसंश्रयसुखोऽपि दुष्यते कृष्णसर्पशिशुनेव चन्दनः।। अ/७/१८।।**

राजा दुष्यन्तः बालस्य स्पर्शेन प्राप्तं सुखं वर्णयन् कथयति यत् कस्यचित् अज्ञातकुलस्य अंकुरस्वरुपेण अनेन बालेन शरीराङ्गेषु स्पृष्टस्य एतादृशं सुखं भवति, तदा अस्य सौभाग्यशालिनः देहाद् अयं समुत्पन्नः तस्य हृदये कियत्सुखं विदध्यात्? अर्थात् तत् सुखम् अवर्णनीयं तथा कवेः भाषया यथा-

**अनेन कस्यापि कुलाङ्कुरेण स्पृष्टस्य गात्रेषु सुखं ममैवम्।**
**को निर्वृतिं चेतसि तस्य द्यस्यायमङ्कात्कृतिनः प्ररुढः।। अ/७/१९।।**

उपरोक्तप्रकारेण पर्यालोचनात् स्पष्टरूपेण ज्ञायते यत् कालिदासस्य इयं श्रेष्ठा कृतिः रसोत्तीर्णा कालजयिनी नाटकमिदम्। अत्र अङ्गीरसेन सह गौणरसस्य उपस्थापनम् अतीव सुन्दरम् ।

**–सन्दर्भः-**

**(१)अभिज्ञानशाकुन्तलम्-प्रथमाङ्कतः सप्तमाङ्कं यावत्।**
**(२)साहित्यदर्पणः -तृतीयपरिच्छेदः**

साहित्याध्यापकः
श्रीसदाशिवपरिसरः पुरी, ओडिशा



# कृत्प्रत्ययानुसन्धाने अर्थनिर्देशः

**डा.अजयकुमारदाशः**

वर्णानां मेलनेन पदं, पदानां क्रमेण संघटनं वाक्यं, वाक्येन शब्दप्रपञ्चस्यार्थावबोधः इत्येव साररूपं कार्यं व्याकरणेन सम्भाव्यते । तत्र सर्वाणि कार्याणि महर्षिपाणिनिमुनिविरचितस्य व्याकरणामूल्यसम्पदः अष्टाध्यायीग्रन्थस्य सूत्राधारेणैव यदा अनुभूयते तदा व्याकरणस्य व्याकरणत्वं सडिण्डिमुद्घोष्यते सप्रमाणं स्वीकरिष्यते च । यद्यपि व्याकरणजगति वार्त्तिककारस्य तदनन्तरं भगवतः पतञ्जलेः योगदानं, तर्हि तत्सर्वं प्रपञ्चार्थमेव । कारणं सर्वादौ अष्टाध्यायीग्रन्थः ततः परम् एते महापुरुषाणमभ्युदयः । 'छन्दोवत्सूत्राणि' १ इति भाष्यवार्त्तिकवचनेन सूत्राणि श्रुतिसदृशानि भवन्ति । यतो हि 'वृद्धिरादैच्' २ सूत्रे उच्यते - प्रमाणभूत आचार्यो दर्भपवित्रपाणिः शुचाववकाशे प्राङ्मुख उपविश्य महता प्रयत्नेन सूत्राणि प्रणयति स्म । तत्राशक्यं वर्णेनाप्यनर्थकेन भवितुम्, किं पुनरियता सूत्रेण इति । अतः तेषां मनोरमविन्याशः वैज्ञानिकरीत्या वर्णसंघटनेन सूत्ररूपेण महर्षिपाणिनेः स्वीयग्रन्थे उपलब्धो दृश्यते। तत्राष्टाध्यय्याः निर्माणोपक्रमे क्रमेण सर्वनाम-इत्संज्ञा-आत्मनेपद-परस्मैपद-कारक-विभक्ति-समास-द्विर्वचन-संहिता-सेट्-अनिट्-प्रकरणानां सूत्राणि सुसम्बन्धानि वर्त्तन्ते । धात्वधिकारे अर्थात् 'धातोः' ३ इति सूत्रतः आरभ्य आतृतीयाध्यायपरिसमाप्तिं यावत् अष्टाध्ययीग्रन्थे कृदन्तविषयकसूत्राणि दृग्गोचराणि भवन्ति । डुकृञ् करणे इत्यस्माद्धातोः 'क्विप् च' इति सूत्रेण क्विप् प्रत्यये तस्य सर्वापहारिलोपे च 'ह्रस्वस्य पिति कृति

तुक्' इत्यनेन तुगागमे कृत् शब्दस्य निष्पन्न: । प्रतीयते विधीयते इति प्रत्यय: । कृत्प्रत्ययस्य सूत्रानुसन्धानं कृत्प्रत्ययसूत्रानुसन्धानम्, तस्मिन् कृत्प्रत्ययसूत्रानुसन्धाने , तत्र अर्थस्य निर्देशो नाम तेषु सूत्रेषु प्रत्ययविधानक्षेत्रे अर्थनिर्देश: इति ।

'इदं वाचं व्याकुरु'४ इति सुवचनेन पदानामन्वाख्यानं वाक्यानां विश्लेषणं प्रकृततात्पर्यान्वेषणदिशा अपेक्षितं जायत इति धिया शब्दानुशासने अन्वाख्यानपद्धति: विश्लेषणात्मकमार्गेणान्वेष्टव्या जाता । पदानां विश्लेषणं प्रकृतिप्रत्ययसंघटनात्मकं संकलनमनुशासनप्रक्रियायां तस्यां प्रारब्धं प्रवृत्तं च । तेनैव क्रमेण सूत्रात्मकव्याकरणे अन्वाख्यानप्रक्रिया विश्लेषणप्रक्रिया वा प्रारब्धा । सूत्रेषु अर्थनिर्देशपुरस्सरं पदानामन्वाख्यानं धातो: समवधानपूर्वकं विश्लेषणं कृतं विद्यते । एवञ्च प्रातिपदिकनिष्पत्तौ प्रक्रियाचतुष्टयस्य पञ्चानां वा आकलनमनुमितं दृश्यत इति वक्तुं शक्यते ।

पदसाधुत्वसम्पादनाय पाणिनीयव्याकरणशास्त्रे उपदिष्टा: उपाया: सर्वथा विभिन्ना: इत्यनुशीलनादवधीयन्ते । पदं द्विविधम्, सुबन्तस्तिङन्तश्चेति । सुबन्तपदस्य निष्पत्तये प्रातिपदिककल्पनं ततश्च सुबित्यस्य समभिव्याहार: । प्रातिपदिककल्पनायां पाणिनौ सूत्रद्वयमुपपन्नम्, 'अर्थवधातुरप्रत्यय: प्रातिपादिकम्'५ 'कृत्तद्धितसमासाश्च'६ । कृदन्तस्य तद्धितान्तस्य समासस्य च प्रातिपदिकसंज्ञा लोके अर्थवत्वेन प्रयोगार्हभूतानां पदानां कृते उपदिष्टम् । कृदन्ते निष्पन्नस्य प्रातिपदिकस्य प्रतिपत्तये या प्रक्रिया उपदिष्टा सा कृत्प्रक्रियाभावेनाभिधीयते । एषा प्रक्रिया धात्वधिकारे विहितानां तिङ्भिन्नानां प्रत्ययानामुपपादनेन कल्प्यते । पाणिनीयकल्पनाया: 'कृत्य' 'कृत्' भावेन च प्रत्ययानामुपकल्पनं प्रकृतिभावेन धातूनामुपस्थापनम् । तत्र 'कृत्या:'७ इत्यस्यापि अधिकार: 'ण्वुल् तृचौ'८ पर्यन्तं विद्यते । प्रकृतिनिर्देशे उपाया: तत्र पुन: आगमव्यवस्था आदेशव्यवस्था विभिन्नमर्थमादाय प्रत्ययाभिधानं विभिन्नै: उपायै: पर्य्यालोचितम् । प्रकृतिनिर्देशार्थं पञ्चमीविभक्ते: आश्रयणं कृतम् । 'यस्मात्प्रत्ययविधिस्तदादिप्रत्ययेऽङ्गम्'९ इत्यङ्गसंज्ञाविधायकसूत्रे यस्मादिति पञ्चमीनिर्देश: एतत्कृते ज्ञापक: । एवं च धातुरित्यत्र पञ्चमीनिर्देशात् तेन एकवाक्यतामादाय प्रकृतौ पञ्चम्यन्तता उपपन्ना इति ।

अर्थं विना शब्दस्य स्थिति: नास्तीति निश्चय: । कारणं शब्दार्थयो: सम्बन्धो नित्यो विधीयते । कालिदासेनापि स्वीयरघुवंशमहाकाव्यग्रन्थस्य मङ्गलश्लोके कथ्यते 'वागर्थाविव'१० संपृक्तौ इति । यद्भवतु केनापि विधिना पदसाधुत्वविधानमेकमनुपमं मनोरमं साधनं वर्त्तते । परन्तु स विधि: सर्वदा शास्त्रेषु शास्त्रान्तरेषु चानुमोदित: स्यात् । यद्यपि विधिषु अर्थनिर्देशविधि: नास्ति तथापि प्रत्ययविधानवेलायां सर्वे प्रत्यया: अर्थनिर्देशपूर्वकं यथार्थया विभक्त्या सूत्रेषु न्यस्ता: सन्ति। अत्र विचारितायां कृद्वृत्तौ कृदन्तस्य कृत्यविभागे अष्टचत्वारिंशत्सूत्राणि (४८) तथा च तृतीयाध्यायस्य पूर्णं यावत् कृत्सूत्राणि उपलभ्यन्ते ।

सूत्रानुशीलनेन प्रत्येतव्यं जायते यत् कुत्रचित् विभक्तिना अर्थनिर्देश:, कुत्रचित् धातुना अर्थनिर्देश:, कुत्रचिदपि पदनिवेशेनार्थनिर्देश: इत्यादिभावेन सूत्रावगमनार्थं बहुविधा: उपाया: ग्रन्थे आकलिता: सन्ति । उदाहरणार्थं कृत्यविभागस्य एकमुदाहरणमालोच्यते । सूत्रनिर्माणोपक्रमे 'अचो यत्'११ इति सूत्रस्य आदौ आलोचना विहिता । तेन सूत्रेण अजन्तधातोरेव यत् प्रत्ययो विधीयत इति सूत्रार्थ: । तत: परं हलन्तधातो: यत् प्रत्यविधानेच्छया 'पोरदुपधात्'१२ इति सूत्रं प्रणीतम् । पोरदुपधात् इति सूत्रम् अष्टाध्यायीग्रन्थस्य तृतीयाध्यास्य प्रथमपादस्य अष्टनवतिसंख्यकं सूत्रं वर्त्तते । अदुपध इति पदम् अत्र अर्थनिर्देशेन युक्तमस्ति । न विद्यते उपधा यस्य अदुपध:, तस्मात् अदुपधात् । एतस्मिन् सूत्रे पुरिति वर्गनिर्देश:, अर्थात् पवर्गान्तात् इत्युक्ते पकार: यत्र अन्तिमे दृश्यते, तस्मात् धातो: यत् प्रत्ययो भवति । येन शप् धातो : शप्यमिति रूपं समेति ।

द्वितीयोदाहरणरूपेण 'शकिसहोश्च'१३ इति सूत्रं स्वीक्रियते । सूत्रविवेचनावसरे सूत्रवृत्ताविचार्यते शक्लृ - शक्तौ, षह - मर्षणे इत्येताभ्यां धात्वो: यत् प्रत्ययो भवति । धातूनाम् अनेके अर्था: सन्ति । अत: अत्र शक्लृ -शक्तौ षह - मर्षणे इत्यस्मिन्नर्थे एव यत्प्रत्ययनिष्पन्नं पदमेव स्वीक्रियते, न तु यथा कथञ्चित् शकादिधातुभ्य: उत्पन्नं पदमिति । अतएवात्र धातुना अर्थनिर्देशो विहित: ।

तृतीयोदाहरणरूपेण 'गेहे क:१४ इति सूत्रं विचार्यते । अत्र ग्रह् धातो गृहकर्त्ता इत्यस्मिन्नर्थे एव क प्रत्ययो विहित: । न तु अन्यस्मिन्नर्थे विद्यमाने ग्रह् धातो: । अत: सूत्रे अत्र गेहपदेन साक्षादर्थनिर्देश: प्रतिपादित: इति।

पुन: 'शिल्पिनि ष्वुन्'१५ इति सूत्रे शिल्पिनि इति पदम् शिल्पि इति अर्थनिर्देशेनैव ष्वुन् प्रत्ययस्य सार्थकता ।

'इगुपधज्ञाप्रीकिर: क:'१६ इति सूत्रानुसन्धाने अर्थनिर्देशरूपेण उपधाया: व्यवहारो जायते । येन बुध:,विलिख:,विक्षिप: इत्यादि प्रयोगा: साधुप्रतीयन्ते ।

एवं शास्त्रविस्तारभयात् दृग्गोचराय अर्थानुसन्धाने सुलभाय सूत्राणि पञ्च मया चर्च्चितानि ।

अत: सूक्ष्मातिसूक्ष्मेन विवेचनेन सुदृढेन मनसा यदि निरीक्ष्यते, तर्हि सर्वेषु सूत्रेषु योगेषु वा येन केनापि प्रकारेण अर्थनिर्देशस्य परिसीमा परिव्याप्ता इति निश्चप्रचं वक्तुं शक्यते । यतो हि भाष्यकारेण अपि शब्दनियमेन सह अर्थनियमस्य१७ साधुता स्वीयग्रन्थे महाभाष्ये प्रदत्ता इत्यलम् ।

**सन्दर्भसूची -**


१.म.भा.- पृ.१६१
२.म.भा. - पृ. १२७ (पा.सू.१-१-१)
३.पा.सू.३-१-९१
४.शतपथब्राह्मणम्
५.पा.सू.१.२.४५
६.पा.सू.१.२.४६
७.पा.सू.३-१-६५
८.पा.सू.३-१-११३
९.पा.सू. १.४.१३
१०.रघु.म.का. - मङ्गलाचरणम्
११.पा.सू.३-१-९७
१२.पा.सू.३-१-९८
१३. पा.सू.३-१-९९
१४.पा.सू.३-१-१४४
१५. पा.सू.३-१-१५४
१६.पा.सू.३-१-१३५
१७.म.भा.पस्पशाह्निकम्



संविदाध्यापक:, नव्यव्याकरणविभाग:,
श्रीसदाशिवपरिसर:,पुरी ।




# अलंकारमणिहारे ध्वनि:

**डॉ.शिवप्रसादवेहेरा**

ध्वनिचर्चा आदौ ध्वन्यालोके कृता दृश्यते। ध्वनि: पञ्चविध: शब्दार्थव्यंजककाव्य –व्यंग्यरूपश्चेति। तत्र व्यंग्य: ध्वनिरूप: भवति। अयमेव काव्यस्य साध्यभूत: आत्मभूत: जीवभूत: सारभूतश्चेति । अन्यानि च साधनभूतानि। सहृदयश्लाघ्य: अर्थ: अयं व्यंग्य एव । स च त्रिविध: वस्तुरूप: अलंकाररूप: रसरूपश्चेति। ध्वन्यालोके काव्यप्रकाशे साहित्यदर्पणे च त्रिविधस्य व्यंग्यध्वनिरूपस्य विवेचनं प्राप्यते । श्रीकृष्णब्रह्मतन्त्रपरकालसंजमीन्द्रप्रणीते अलंकारमणिहारे वस्तुध्वने: अलंकारध्वनेश्च प्रसंग: प्राप्यते ।

**१.उपमाध्वनि:–** अलंकारमणिहारकार: उपमालंकारे उपमाध्वनिम् निरूपितवान्। यथा

**क्वचित् शब्दशक्तिमूलानुध्वननविषय:।**
**क्वचिदर्थशक्तिमूलानुध्वननविषय:।।**

तत्र प्रथम: यथा-

**कटकोज्वलपुन्नगो गन्धर्वकुलैरुदीर्णसौभाग्यम्।**
**धरणीभृच्चूडामणिरनणीय: श्रीनिवासतां धत्ते ।। १**

अर्थात् श्लिष्टानां कटकादिशब्दानां नितम्बादि - शब्दपरिवृत्यसहिष्णुतया शब्दशक्तिमूलानुध्वननविषय उपमाध्वनिरूपेण परिगण्यते इति।

अत्र मूढादि- पदप्रयोगात् असूयादेरप्रत्ययात्प्राधान्ये अर्थशक्त्या उपमा एव व्यज्यते।

द्वितीयः प्रकारः यथा -

**असमानरोचिरहमित्यभिमानस्तव घनाघन महीयान्।**
**ननु नामाढौकिष्ठा न मनागपि वा फणाभृदचलशिखाम्।। २**

अत्र मूढादि -पदव्यवहारतः असूयादेः अप्रत्ययात् प्राधान्येन अर्थशक्तिहेतुना उपमा एव ध्वन्यते।

**२.उपमेयोपमायां ध्वनिः यथा -**

**शरदिजविकर्त्तनस्य हि मुरवैरिसुदर्शनोद्वितीयोऽयम्।**
**मुररिपु सुदर्शनस्य तु शरदुदित विकर्त्तनोऽपि तथा।। ३**

अस्मिन् श्लोके द्वितीयशब्दस्य सादृश्यविशिष्टे शक्तेः अभावात् व्यक्तिरेव प्रतीयते।

३.रूपके **ध्वनिदर्शनम्** -

रसगङ्गाधरकारपण्डितराजजगन्नाथानुरोधेन अलङ्कारमणिहारकारश्रीकृष्णः अपि द्विविधरूपकम् उदाहृतवान्। यत्र **शब्दशक्तिमूलो ध्वनिः** यथा -

**विमतेषु त्वं जिष्णुर्दण्डधरश्चासि पुण्डरीकाक्ष।**
**विनतेषु तु प्रचेता धनदोऽपि च भवसि कनकशिखरिमणे ।। ४.**

अत्र प्रकरणेन शक्तिनियन्त्रणे अपि इन्द्रयमवरुणकुवेराद्यभेदाः भगवति व्यज्यन्ते। अर्थात् पुण्डरीकाक्ष एव इन्द्रः, पुण्डरीकाक्ष एव यमः, पुण्डरीकाक्ष एव वरुणः, पुण्डरीकाक्ष एव कुवेरः इति । अत्र इवादि अभावः । एव सद्भावः। उपमाध्वनिः इति परमार्थः ।

**अर्थशक्तिमूलो ध्वनिः** यथा-

**भगवन् भवत् प्रतापो हरितः परितः प्रकाशयति सततम्।**
**विदलयति कमलवलयं शोकं लुम्पति च कोकलोकानाम्।। ५**

अत्र हरित्प्रकाशकत्वादिना भगवत् प्रतापस्तपनाभिन्न इति रूपकं ध्वन्यते। अत्र भगवत् प्रतापः एव तपनः(सूर्यः) इति वाच्यरूपकम्। भगवत् प्रतापः तपन इव इति उपमा ध्वन्यते।

**४. परिणामालंकारे ध्वनिः -**

तत्र शब्दशक्तिमूलः अर्थशक्तिमूलः चेति द्विविधः परिणामध्वनिः । पण्डितराजमते तदपि दृश्यते। तदनुरूपम् अलङ्कारमणिहारे अपि विद्यते।

क्रमेण उदाहरणं यथा -

**१.शब्दशक्तिमूलध्वनिः -**

**कंजायताक्षि मुग्धे संज्वरमनुविंदसे सखि किमर्थम्।**
**आशास्व घनं कृष्णं येन त्वं शान्तिमेष्यसि क्षिप्रम्।। ६**

अत्र झगिति संज्वरशमनहेतुत्वेन उपस्थिते नीलाम्बुदे पश्चात् मुग्धारूपवोद्धव्याविशेष्यक - स्मरसंज्वरवत्तावैशिष्ट्यबुद्धौ सत्यां सहृदयायाः तस्याः तादृशसंज्वरशान्तिकारि -श्रीकृष्णरूपविषयताद्रूप्यबुद्धिः जाते।

**२.अर्थशक्तिमूलः ध्वनिः-**

**कल्पमहीरूह कल्पय निरतिशयां संपदं नितान्तं नः।**
**यां सन्तोऽनुभवन्तो जन्मजरादिव्यथां न धावन्ति।। ७**

अत्र तु भगवत: कल्पमहोरूहाभिन्नत्वेन प्रत्यये पुनर्निरतिशयसंपत्संपादनलक्षणप्रकृतकार्यसिद्धि: इति कल्पकस्य आरोप्यमाणस्य भगवद्रूपविषयाभिन्नत्वं मृग्यम्। तत् च व्यंग्यतायाम् एव भवति इति परिणामध्वनि: एव अयम्, न अतिशयोक्ति: इति विचारका:।

**५. उल्लेखालङ्कारे ध्वनिमण्डनम्**

शुद्धोल्लेकध्वनि: -

**ननुनाथ मोहभुग्ना व्यसनविविग्ना विरोधिभिर्भग्ना।**
**उपतापैरपि रुग्णास्त्वां वीक्ष्यानन्दसंल्पवे मग्ना:।। ८**

अत्र चरणत्रयोदितानां चतुर्णां वीक्षणकर्तृणाम् आनन्दसंल्पवमग्नत्वोक्त्या क्रमेण मोहव्यसनविरोधि उपतापनिरासकत्वप्रकारकाणि ग्रहणानि आक्षिप्यन्ते। अयं च शुद्धस्य उल्लेखस्य ध्वनि:।

**उल्लेखे संकीर्णध्वनि: –**

**अहिगिरि परिसरधरणौ विहरति हरिनीलरूचिररूचि भवति।**
**अनुगच्छन्ति करिण्यो ननु नृत्यन्ति च रमेश बर्हिण्य: ।।९**

अत्र ध्वन्यमानया एकैकग्रहणरूपया द्विरजलदभ्रान्त्यातदुभयसमुदायरूप उल्लेखसंकीर्ण:। न चात्र भ्रान्तिरेव चमत्कारिणीत्युल्लेख: शक्योऽपह्नोतुम्। अनेककर्तृकानेकधाग्रहणस्य अलंकारान्तरविविक्तविषयस्य विच्छित्तिविशेषस्य इहापि जागरुकत्वात्।

**द्वितीयप्रकारोल्लेखध्वनि:-**

**गगने विसृत्वरी ते स्थगयति ककुभां मुखानि तनुसुषमा।**
**धरणी तु विबुधतटिनीं परिरिप्सुर्भवति फणिगिरिसुरद्रो ।।१०.**

अत्र अधिकरणभेदप्रयुक्तमेकस्यामेव श्रीनिवासविग्रह - सुषमायां कादम्बिनीत्वयमुनात्व -रूपानेकविधत्वं रूपकसंकीर्णं ध्वन्यते।

**६. स्मरणालङ्कारे ध्वनिप्रदर्शनम्-**

**मणिसारमयि मसारं व्यपसारय सारसाक्षि रभसात्वम्।**
**मम गोकुलमौलिमणिर्मानसमतिवेलमेव लोलयति।।११**

अत्र भगवता नन्दनन्दनेन विश्लिष्टाया: कस्याचित् नायिकाया: सखीं प्रत्युक्तिरूपे पद्ये अपि नीलमणिज्ञानाधीन तत् सदृश नन्दनन्दनस्मृति: प्राधान्येन ध्वन्यते।

**७.भ्रान्तिमनलंकारे ध्वनिविलास: -**

**प्रणतमृडमकुटसरिति प्रतिवीचि त्वत्पदप्रतिच्छन्दान्।**
**प्रणमन् विलोक्य गजमुखशिशु: स्वशुण्डां प्रसारयति शौरे।।** १२.

अत्र भगवत: चरणप्रतिबिम्बेषु पद्मभ्रान्ति: ध्वन्यते।

**८. अपह्नुतिरलंकारे ध्वनिदर्शनम् -**

एवम् अपह्नुतिं षड्विधां निरूप्य ध्वनिं प्रदर्शितवान्। यथा -

**एषा न वैजयन्ती पुरो लसन्तीमहेन्द्रचापलता।**
**नैषापि जलधिदुहिता परं तु विद्युल्लता समुन्मिषिता।। १३**

अत्र नैषा वैजयन्ती अपि तु इन्द्रधनुर्वल्ली, नापि एषा लक्ष्मी: अपि तु विद्युल्लता इता पूर्वोत्तराभ्यां द्वे अपह्नुती तावत् स्पष्टम् एव निर्दिष्टे। ताभ्यां च नायं भगवान् किं तु प्रावृषेण्यघनाघन इति तृतीयापह्नुति: व्यंजनया प्राधान्येन आवेद्यते।

अयं च ध्वनिः रसगङ्गाधरकारदिशा वर्णितः श्रीकृष्णेन । इत्थं मणिहारकारस्य ध्वनिविवेचनं रसगङ्गाधरकारप्रभावितम् ।

**९. उत्प्रेक्षायां ध्वनिदर्शनम् -**

मणिहारकारश्रीकृष्णः उत्प्रेक्षालंकारतः उत्प्रेक्षाध्वनेः पार्थक्यं परिकल्य उदाहरणं प्रदत्तवान् ।

यत्र विषयविषयिनिमित्तेषूपात्तेषु केवलम् इवादिवाचकानुपादनमात्रेण उत्प्रेक्षा अवगम्यते। सा अतिमात्र स्फुटतया वाच्यायमानत्वादलंकारतामेव विभर्ति । यत्र चोत्प्रेक्षणीयस्य विषयिणोपि अनुपादानं निवद्धेन वस्तुना अलंकारेण वा उत्प्रेक्षा अवगम्यते तत्रैव उत्प्रेक्षाध्वनिः । यथा -

**उपगूढां हरिणीं श्रियमुरसा कृष्णेन वीक्ष्य वृषशैले ।**
**अभिवीक्षन्ते शश्वत्कृष्णांनिजवल्ल भंवनहरिण्यः ।।१४.**

अत्र हरिणीकर्तृक-कृष्णसारकर्मकवीक्षणेन वस्तुना श्रीकृष्णवक्षः समालिङ्गिता हरिणीशब्दाभिलाप्या श्रीरिव स्वयमपि तथा वुभूषव इव इति उत्प्रेक्षा ध्वन्यते।

**१०. तुल्ययोगितालंकारे ध्वनिः -**

**नक्तंदिवं मुरारे ज्वलतस्तव तेजसः कथा यत्र ।**
**तत्र कदाचिद्दीव्यन्को वा भानुः कृशानुरपि।। १५**

अत्र को वा इत्यनेन वाच्यलक्ष्यव्यतिरिक्तस्य अगणनीयत्वस्य भानुकृशानुभ्याम् अप्रकृताभ्याम् अन्वयो व्यज्यते इति तुल्ययोगिता ध्वनिः ।

**११. आवृत्तिदीपकालंकारे ध्वनिः -**

**करिवरनिनदो मूर्छति हरिवरनिनदोऽपि मूर्छति समन्तात्।**
**मूर्छति च तत्प्रतिस्वुद्गुहागृहाभ्यन्तरेषु शेषगिरेः ।। १६**

अत्र कारणमालालंकारः ध्वन्यते । अत्रैव श्रीकृष्णस्य महत्वं प्रतिपाद्यते।

१२. (ङ) सहोक्त्यलंकारे ध्वनिः -

**पुरविमथनोत्तमाङ्गं धरणितलेन त्रिविक्रमश्रीमन्।**
**अस्ति स्तिमितं त्वत्पदकमलेन कृतं पुरा बलेस्सवने।। १७**

अस्मिन् उदाहरणे सहादिशब्दाभावे गम्या। एवं सहार्थशब्दापनयने सर्वत्रगम्या भविष्यन्तीति मणिहारकारः उक्तवान् ।

१३. (ङ) विनोक्तिरलङ्कारे ध्वनिदर्शनम् -

**किं तेन जन्मना स्यात्स्वान्ते यस्मिन्न चिन्तितोऽनन्तः ।**
**किं तेन कर्मणा वाऽनन्ते यन्नार्पितं भवत्यन्ते।। १९**

अत्र भगवत्चिन्तनं विना स्वान्तस्य भगवदर्पणं विना कर्मणश्चारमणीयत्वं किमिति क्षेपेण फलप्रश्नेन वा व्यज्यते। तस्य च भगवद्विषयकभावध्वन्यनुग्राहकत्वेऽप्यप्रतिहतैव ध्वनिव्यपदेश्यता।

१४. ) श्लेषालंकारे ध्वनिः -

श्लेषालंकारः अर्थद्वये शब्दशक्त्याप्रकाशमाने भवति । प्रकृताप्रकृतयोविशेष्ययोरपि श्लिष्टपदोपादाने ध्वनिः वर्तते । तथाहि - प्रकृताप्रकृतश्लेषोदाहरणे असावदयमारूढः, इत्यादौ न श्लेषोऽलंकारः । अर्थद्वयस्याभिधाव्यापारेण तुल्यवृत्तिकत्व एव तस्योन्मेषात्। अतएव प्रकृतश्लेषे अप्रकृतश्लेषे च प्रकरणदीनामभिधानियामकानामभावादर्थद्वयेऽपि शब्दस्य तुल्यवृत्तित्वात् श्लेषालंकारः । इह तु प्रकृतार्थे प्रकरणादिना नियन्त्रितस्य तस्याप्रकारकेऽर्थे कुण्ठितप्रसरतया

शब्दो व्यंजनया वृत्या तमर्थमवगमयति इति शब्दशक्तिमूलानुरणनतुल्योव्यंग्यध्वनि: ।

मम्मटदिशा उदाहरणम् -

**भद्रात्मनो दुरधिरोहतनोर्विशाल वंशोन्नते: कृतशिलीमुखसंग्रहस्य ।**
**यस्यानुपप्लुतगते: परवारणस्य दानाम्बुसेकसुभग: सततं करोऽभूत् ।।**

अत्र नृपे कस्मिंश्चिद्वर्ण्यमाने भद्रात्मन इत्यादि विशेषणै: मङ्गलात्मकस्य विशालकुलोद्भवस्यानेकशरसंग्रहशालिन: प्रत्यर्थनिवारकस्य राज्ञ: पाणिरभूदिति प्रकृतवाक्यार्थे प्रकरणसनाथेनाभिधा व्यापारेण शब्दत: प्रतीते: पश्चादभद्रादिपदसामर्थ्यमहिम्ना भद्रजातीयस्य विशालपृष्ठास्थि समुन्नतेर्भ्रमरपरीतस्यात्कृष्टगजस्यकर इत्यप्रकृतगजाद्यर्थस्य प्रतीतिस्तावदनुभवसिद्धा । सा च नाभिधा व्यापारेण , प्रकरणादिना तस्य नियन्त्रणात् । अतो व्यंजकव्यापारेण तत् प्रतीतिरित्यप्राकरणिकार्थस्य व्यंग्यतया शब्दशक्तिमूलानुरणनोपमाव्यंग्यध्वनिरिति मम्मटोपाध्यायादय:।२०

१५.पर्यायोक्तालंकारे ध्वनि: -

ध्वानिपर्यायोक्तयो: वाच्यव्यंग्ययोश्च भेदो दृश्यते । एवं च यद् व्यंग्यवस्तु व्यंग्यत्वाकारादपि चारुतरेणाकारान्तरेण शब्देनाभिधीयते तत्पपर्यायोक्तिमिति पर्यवसानात् वाच्यरूपापेक्षया व्यंग्यरूपस्य चारुत्वाभावान्न ध्वनि विषयता । यतो हि व्यंग्यं प्राधान्ये हि ध्वनि: । इति ध्वनिकारस्य मतम्।

ध्वन्यालोकद्वितीयोद्योते श्लेषादय: ध्वनय: विरोधाभासादय: ध्वनयश्च निरूपिता: सन्ति। काव्यप्रकाशे साहित्यदर्पणे रसगङ्गाधरे च उपमाद्यध्वनय: निरूपिता: सन्ति।

इत्थं मणिहारकारेण अलंकारमणिहारे उपमाद्यलंकारध्वनय: प्रदर्शिता: । एतेन मणिहारकारस्य पाण्डित्यं प्रगल्भप्रतिभाप्रभा विद्वता च प्रतीयन्ते । इति शिवम् ।

**पादटीका-**

१.अ.म.१,उदा.१४२,पृ.८५।
२.तत्रैव.उदा.१४४,पृ.८६।
३. अ.म.१,उदा.१४८, पृ.८७।
४.अ.म.१,उदा.२४०,पृ.१४३।
५.तत्रैव.उदा.२४२,पृ.१४४।
६. अ.म.१,उदा.२५१,पृ.१४९।
७.अ.म.१,उदा.२५०.पृ.१४९।
८. अ.म.१,उदा.२७०,पृ.१५८।
९. अ.म.१,उदा.२७१,पृ.१५८।
१०.अ.म.१,उदा.२७२,पृ.१५९।
११ अ.म.१,उदा.२८६,पृ-१६५।
१२.अ.म. १,उदा.२९४. पृ- १६९।
१३.अ.म.१, उदा .३४०,पृ.१९४ ।
१४.अ.म.१,उदा.४८५,पृ.२७८।
१५.अ.म.१,उदा.४४१,पृ.३१७।
१६.उदा. ५७६, पृ.३३५।
१७.अ.म.१,उदा. ७१४, पृ.४१९।
१८.अ.म१, पृ.४२०।
१९.अ.म.१,उदा. ७३१,पृ.४२५।
२०. अ.म.२,पृ.१८०।
२१.अ.म.२,पृ.२३४।

संस्कृताध्यापक:, सामसीमहाविद्यालय:
सामसी, मालदा, पश्चिमवङ्ग:



# सांख्यशास्त्रे जिज्ञासाप्रकरणम्-किञ्चनसमीक्षणम्

विकासिनिगुमानसिंह:

भोगापवर्गौ हि पुरुषार्थौ यत्कृते प्रधानप्रवृत्तिरिति सांख्या:। तत्र भोगस्तावज्जन्यभावतया नान्तमत्तिक्रामति। तेनैषपुरुषार्थोऽपि नात्यन्तपुरुषार्थ:। अन्तमतिक्रामत: पुरुषार्थस्यैव अत्यन्तपुरषार्थत्वात्। अत एव तत्साधनोपदेशपरं शास्त्रमपि नारम्भणीयम्। मन्दप्रयोजनत्वापत्ते:। किन्तु दु:खान्यन्तनिवृत्ति: साधनोपदेशयैव। यतो दु:खात्यन्तनिवृत्तिरेव अन्तमतिक्रामन्तीपुरुषमात्राभिलाषगोचरतया परमपुरुषार्थ:। तथा च प्रकृतशास्त्रार्थो ज्ञात: सन् परमपुरुषार्थसमर्थोभविष्यतीत्यर्थ:। आध्यात्मिकादिदु:खत्रिकेण सह प्रतिकुलवेदनीयत्वेन रूपेण संवन्धात्, दु:खत्रयोच्छेदके हेतौ पुरुषाणां जिज्ञासा भवति। ननु शारीरदु:खस्य रसायनादि सेवनात्, मानसस्य मनोज्ञस्त्रीपानभोजनादित:, आधिभौतिकस्य नीतिशास्त्राभ्यासनिरत्ययस्थानसेवनादित: आधिदैविकस्य मणिमन्त्रौषधादितो दृष्टोपायादेवोच्छेदो भविष्यति कृतं वह्वायाससाध्येन शास्त्रीयोपायेन विवेकप्रत्ययनेतिशङ्क्ते यत् –लोकप्रसिद्धेसु करे भेषजादौदु:खोच्छेदकेहेतौ सुलभेसतिदुर्लभेविवेके जिज्ञासा अपार्थानिरर्थका, व्यर्था, अन्यथा सिद्धा इत्यर्थ:। तामिमां शङ्कां परिहरति- नेति। इति चेत्। न कुत: ? एकान्तात्यन्ततोऽभावात्। एकान्तंनाम अवश्यम् अत्यन्तस्य नाम समुलतया पुर्णरूपेण वा इति। अर्थात् दु:खनिवृत्तेरेव अवश्यंभावस्य पुनर्दु:खानुत्पादस्य च अभावात् न दृष्टेलौकिकेहेतौ जिज्ञासा कार्येत्यर्थ:। दृष्टोपायेन नियमेन दु:खनिवर्तकत्वरूपम् एकान्तत्वं नास्ति, आसाध्यरोगाणां भेषजानापिनिवृत्तेरदर्शनात्। दृष्टोपायजन्यदु:खनिवृत्तौ च भविष्यदु:खासहवर्तित्वरूपम् अत्यन्तत्वं नास्ति, निवृत्तरोगाणामपिकालान्तरे पुनरुत्पतिदर्शनादिति। यथा सूत्रम्– **नदृष्टात्तत्सिद्धिर्निवृत्तेऽप्यनुवृत्तिदर्शनात्** ।(सां. सू.- १२)

शास्त्रप्रतिपाद्योविषय एवमुमुक्षुणां जिज्ञास्य:, तंप्रति दु:खत्रयोनिवृत्तिरुपप्रयोजनत्वात्,

**यद् यत् स प्रयोजनंतत्तज् जिज्ञास्यम्, यथा धर्मादिकम्"इति चात्रप्रयोग:।**

अतोऽत्र परमपुमर्थस्य स्वत एवेष्टत्वेन तदुपाये शास्त्रे प्रेक्षावतामिष्टसाधनताज्ञानादवश्यं जिज्ञासा भवतीत्याशयेन प्रवृत्तां कारिकां व्याचिख्यासु: शास्त्रविषयस्याऽजिज्ञास्यत्वप्रयोजकत्वखण्डनायाऽऽदौ प्रयोजनविकल्पान् प्रदर्शयति- **एवं हीत्यादिना।**

यदि दु:खजगतिन स्यात् तर्हि शास्त्रविषयो न जिज्ञास्येत। अर्थात् दु:खनिवृत्यर्थं हिप्रेक्षावतां शास्त्रविषयमगमन्तुं प्रवृति:, दु:खाभावे तु **प्रयोजनं विनानमन्दोऽपिप्रवर्तते।** इति न्यायेन कोनामप्रेक्षावान् शास्त्रविषयज्ञानाय प्रयतेत? अपि तु न कश्चिदिति। तथा च शास्त्रविषयज्ञानस्य दु:खनिवृत्तिरूपपरमपुरूषार्थफलकत्वात् जगति दु:खरूपप्रतियोग्यप्रसिद्धत्वे तस्यानुच्छेदत्वे वाकुतोलोकानां तज्ज्ञानेच्छास्यात्? ऩहि शशविषाणस्येवासत: पदार्थस्य परिहारोपाय: केनापि जिज्ञास्येत इतिभाव:। ततश्च जगतिदु:खाभाव: एव शास्त्रविषयस्याजिज्ञास्यत्वे **प्रथमोहेतुरत्र** प्रतिपादितम्।

शास्त्रविषयस्याजिज्ञास्यत्वे द्वितीयं विकल्पं प्रदर्शयति- **सद्वेतिजिहासितम्।**अर्थात् विद्यामनमपितद्दु:खं यदि त्यक्तुमिष्टं न स्यात्, तदापिशास्त्रविषयो न जिज्ञास्येतेति सम्बन्ध:। अर्थात दु:खनिवृत्तिकामुकानां हि भवति शास्त्रविषयज्ञानाय प्रवृत्ति:, ये पुन: दु:खनिवृत्तिमेव न कामयन्ते ते कथङ्कारं शास्त्रविषयबुभुत्सायै प्रयतेरन्? अपि तु न कथंचित् तेषां तत्रप्रवृत्तिर्घटते, प्रवृत्तिं प्रति कामनाया हेतुत्वादिति। तद् यथोक्तम् –

**"आत्मजन्या भवेदिच्छा इच्छाजन्या भवेत्कृति:।**
**कृतिजन्या भवेच्चाष्टा, चेष्टाजन्या भवेत् क्रिया ।।इति।**

नहि सुखवद् अजिहासितस्य हानोपायजिज्ञासा सम्भवतीतिभाव:। ततश्च दु:खनिवृत्तिकामनाभाव एव शास्त्रविषयस्याजिज्ञास्यत्वे **द्वितीयो हेतुरिति**प्रतिपादितम्।

शास्त्रविषयस्याजिज्ञास्यत्वे तृतीयं विकल्पमाह- **जिहासितं वेति अशक्यसमुच्छेदम्।** अर्थात् - यत्नसाध्येहिविषये भवतिमानवानां प्रवृत्ति: , प्रवृत्तिं प्रति इष्टसाधनताज्ञानस्य कृति साध्यता ज्ञानस्य च हेतुत्वात्, "येषां च दु:खं नास्मन्पुरुषार्थनिवर्त्यम्।ह्यइति

विद्यते बुद्धिः , ते कथङ्कारं शास्त्रे प्रवर्तेरन् ? अपि तु न तादृशं तत्रप्रवृत्तिर्घटत इति। ततश्च दुः खनिवृत्तेरसाध्यताज्ञानमेव शास्त्रविषयस्याजिज्ञास्यत्वे **तृतीयो हेतुरित्यत्र**प्रतिपादितम्।

शास्त्रविषयस्याजिज्ञास्यत्वे चतुर्थतविकल्प यथा –**शकयसमुच्छेदत्वेऽपीति।** अर्थात् दुःखस्य दूरीकर्तुं शक्यत्वेऽपि प्रकृतशास्त्रविषयज्ञानस्य अनुपायत्वात् दुःखनिवृत्तेरसाधनत्वात् यदि विवेकज्ञानसाधनं न स्यात् तथापि शास्त्रविषयो न जिज्ञास्यतेति सम्बन्धः इति **चतुर्थविकल्पं**प्रतिपादितम्।

शास्त्रविषयस्याजिज्ञास्यत्वे पञ्चमं विकल्पं उपस्थापयति –**सुकरस्येति** । अर्थात् विवेकज्ञानापेक्षया साधनान्तरस्य सद्भावात् नहि शास्त्रे प्रवृतिर्भवति इत्यर्थः । ततश्च सुखसाध्यः साधनान्तरसद्भाव एव शास्त्रविषयस्याजिज्ञास्यत्वे **पञ्चमो हेतुरित्यत्र**प्रतिपादितम्।

दुःखाभावादेस्तात्विकत्वे सत्येव शास्त्रविषयस्य अजिज्ञास्यता संभवेत्, वस्तुतस्तदेवनेतिमनसि निधाय सम्प्रतिप्रागुक्तान् पञ्चविकल्पान् क्रमशः खण्डयितुंमादौ दुषयति –**तत्रेति,**तत्र पञ्चसु विकल्पेषु मध्ये अजिहासितमिति इत्यत्रत्य , इति शब्दः उभयत्रान्नेति। तथा च दुःखं नास्ति, इति न , किन्त्वस्त्येव, दुःखम् अजिहासितम्, इत्यपि न, किन्तु जिहासितमेवास्तीत्यर्थः। तदेवकारिकांशः आधारिकृत्य दर्शयति –

**दुःखत्रयाभिघातजिज्ञासा तदभिघातकेहेतौ।**
**दृष्टेसापार्था चेन्नैकान्तात्यन्ततोऽभाबात्।।**(सां.का-१)

दुःखत्रयाभिघातात् इति पदेन दुःखमेव नास्ति सत्वेऽपिवानजिहासितम् इति। शास्त्रविषयस्याजिज्ञास्यत्वप्रयोजकं विकल्पद्वयं निराकृतं भवतीति। "दुःखत्रयाभिघातात्ह्रइति पदं हि दुःखत्रिकेण सह पुरुषस्य असह्यसम्बन्धमाख्याति। ततश्च दुःखसत्ता, असह्यसम्बन्धत्वेन तत्परिहर्तव्या चेति द्वयोः स्फुटमवगतेः शास्त्रविषयो जिज्ञास्य त्तिकामुकेनमुमुक्षुणेतितत्वम्। तत्र किं तद् दुःखत्रयम्? अत्र उच्यते शरीरं मनश्च अधिकृत्य जायमानम् आध्यात्मिकम्, भूतानि व्याघ्रसर्पादीनि अधिकृत्यजातम् आधिभौतिककम्, देवान् अग्निवाधादीन् अधिकृत्य प्रवृत्तम् आधिदैविकम्। परमार्थतस्तुदुः खंद्विविधमेव, शारीरमानसं च देवसम्पादितस्य भूतकृतस्य वा दुःखस्य वस्तुतः मनः शरीरयोरेव जायमानत्वात्, नहिशरीरं मनश्च विहाय तत्कृतेऽन्येत् स्थानमस्तियेन आधिदैविकस्याधिभौतिकस्य पार्थक्येन कल्पनं स्यात्।

तस्मात् त्रिधा वा चतुर्धा वातप्रपञ्चनं केवलं लोकज्ञानाय, एवं च सर्वमेव शरीरं दुःखम्, आधिभौतिकमितिवाह्यमिति चोच्यते,मानस्तिकं च सर्वं दुःखम् आध्यात्मिकनिति आन्तरमिति चोच्यते इति ।

प्रयोजकखण्डनावसरे यदुक्तं नतावद्दुःखं नास्ति इति तात्स्थिरीकरोति तदेतादिति। बुद्धितत्ववर्तिरजोगुणकार्यविशेषात्मकं प्रत्यात्मवेदनीयम्, सकलपुरुषानुभवसिद्धमिति, एतेनदुःखसत्वेऽनुभव एव मानमितिसूचितम्। तदेतत् दुःखं नास्ति इत्येवं निराकर्तुं न शक्यते। अनुभवसिद्धस्य प्रत्याख्यानासंभवात्,दुःखं चास्ति निखिलजनानुभववेदनीयम्। अहं दुःखी इति प्रतीतेर्विश्वजनीनत्वादिति, कथङ्कारं तदपलापः शक्यः कर्तुमित्यकामेनापि दुःखसत्तानुनमभ्युपेया । ततश्चदुःखं नामजगतिनास्तिइति यदुक्त तत् केवलं साहसमात्रमेव। सम्यकचानेन **प्रथमविकल्पोनिराकृत** भवतीति सर्वथा जिज्ञास्य एवशास्त्रविषयो मुमुक्षुणेतिप्रतिपादितम्। सम्प्रति१**सद्वानजिहासितम्**"इति द्वितीयविकल्पनिराकणाय **अभिघातपदं** विवृणोति- तदनेनेति।

इह हि निरर्गले मायिके सर्गे किं लौकिकाः किं परीक्षकाः सर्वेऽपि प्राणिनोदुःखमेव प्रतिकूलतया जानाना स्तत्परिहाराय, सुखमेवानुकूलमिति तत्प्राप्तयै च निरन्तरं प्रयतमानाः समुपलभ्यन्ते। नहि कोऽपितादृक्प्राणी दृष्टिपथमवतरति,यो दुःखान्नोद्विजतेसुखं च नाभिवाञ्छति। **दुःखादुद्विजतेसर्वः सर्वस्यसुखमीप्सितम्इति।भगवद् व्यासदेववचनात्** ( म. भा.शा.प. १३९. ६१)

तत्रापिसर्वेषां सांसारिकसुखानां दुःखसंभिन्नतया परिणामेदुःखदायकतया च समीक्षाकारिणोदुःखसंभिन्नंसुखं विहाय दुःखपरिहारायैव प्रयाशः प्रवर्तन्ते। तत्सिद्धमेतत् - ये हि प्राकृताजनास्ते सामान्यरूपेण दुःखनिवृत्तिं वैषयिकसुखं च कामयन्ते, ये पुनर्विवेकिनोविचारशीलाः प्रेक्षावन्तस्तेतात्कालिकदुःखनिवृत्तिं परिणामदुःखमिश्रितविषयसुखपरमपुरुषार्थतया अमन्यमाना आत्यान्तिकदुःखनिवृत्तिं दुःखासम्भिन्नसुखप्राप्तिं चैवपरमपुरुषार्थतया मन्यन्ते इति। तथा च योगसूत्रकारः–

**परिणामतापसंस्कारदुखैगुणवृत्तिविरोधातच्चदुखमेवसर्वंविवेकिनः।।** (यो.सू.२/१५)

यत्किंचिऽस्माकमिष्टं तत्सुखं यच्च नेष्टंतद्दुःखम्।

**यदिष्टं तत्सुखंप्राहुः, द्वेष्यं दुःखमिहेष्यते।।**(म.भा.शा.२९५-२७)

भगवद् व्यासदेववचनात् । तथा सति इष्टपदार्थस्यापि सुखत्वापतेः। ततश्च पिपासायां लग्नायाम् पानीयमिष्टं भवतीति तदपि सुखमुच्यते, परं न केनापि कदापि पानीयं सुखमुच्यते, नहि नदीजलेनिमजन सुखेमग्नः इति केनचिदुच्यते। तस्मात् अनुकूलवेदनीयं सुखम्। प्रतीकूलवेदनीयम् बाधनालक्षणंदुःखम्इतितर्किकाः। तत्वतः कर्मैवास्य संसारस्यत्पतौ कारणम्। यदि जीवानां कर्मणि न स्युः तदाकदापि ते जरामरणचक्रेन गच्छेयुः। न च कदापि सुखमनुभवेयुः। तद्यथा-

**तत्रजरामरणकृतंदुःखंप्राप्नोति चेतनःपुरूषः।**

**लिङ्गस्याऽऽविनिवृत्तेस्माद्दुःखंस्वभावेन।।(सां.का-५५)**

इति कारिकावचनात् ज्ञायते यत्, सुकर्मणः फलंसुखं दुष्कर्मणास्तुदुःखमेव। यद्बुप्यते तदेव कर्त्यते। निम्बवृक्षं संवर्ध्याऽऽम्राणामाशा सिकतासु तैलभ्रमः, अन्यस्यकृते गर्तखनित्वा स्वयमपि कदाचित् तस्मिन्नेव पतन्तिमानवाः। इत्थं यच्चिन्त्यते यच्च क्रियते तस्य फलमवश्यमेव भोग्यं भवति।

**अवश्यमेवभोक्तव्यं कृतंकर्मशुभाशुभम्।**

**यत्कर्मणा करोतितदभिसंपद्यते।।**

अतः संसारदुःखदहनाय विवेकेभिर्ज्ञानमेवाभ्यस्यम्,तद्यथा उच्यते गीतासुभगवान्-

**यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरूतेऽर्जुन।**

**ज्ञानाग्निःसर्वकर्माणिभस्मसात्कुरूतेतथा।। गीताा-३७।**

**नहिज्ञानेनसदृशंपवित्रमिहविद्यते।**

**तस्त्वयं योगसंसिद्धः कालेनात्मनिविन्दति। गीता-३८।।**

इत्थं सर्व एव प्राणिसंघः स्वानुकूलवेदनीयेन संम्वन्धमभिलष्यन्ति, न प्रतिकूलवेदनीयेन, अथ जातुजाते प्रतिकूलवेदनीयेन सम्बन्धे कोवातं निवारयितुं न प्रयतते ? अपि तु सर्वेऽपिप्राणिनिवहः प्रतिकूलसम्बन्धपरिहाराय चेष्टमानः परिदृश्यन्ते, पुरुषेणापिहि विद्यते प्रतिकूलतया दुःखस्य संबन्ध इति। **अभिघातात्** इति हेतुपञ्चम्यां आख्यायत कथङ्कारं स तन्निवृत्यैनयतेत् ? अपि तु नुनं तेनास्तिदुःखं सर्वथा परिहर्तव्यमेवेति यदुक्तं सद्वानजिहासितम् इति, तत् सर्वथा निराकृतं भवति। दुःखस्य प्रतिकूलवेदनीयत्वेन सर्वथा सर्वदा जिहासाविषयत्वादिति।

ननु भवतु दुःखस्य त्यागेच्छा, परं सत्कार्यवादिनां सांख्यानां मतेनासतउत्पादोनवासतोनिरोधः इत्यङ्गीकारात् सतो दुःखस्य विनाशासंभवात् व्यर्थैव सांख्यशास्त्रविषयणी जिज्ञासेत्याशङ्क्य, जिहासितं वा अशक्यसमुच्छेदम् इति तृतीयविकल्पनिराकरणाय दुःखनिवृत्ति मुपपादयति- **यद्यपीति।** यद्यपि दुःखं न समूलमूच्छेतुं शक्यते, तस्य नित्यत्वादिति, तथापि तदभिभवः प्रतिरोधः, शान्तावस्थापादेन तदनाविर्भावः कर्तुं शक्यः। अन्ये तु यतो दुःखं सत् अतो नाभावो विद्यते सतः , इत्युक्तेर्ननिरोद्धंशक्यमिति । अनागतस्य दुःखस्य विवेकख्यात्या निरोधशक्या इत्यर्थः। केन प्रकारेण तदभिभवः ? इत्याकाङ्क्षायामाह- एवं तत्वाभ्यासात्—इति चतुः षष्टिकारिकायामित्वर्थं तत्र हि पुरुषान्तकरणयोर्विवेकख्यात्या अन्तःकरणवर्तिनो दुःखस्य अनात्मीयत्वेन चिच्छशक्तेरविषयत्वं प्रतिपादितमस्ति। तद्यथासांख्यकारिकायाम्-

**"एवं तत्वाभ्यासान्नास्मि, न मे,नाऽहमित्यपरिशेषम्।**
**अविपर्ययाद्विशुद्धं केवलमुत्पद्यते ज्ञानम्।। ६४।। इति।**
**तेननिवृत्तप्रसवामर्थवशात्सप्तरूपविनिवृत्ताम्।**
**प्रकृतिं पश्यति पुरूषःप्रेक्षकवदवस्थितःस्वस्थः।।६५**
**इत्येष प्रकृतिकृतौमहदादिविशेषभूतपर्यन्तः।**

**प्रतिपुरूषविमोक्षार्थंस्वार्थइवपरार्थआरम्भः।।५६ठ**

तथा च भागवते- **अहंममाभिमानोत्थैःकामलोभदिर्मलैः।**

**वीत्तं यदा मनःशुद्धमदूःखमसूखंसमम्।।** श्रीमद्भागवतम् ३/२५/१६

अत्रापि विवेकख्यात्या एव दुःखस्य अभिभवः प्रतिपादितमस्ति। अतः तदपघातके दुःखत्रयाभिभावके हेतौपुरुषाणां जिज्ञासा जायत इति यत्कारिकायामुक्तं तत् समीचीनम् इत्यर्थम्।

ननु भवतु यस्मिन् कस्मैश्चिद् दुःखत्रयोच्छेदके हेतौ मानवानां जिज्ञासा तथापि कथं प्रकृत्यशास्त्रविषयजिज्ञासेत्याशङ्क्य शास्त्रविषयज्ञानस्यानुपायत्वाद्वा इति चतुर्थं विकल्पं निराकुर्वन् समाधते- अवघातकश्चेति चशब्दोऽवधारणार्थकः- प्रकृतशास्त्रप्रतिपाद्यस्तत्वविवेक एवदुःखोच्छेदकोहेतुरिति युक्ता तत्र जिज्ञासेत्यर्थः।।

सम्प्रति सुकरस्योपायान्तरस्य सद्भावाद्वा इति पञ्चमं विकल्पं निराकुर्वन् शास्त्रप्रतिपाद्य एव नान्य इति शास्त्रप्रतिपाद्यतत्वविवेकं विहाय इतरोदुःखोच्छेदको हेतुर्नास्तीत्यर्थः।

**विवेकान्निःशेषदुःखनिवृत्तौकृतकृत्यतानेतरान्नेतरात्** (सांख्यसूत्रम्-३/८४)

**ज्ञानान्मुक्तिः।।** (सांख्यसूत्रम्-३/२३)

**नियतकारणातदुच्छित्तिर्ध्वान्तवत्।।** (सांख्यसूत्रम्-१/५६)

**अत्यन्तदुःखनिवृत्याकृतकृत्यता ।।**(सांख्यसूत्रम्-५/५)

**यं लब्ध्वा चापरं मन्यतेनाधिकं ततः।**

**यस्मिन् स्थितोनदुःखेनगुरुणापि विचाल्यते।। (भ.गी.६/२२)**इतिभगवद्वचनादिति।

वैदिकोयागादिक्रियाकलापरुपोपायः औषधादिलौकिकोपायतुल्यः ततोऽपि आत्यन्तिकदुःखनिवृत्तेरसंभवादितिभावः, यस्माद् वैदिक उपायः अविशुध्यादियुक्तः। हिंसादिसंवन्धात् तथा क्षययुक्तफलजनकत्वात् क्षययुक्तः।तथा आतिशयवत्फलजनकत्वाद अतिशययुक्तश्च तस्मात् तद्विपरीतः वैदिकक्रियागतदोषरहितः सत्वपुरुषान्यताप्रत्ययेरूप उपायो विवेकः , श्रेष्ठः, ऐकान्तात्यन्तिकदुःखोच्छेदक्षमत्वात्। तद् भवति व्यक्ताव्यक्तज्ञविज्ञानात् इति। तत्र व्यक्तं नामे महदादिबुद्धिारहङ्कारः पञ्चतन्मात्राणि एकादशेन्द्रियाणि, पञ्चमहाभूतानि, अव्यक्तं प्रधानं, ज्ञःपुरुषः एवम् एतानि पञ्चविंशतितत्वानि व्यक्ताव्यक्तज्ञाः कथ्यन्ते, एतद्विज्ञानाच्छ्रेयः।। इति। **( गौडपादाः)**

अत्रेदं वक्तुं शक्यते यत् —आत्मानात्मविवेकसाक्षात्कारात् कर्तृत्वाद्यालाभिमाननिवृत्यातत्कार्यरागद्वेषधर्माधर्माद्यनुत्पादात पूर्वोप्तन्नकर्मणां चाविद्यारागादिसहकार्युच्छेदरूपदाहेन विपाकानारम्भकत्वात् प्रारब्धसमापत्यनन्तरं पुनर्जन्माभावेन त्रिविधदुःखात्यन्तनिवृत्तिरूपोमोक्षोभवतीतितादृशसाक्षात्कारहेतौ मननाख्यविचाररूपे शास्त्रे जिज्ञासा भवत्येवेति सांख्यशास्त्रजिज्ञासा समीचीना इति प्रतिपादिता । यथा-

**दृष्टवदानुश्रविकःस ह्यविशुद्धिक्षयातिशययुक्तः।**

**तद्विपरीतः श्रेयान् व्यक्ताव्यक्तज्ञवज्ञिानात्।। "सां.का-२।।** इतिदिक्।

**सहायकग्रन्थसूची-**


१.सांख्यकारिका २.गौडपादभाष्यम्

३.सांख्यसूत्रम् ४.श्रीमद्भागवतम्

५.श्रीमद्भगवद्गीता ६.महाभारतम्

७.योगसूत्रम् ८.सांख्यतत्त्वकौमुदा



संविदाध्यापिका,

केन्द्रीयसंस्कृतविश्वविद्यालयः,

सदाशिवपरिसरः, पुरी, ओडिशा ।




# कतिचिदध्यात्मतत्त्वानां विवेचनम्

डॉ. अजयकुमारपाण्डे

इह संसारे प्राणिनां महाकल्याणाय जगदीश्वरः स्वयमेव महापुरुषैरनेकतत्त्वानि आविष्करोति । तत्तत्त्वेषु अध्यात्मतत्त्वानां नितरामपेक्षा मानवानां जीवने विद्यते । अत एवात्र महात्मनाममृतवचांसि स्वीकृत्य केषाञ्चन तत्त्वानां विवेचनं मेधाशोधनाय स्वाल्पमेधसा किञ्चिद्विधीयते ।

**निर्विकल्पसमाधेः महिमा-** यदा निर्विकल्पसमाधिं मुमुक्षुः सम्प्राप्नोति, तदा सः गुणातीतस्थितिं सहजतयानुभवति, भगवतः ऐकान्तिको भक्तोऽपि भवति, किन्तु येषां निर्विकल्पः समाधिः नास्ति, तेषामिदृशी गतिः कुतः ? न मन्यतामेवं प्राणनिरोधेन निर्विकल्पसमधिः सम्भवति । वस्तुतः निर्विकल्पसमाधेः नियमोऽन्योऽस्ति । श्रीमद्भागवते प्रोक्तम् ।

**अत्र सर्गो विसर्गश्च स्थानं पोषणमूतयः ।**
**मन्वन्तरेशानुकथा निरोधो मुक्तिराश्रयः ।।**[१]

अस्यायमभिप्रायोऽस्ति - विश्वस्य सर्गविसर्गादिनवलक्षणैः यो सदा ज्ञातव्यः, तस्मिन् परमाश्रयरूपभगवति यो योगी स्वमतिं संस्थापयति, स एव तं प्राप्तुं समर्थो भवति ।[२] यो मनसा सह सदा संयुद्ध्य तज्जयति, तदा तस्य योगे स्थितिः सम्भवति । यदि मनसः पराजयतामङ्गीकरोति, तर्हि सः योगभ्रष्टः सञ्जायते । पुनः सः एकस्मिन्, द्वयोः, अनेकेऽस्मिन् जन्मनि वा भगवद्भक्तः भवितुमर्हति । वास्तवतः योगिनां किञ्चिदपि प्रयत्नं विफलं न याति । अतः बुद्धिमन्तः सर्वदा मनसा सह वैरभावं संस्थाप्य निजकल्याणाय प्रयतेरन् । तस्मात् कल्याणेच्छुकयोगी मनसा सह मित्रतां न संस्थाप्य वैरभावं संस्थापयेत् ।[३]

**योगे अत्मनिष्ठा -** यदि साधकः स्वदेहेन क्रियां करोति, स्वक्रियायाः स्वात्मानं भिन्नं मत्वा साधयति, तर्हि तस्य प्रचुराध्यात्मिकलाभः सम्भवति परन्तु साधकस्य क्रियारूपो भूत्वा क्रियालीनभवनं नोचितम्, तेन साधकस्य प्रभूतहानिः अवश्यं सम्भवति ।

साधकः स्वव्यवहारः देहं यावत् कुर्यात् किन्तु यदि व्यवहारः मनः आकर्षति, तर्हि स्वज्ञानबलेन व्यवहारादासक्तिपरिवर्जनाय प्रयतेत ।[४]

**योगसाधने चेष्टायाः प्राधान्यता -** मनुष्याणां स्वचेष्टा सर्वदा करणीया । भगवतः कृपा सर्वेभ्योऽस्ति। स्वचेष्टयैव तस्याः समुपलब्धिः करणीया । विना चेष्टां सः न अनुभव्यः कदाचन । संसारे ये ये भक्तप्रवराः सिद्धयोगिवराः सन्ति, ते सर्वे स्वचेष्टया एव । स्वामिनः भावोऽपं मनुसंहितायामपि अस्ति -

**फलं कृतकवृक्षस्य यद्यपि अम्बुप्रसादकम् ।**
**न नामग्रहणादेव तस्य वारि प्रसीदति ।।**[५]

सहस्रप्रार्थनया न भवति किञ्चन, स्वचेष्टया हि प्रार्थनाफलं स्वकार्येषु विनियोजयेत्।[६] पुनः ईश्वराह्वानाय, तस्य च प्रार्थनाय सर्वेषामधिकारः समानः। स्वचेष्टया कर्मकरणेनैव हि महान् लाभः सम्भवेत् । योगेनैव चित्रमलं दूरीभवति, परमेतदपि चेष्टया संसाधनीयम् । पूर्वजन्मकर्मणा एतज्जन्मकर्म नियन्त्रितं भवति, अत्रापि कर्मणः वा प्राधान्यता । अतः लोके प्रथितमस्ति, यो यथा करोति, स तथैव प्राप्नोति । अतः कथ्यते - **कर्मभ्यो नमः** ।[७] एवमेव प्रकथ्य स्वामी समादिशति - योगः भक्तिः वा भवतु सर्वत्र स्वचेष्टापेक्षिता ।

**योगः योगी च -** प्रकृतगुरुः गृहस्थेभ्यः सहसा योगविद्यां न प्रददाति, यतो हि ते योगपयं सम्यक्तया धारयितुं समर्थाः न भवन्ति । योगेन चित्तं निर्मलं भवति । अस्माकं मनसि यदा मलानि आवृत्तानि सन्ति तदा न किञ्चन सम्भवेत् । योगः इमानि मलानि दूरीकरोति । योगसिद्धये वाक्संयमः सदा करणीयः । अनयोः कृते लोकवासना, शास्त्रवासना च परित्यक्तव्या ।

एतदपि मुक्तिकोपनिषदि प्रकथ्यते - **लोकवासनया जन्तो शास्त्रवासनयाऽपि च ।**
**देहवासनया ज्ञानं यथावन्नैव जायते ।।**

सम्भवः अस्माद्धि कारणात् योगिनां प्रचारः प्रसारश्च द्रुतं न भवति । प्रचारः तेषामनभीप्सितः आसीत् । योगिनः समस्तकृत्यमद्भुतं विलक्षणञ्च भवति ।[८]

**सद्गुरुः-** वत्स महाशक्तिमतिरिच्य नेहास्ति किञ्चन । यो महाशक्तेः शक्तिं अवगमयति, बोधयति, प्रकाशयति दर्शयति वा स एव सद्गुरुः । मनुष्यः न भवेत् भगवान् कदाचन । भवन्तः सर्वे बालकाः, अतः तत्त्वं सम्यक् नावगम्य उद्धताः भवन्ति । यद्गुरूः शिष्येभ्यः प्रददाति, तस्माद्धि ज्ञानबीजं समुत्पद्यते, ततश्च शिष्यः पूर्णज्ञानेऽधिकारी भवेत् । ज्ञानस्य सूक्ष्मसीमायाः अतिक्रमणानन्तरं द्वैतभावो नोत्पद्यते । एकमविनाशि चैतन्यं हि नित्यमस्ति । महाशक्तिरेव स्वयं जीवभावेन संराजते । यथा मधुमिष्ठतयोः भिन्नता नास्ति, तथैव आवयोरपि कोऽपि भेदः न विद्यते । योगेन एतत्सर्वं विज्ञायते, अशन्तिः कदापि नोत्पद्यते।[९]

**भगवतः श्रेष्ठता-** जीवः स्वसाधनबलेन यावच्छ्रेयः आप्नोतु, नूतनजगत्सृष्टिमपि संरचयतु, तथापि ईश्वरादुन्नतः कदापि न भवेत् अपि च सर्वदेश्वराद् न्युनः एव तिष्ठति । कथनस्यायमभिप्रायः जीवः ईश्वरः भगवान् वा भवितुमर्हति न कदाचन ।[१०] पुनः इतरदृष्ट्या जीवजगती ईश्वरेभ्यः भिन्ने स्तः । जीवः स्वजीवत्वधर्मात् कारणब्रह्मभ्यः (ईश्वरेभ्यः) पृथगेव । तत्त्वमिदमपि जडस्य समानमस्ति । जीवस्य जीवत्वं नित्यं, सः मोक्षे प्रलये च ब्रह्मणि लीनत्वमवाप्नोति, परं जीवत्वं न विनश्यति । सोऽव्यक्तरूपेण बीजरूपेण तिष्ठति । पुनरपि परमेश्वरस्येहया पुनः जीवः सृष्टिं प्राविशेत् । अतः जीवस्येश्वरत्वं न कदाचित्सम्भवति । कार्यतः (For all practical purposes) ईश्वरमधिगत्यापि स्वभावतः ईश्वरभवनाय असमर्थ एव । अभेदेऽपि भेदोऽवशिष्यते, भेदमिममवलम्ब्य हि जगदीश्वरः स्वलीलां संरचयति । परमस्यार्थोऽयं नास्ति यत् जीवः ईश्वरः एव । अतः जीवः न भगवान् । केवलं भगवान् हि भगवानस्ति, नान्यः कश्चन ।[११]

**गुरूपदिष्टयोगस्य श्रेष्ठता-** यदि योगविभूतयः वास्तविकाः, तर्हि कदापि न ते निकृष्टाः, तुच्छाः वा । इमे परमेश्वरेण सह एकत्वं संस्थापयन्ति । अपक्वैश्वर्यप्रतिष्ठया उत धनादिलोभानां सन्दर्शनेन एतेषां विभूतीनां अवक्षयः सम्भवति । केवलं योगोपयोगिज्ञानं संशोधयेत् । बहुजिज्ञासया एव योगविघ्नाः उत्सृजन्ति । ज्ञातव्यमिदं, ज्ञातव्यमिदमिति तृष्णया विचरन् सहस्रकल्पेषु अपि कोऽपि ज्ञानं नाधिगच्छेत् । अर्थात् तत्त्वावाप्तये, योगसिद्धये वा अयथार्थरूपेण कालाक्षेपं न प्रकृत्य गुरूपदिष्टयोगस्यैवाभ्यासः प्रकर्त्तव्यः।

**सारभूतमुपासीत ज्ञानं यत् कार्यसाधनम् ।**
**ज्ञानानां बहुलं येयं योगविघ्नकरी हि सा ।।**
**इदं ज्ञेयम् इदं ज्ञेयम् इति च स्तृषितश्चरेत् ।**
**अपि कल्पसहस्रेषु नैव ज्ञानमवाप्नुयात् ।।**[१२]

**योगविभूतयः इच्छाशक्तिश्च -** योऽस्ति योगस्य प्रारम्भिकसाधकः, प्रवेशको वा, तेषां कृते योगविभूतीनां प्रदर्शनमनुचितं हानिकारकञ्च । यतो हि अनया अंहकारः आसक्तिर्वा समेधते केवलम् । योगविभूतयः तथैव गोप्येन संस्थापनीयाः यथा पार्श्वस्थानां कृते पूर्णाविज्ञेयाः भवेयुः । परमयं नियमः सिद्धेभ्यः नास्ति । यतो हि तेषां अहङ्कारलेशोऽपि न विद्यते, न वोत्पद्यते । स्वदृष्ट्या तेषामेताभिः सिद्धिभिः नास्ति किमपि प्रयोजनम् । परं कदाचित् क्वचित् वा योगमार्गे प्रथमप्रविष्टजिज्ञासुभ्यः सिद्धयस्ताः अपेक्षन्ते, तासाञ्च प्रदर्शनमप्यपेक्षन्ते ।

न प्रदर्श्य तान् योगमार्गे प्रवेशयितुमसुविधाः समायान्ति । विना प्रदर्शनं कस्याश्चन योगक्रियायाश्चावगमनमपि असम्भवम् । अतः अपेक्षन्ते । योगमार्गे प्रथमप्रवेशार्थिनां योगविश्वासस्य दृढीकरणार्थे कदाचिच्च सिद्धिप्रदर्शनमावश्यकम् । साधारणजनानां यदस्ति असम्भवम्, तन्नास्ति किन्तु योगिभ्यः । यतो हि शक्त्यधीनं जगत्सर्वं, ताश्च शक्तयः योग्यधीनाः सन्ति । अतः शक्तीनां स्वायत्तीकरणेन सर्वं हि सम्भवति ।[१३]

इच्छाज्ञानक्रियाशक्तयश्चैता: तिस्र: योगसिद्धिषु प्रामुख्यं भजन्ते । एतासु पुन: इच्छाशक्तिरेव सर्वोत्कृष्टास्ति । तत: ज्ञानशक्तिसम्प्राप्तेन योगी अशेषविशेषविज्ञानं लभते, अर्थात् सर्वगतमागतं भवेत् । अन्ते च क्रियाशक्त्या योगी सर्वकर्तुत्वशक्तिमधिगच्छति । योगदर्शने इयं विशोकासिद्धिरिति संकथ्यते । किन्तु इच्छाशक्ति: सर्वोत्कृष्टा । इच्छाशक्तिसमधिगतेन ज्ञानशक्तिक्रियाशक्त्योरपि समस्तकार्यं सम्भवति, सर्वज्ञानञ्च समुदेति । पुन: अनयेच्छाशक्त्या प्राकृतिकोपादानं स्वीकृत्यैव ज्ञानशक्ति:, क्रियाशक्तिश्च समस्तकार्यं सम्पादयितुं समर्था भवेत् । सूर्यविज्ञानचन्द्रविज्ञाननक्षत्रविज्ञानसमयविज्ञानादीनि अनन्तविज्ञानानि सन्ति, परमेषु इच्छाशक्ति: विज्ञानं नास्ति । इच्छेच्छाशक्त्यो: भेदोऽवश्यमस्ति । यदा पूर्णज्ञानं भवति, तदेच्छेयम् इच्छाशक्तिरूपेण परिणमते । वस्तूत: शक्ते: अर्थ: चैतन्यमस्ति । यावदात्मचेतनं न भवति, तावदिच्छा केवलमिच्छा हि भवति, नेच्छाशक्ति: । ज्ञानप्राप्तिरित्यस्याभिप्रायोऽस्ति आत्मसाक्षात्कार:, ब्रह्मसाक्षात्कारो वा । एतस्मादनन्तरमिच्छा अवश्यं तिष्ठति, यतो हि विनेच्छां परमेश्वरस्य परमेश्वरता कुत: वा सम्भवति ? माण्डुक्योपनिषद: गौडपादकारिकायामपि निगद्यते - इच्छामात्रं प्रभो: सृष्टि । इच्छाशक्तिरियं सृष्टिराज्यस्यादिमा, किन्तु चरमा न वर्तते । सर्वान्ते प्रकृतयोगी अन्तर्मुखी भूत्वा स्वस्येच्छाशक्तिमीश्वराय समर्पयति । इच्छाशक्त्या: समर्पणेन आह्लादिनीशक्ति: परमानन्दरूपशक्ति: वा स्वत: आविर्भवति । यावन्नेच्छानिवृत्ति:, तावन्नानन्द: कदाचन । इच्छानिवृत्या: परमेव योगी महाशक्त्या: पूर्णानन्दमयाङ्के प्रविशति । तदा स: अनुकूलप्रतिकूलयो: समानरूपेण तिष्ठति । अस्यामेव अवस्थायां योगी चैतन्यसाम्राज्यं प्रविशति । अवस्थैषा हि पूर्णावस्था । विभूतयश्च तुच्छा:, किन्तु तासां प्रविकाशोऽवश्यं भवेत् । विकासानान्तरं पुन: तासां निवृत्तिरपि भवेत् ।[१४]

**योग: –** सूक्ष्मदेह: मनस: आधारोऽस्ति । मनोकार्याणां सम्प्रकाश: स्थूलदेहे सम्भवति । मन: न चञ्चलमपि च चित्तं चञ्चलं भवति । जलस्योपरि जलरूहाणां यथाभास: तथैव मनस: उपरि चित्तभास: सम्भवति। चित्तचञ्चलेनैव मनोचञ्चलता सञ्जायते । चित्तास्थिरापाकरणमेव विधेयम् । कार्यस्यास्योपाय: एव योगोऽस्ति ।[१५]

**प्रपञ्चस्यासत्यता -** मधुमैथुनभोग: मानवसहज: भवति, तत्प्रशंसनाय न कापि मृदुग्रहणशक्ति: आवश्यकी । इन्द्रियप्रलोभा: पाटलपुष्पसुगन्धभरितेन सदा हरितेन च करवीरेण उपमिता: । जवाकुसुमतुल्यस्य एतस्य वृक्षस्य प्रत्यङ्गं विषपूरितम् अस्ति । वाह्यप्रपञ्चे सहस्त्रदिक्षु अस्माभि: अन्विष्यमाणारोग्यदायकसुखमस्माकमन्त: एव प्रकाशते ।

मनुष्य: जाग्रदवस्थायाम् इन्द्रियसुखभोगाय असंख्याकप्रयत्नानि प्रकरोति, यदा इन्द्रियाणि परिश्रान्तानि भवन्ति, तदा स: हस्तगतसुखानि अपि विस्मृत्य स्वभावे स्वात्मनि विश्रान्तिम् अनुभवितुं स्वपितीति विख्यात: वेदान्ती आचार्यशङ्कर: लिखितवान् । य: अतीन्द्रियानन्द: जुगुप्सादायकविषयसुखापेक्षया समुत्कृष्ट: भवति, स: प्रकृतेन आनन्दसंज्ञां प्राप्नोति ।[१६]

**क्रियायोग: -** क्रियाशब्दस्य मूलधातु: **कृ** अर्थात् करणं प्रतिस्पन्दनञ्च इत्यर्थ: । स: एव धातु: कर्म इति शब्देऽपि दृष्ट: अर्थात् कार्यकारणयो: प्राकृतिकनियम:। अत: क्रियायोग: कयाचित् कयाचित् चर्यया अथवा केनचित् प्राक्रियाद्वारेण परमात्मना सह संयोग: भवति । एतत्प्रक्रियां श्रद्धया य: अभ्यस्यति स: कर्मण: अर्थात् कार्यकारणधार्मिकशृङ्खालात् क्रमश: मुक्तो भवति ।

**साधना, शक्ति च-** ईश्वर: जीवनस्वास्थ्यबलशक्तीनामुद्गम: वर्तते । ईश्वरध्यानं हि समस्तव्याधीनां परमं भेषजमस्ति । स्वमांसशक्तिवर्धनमेव जीवनलक्ष्यं नास्ति, अपि च रोगरहितत्वेन स्वसाधनायाम् अग्रेसरणमेव भवल्लक्ष्यं भवेत् । यस्तु योगी शुद्धज्ञानेन शान्त, निरहङ्कार:, ममतारहित:, आत्मसंयमी च स एव समस्तपापान्मुच्यते ।

शक्ति: शिवस्य मार्ग: । मानव: मातृशक्त्या हि धर्मार्थकाममोक्षेषु परमपुरूषार्थं (मोक्षं) प्रोप्नोति । तस्या: कृपां प्रति स्वदृष्टिं संस्थापयेत् । इह परलोकेषु च सर्वत्र हि भवत्कल्याणं नुनं योगे विद्यते ।[१७]

**योगे मानसिकशुद्धता -** उपनिषत्सु आत्मा पर इति कथ्यते । अन्यत्र भवान् पश्यति शुद्धमनसा शुद्धमेधसा वात्मा प्राप्यते । मन: द्विविधम् । शुद्धं मन:, अशुद्धञ्च मन: अस्माकन्तु साधारणतया अशुद्धमेव । तप - योग- प्राणायाम -

साधनचतुष्टयैः श्रवणमनननिदिध्यासनानामभ्यासः प्रकर्तव्यः । आत्मा विशुद्धमानसात् परविषयः वर्तते, किन्त्वयं प्राप्तयोग्य एव । यस्तु तपस्यामाचरति, वैराग्यषट्सम्पत्तिभिः सम्पन्नः, ध्यानधारणादिसम्पादकः स विवेकी एव इममात्मानं प्राप्तुं शक्ष्यति । अतः विषयेऽस्मिन् उपनिषत्सु नास्ति कश्चित् विरोधाभासः ।[१८]

**योगसाधनाया: आवश्यकता-** भवान् अनावश्यकरूपेण चिरं किमर्थं बन्धनं धारयति ? भवान् इदानीमेव स्वजन्माधिकारं किमर्थं न प्राप्नोति ? कालेऽस्मिन्नेव स्वबन्धनं किमर्थं न छिनत्ति ? विलम्बस्यार्थः स्वदुःखानां (कष्टानां) दीर्घीकरणमेव । यदा कदापि स्वबन्धनं छेत्तुं शक्नोति ।(एतस्वाशे हि विद्यते । इदानीमेव जागर्तु । उग्रतापूर्वकं, प्रसन्नतापूर्वकञ्च स्वसाधनायां निरतो भवतु । इत्थम्भूतेनामरसुखमाप्नोतु ।

अनुशासन-तपः-आत्मसंयम-ध्यानैः स्वनिम्नप्रकृतिम् उच्चप्रकृतिरूपेण परिवर्तयतु । इदमेव भवन्मुक्तेः समारम्भकालः । भवदन्तःस्थं विद्यमानतत्त्वं भवतः चतुर्दिक्षु समस्तवस्तुष्वपि शक्तिमत् विद्यते । तस्मात् कस्मादपि न विभेतु । स्वात्मनः उपरि स्वान्तरिकदिव्यस्वरूपोपरि निर्भरं करोतु । अन्तर्निरीक्षणेन मूलशक्तिं गृह्यताम् ।[१९]

**योगाभ्यास: -** यस्य कृते यः योगः सहजः, प्रीतिकरश्च, तस्यैवाभ्यासः प्रकर्तव्यः । एकस्मिन् योगे यदि कश्चिदसफलः, तर्हि अन्ययोगस्यापि अभ्यासं कर्तुं शक्यते । सम्मिश्रित्य साधयेत् । एवं करणेन साधकः झटित्येव सफलतां प्राप्स्यति ।[२०]

**योगसाधने प्रयास:**

इतरयोगिनः यथा सिद्धाः सन्ति, तथा सर्वेऽपि भवितुमर्हन्ति । युष्माकमपि तादृशी पर्याप्तशक्तिः विद्यते । यदि कश्चित् जीवम्मुक्तः भवति । सः सर्वं कर्तुं शक्नोति । स्वपुरूषार्थबलेन, स्वात्मशक्तिबलेन च इत्थम्भूतः जीवन्मुक्तयोगी यः कश्चिदपि भवितुमर्हति । इति सर्वेषां स्वजन्माधिकारः वर्तते । भौतिकोन्नत्यामेव समाननियमः किन्तु भौतिकोन्नतेः आध्यात्मिकोन्नतिः अत्यन्तं श्रेष्ठा, नित्या, शाश्वतभूता चास्ति, यतः एतदुन्नत्यनन्तरं इतरोन्नतेः आवश्यकता न वर्तते । अतः भगवान् योगेश्वरः प्रवदति ।

**यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः ।**
**यस्मिन् स्थितो न दुःखेन गुरूणापि विचाल्यते ।।**[२१]

अतः समस्तहीनमन्यतां परिवर्ज्य आभ्यन्तरशक्तेः सुविनियोगेन महपुरूषाः वा सर्वेऽपि अधस्तात् एवोन्नतिं प्राप्नुवन्ति ।[२२]

**ध्यानाभ्यासाय गुणा: -** स्वमनसः ब्रह्मविचारणात् प्राक् मनस्सु दिव्यविचाराणां पचनमादौ भवेत् । प्रथमतः दिव्यविचाराणां पाचनं, ततः ब्रह्मविचारे सन्तृप्तिः तदनन्तरं च ब्रह्मसाक्षात्कारः सम्भवति । अतः त्रितयमिदं स्मर्तव्यं निरन्तरम् ।

अधिकात्मचिन्तनेन, वासनाक्षयेन, इन्द्रियदमनेन, आन्तरिकजीवनेन च स्वात्मबलं दृढीकुर्यात् । प्रतिदिनं, विशेषतः रविवासरे इतरावकाशदिनेषु वा कालस्य सदुपयोगं कुर्यात् । यदि भवान् बङ्गस्य रसगोलकं मासम् आस्वादयति, तार्हि रसगोलकं प्रति आसक्तिः सञ्जायते। तथैव साधुसन्न्यासिनां स्वमनसि ईश्वरप्राप्तये आसक्तिः स्वतः सञ्जायते । केवलं मानसिकासक्तिः न लाभकरी, अपि च ज्वलन्तवैराग्य-ज्वलन्तमुमुक्षत्व-आध्यात्मिकसाधनक्षमता-सततसंलग्ननिदिध्यासनादीनाम् आवश्यकताः वरीवृत्यन्ते । तदैव आत्मज्ञानं सभ्मवेत् ।

सदाचारजीवनयापनं नेश्वरसाक्षात्काराय पर्याप्तं वर्तते । अपि च सततध्यानमपि परमावश्यकम् । सदाचारमयजीवनं हि मनसः ध्यानधारणाभ्याम् अनुकूलं कारयति। वस्तुतः धारणा, ध्यानञ्चास्मान् आत्मसाक्षात्कारं प्रति गमयति ।

श्रीमद्भगवद्गीतायां **''मन्मन: मत्पर:''** इति पदयोः बहुलः प्रयोगः परिदृश्यते । आस्यायमर्थः साधनायां सम्पूर्णरूपेण, शतं प्रतिशतं च स्वमनः सन्निवेशयेत् । तदैवात्मसाक्षात्कारः सम्भवेत् । यदि स्वमनसः एकापि वृत्तिः विषयधाविनी विषयाकर्षिणी वा भवेत्, तर्हि ईश्वरचैतन्यप्रापणमसम्भवमेव ।[२३]

**कैवल्यम् -** अन्ततः गत्वा योगी स्वदिव्यस्वरूपस्य परमकैवल्यस्य च साक्षात्कारं करोति । सः प्रकृतितः पूर्णतः विरमति । सः परमस्वतन्त्रताम् अनुगच्छति । इदं हि कैवल्यं, यत्तु योगिनां परमलक्ष्यमस्ति । अस्मिन्

समस्तक्लेशकर्मणि विनश्यन्ति । भोगापवर्गोद्दिश्यपरिपूर्णेन गुणाः स्वकार्याणि स्थगयन्ति । तेन योगी अबाधज्ञानं समधिगच्छति । भूतभविष्ये वर्तमाने लीयेते । सर्वमिदानीं, सर्वमिदमिति भावनायाः सः देशकालावस्थाः सर्वाः अतिक्राम्यति तदा योगीनः असीमज्ञानस्य पूरतः त्रिकालज्ञानं तृणवत् प्रतिभाति ।[२४]

यदि आत्मनः अनुभवमात्रं प्राप्नोति, यदि प्रखरज्योतिर्दर्शनं करोति, यदि अत्यन्तम् आध्यात्मिकानुभवस्य प्राप्तुकामोऽस्ति, तर्हि भयं त्यजतु, साधनां मा त्यजतु, वीरः भवतु । सुखेन अग्रे समेधताम् । योगिनां जीवने निरुत्साहतायाः, निर्बलतायाः प्रसङ्गोऽपि न भवेत् । तेषां जीवनं माधुर्यपूर्णं स्यात् । ते सर्वेषां प्रेरणाप्रदाः स्युः । तेषां स्मरणेन वेदस्य चरैवेति-इति मन्त्रस्य सार्थकता समायात् ।[२५]

**सन्दर्भाः —**


१. श्रीभागवतम् - २/१०/१ २. वचनामृत-पृ- ५१८ ३. वचनामृत - पृ - ५१९
४. उपदेशामृत - पृ - ३० ५. मनुस्मृति- ६/६७ ६. योगिराजविशुद्धानन्द परमहंस, पृ - २९
७. यो.वि.प, पृ - ३४ ८. यो. वि.प., पृ-५५ ९. यो.वि.प.पृ - ८०
१०. यो.वि.प.पृ-८३ ११. यो.वि.प. पृ -१०१ १२. यो.वि.प. पृ -१०६
१३. मनीषी की लोकयात्रा,पृ-१३३ १४. मनीषी की लोकयात्रा, पृ - १३५ १५. यो.वि.प. पृ -१४४
१६. योगिनः आत्मकथा, पृ -१४२ १७. साधना-पृ - ४९२ १८. साधना,पृ- ३२९
१९. साधना, पृ. -३३० २०. महर्षि शिवानन्द, पृ -१२६ २१. गी -६/२२
२२. महर्षि शिवानन्द पृ-१३२ २३. साधना, पृ -३८५ २४. साधना,पृ -३९१
२५. साधना - पृ -५९९


प्राध्यापकः, सर्वदर्शनविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी ।



## अध्यापकप्रशिक्षणे शिक्षणाभ्यासः

**प्रो. सागरिकानन्दः**

शिक्षाक्षेत्रे प्रशिक्षणं मुख्यं महत्त्वपूर्णं च भवति । प्रशिक्षणस्य तात्पर्यम् अस्ति पुनः पुनः अभ्यासेन अनुभवात्मकशिक्षणप्रदानम्। यत् शिक्षणं प्राभावपूर्णं, रुचिकरं सुग्राह्यं च करोति। कौशलपूर्णं शिक्षणं छात्राणां कृते सरलबोधगम्यं भवति । विविधेषु विषयेषु दक्षतां प्राप्य कौशलानां प्रयोगेण शिक्षणप्रदानमेव कष्टकरः विषयः। अभ्यासं विना मानवनां कृते किमपि साध्यं न भवति । अतः भगवता श्रीकृष्णेन उक्तम् - **"अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते"** इति ।

यथा लघुबालः अभ्यासद्वारा स्वपादमुत्थाय अग्रे गच्छति, पुनः पतति, किञ्चित् उपविशति च । तद्वत् शिक्षणकलां प्राप्तुमभ्यासः आवश्यकः। प्रशिक्षणे छाक्षाध्यापकः कदाचित् अधः पतेत्, प्रयासेन उत्तिष्ठेच्च । सर्वान् विषयान् सम्यगभ्यस्य दक्षो भवति चेद् अध्यापकः प्रभावपूर्णतया अध्यापयितुं शक्नोति ।

शिक्षणाभ्यासः शिक्षकप्रशिक्षणस्य महत्त्वपूर्णमङ्गम् भवति। शिक्षणाभ्यासं विना प्रशिक्षणकार्यक्रमः पूर्णतां न याति । अतः प्रशिक्षणे शिक्षणाभ्यासस्य उपादेयता न कदाऽपि हेया । शिक्षकप्रशिक्षणेन छात्राध्यापकाः परम्परानुसारेण त्रिंशत् चत्वारिंशत् वा पाठान् शिक्षणाभ्यासविद्यालयेषु वास्तविककक्षासु पाठयन्ति । एतेषु पाठेषु छात्राध्यापकाः अनेकान्

शिक्षणविषयान् पाठयन्तः प्रायोगिकशिक्षणं सम्पादयन्ति । प्रत्येकं पाठः प्रायः पञ्चचत्वारिंशत् निमेषात्मको भवति ।अस्मिन्नवधौ छात्राध्यापकः विद्यालयस्य वास्तविकाध्यपकरूपेण भूमिकां निर्वहति। छात्रान् अनुशासयति। प्रस्तावनामुखादनेकान् विषयांश्च सम्पादयति। स्व अध्यापनकाले छात्राध्यापकः विविधाः क्रियाः सम्पादयति, एवं यथाकथञ्चित् चत्वारिंशत् निमेषात्मकं समयं निर्वहति। परमेतेन क्रमेण असौ लक्षितमुद्देश्यं पूर्णतया अधिगन्तुं न शक्नोति । निरीक्षकाः अपि अध्याप्यमानान् पाठान् निरीक्ष्य प्रायः प्रचलिताभिः टिप्पणीभिः छात्राध्यापकानां मार्गदर्शनं कर्तुं प्रयतन्ते। चिरकालादियं व्यवस्था वरीवर्ति । एवं क्रमेण प्रायोगिकशिक्षणाभ्यासेन छात्राध्यापकः शिक्षणस्य अनेकानि वैशिष्ट्यानि सम्यगभ्यस्य तेषां वैशिष्ट्यानां सम्मेलनेन स्वीयमध्यापनं सम्यक् सम्पादयितुं सक्षमः स्यात् ।

शिक्षणाभ्यासः शिक्षकप्रशिक्षणकार्यक्रमस्य महत्त्वपूर्णः प्रयोगात्मकः पक्षः। येन कश्चन छात्राध्यापकः कुशलाध्यापकत्वेन परिणमते। अनेन छात्राध्यापकः पाठयोजनां निर्माय कक्षायां शिक्षणं ददाति। अत्र विषयद्वयं स्वीकरणीयम् । प्रत्येकस्य विषयस्य विंशितः पाठाः भवन्ति । एवमाहत्य सम्पूर्णं चत्वारिंशत् पाठाः पाठनीयाः । पाठयोजना कक्षायां शिक्षणात् प्राक् प्रशिक्षकेण निरीक्ष्यते । पाठनवेलायाञ्च निरीक्षणपुस्तिकायामुचितानुचितटिप्पण्यः प्रदीयन्ते । Prof. S.K.Dubey मतानुसारं "शिक्षणाभ्यासः शिक्षकप्रशिक्षणकार्यक्रमस्य एकः महत्त्वपूर्ण-प्रयोगात्मकः पक्षः, येन छात्राध्यापकः वास्तविकशिक्षणप्रक्रियाणां, कक्षाकक्षपरिस्थितीनां, शिक्षणविधीनां, शिक्षणस्योपयुक्तस्वरूपाणाञ्च विषये ज्ञानं प्राप्नोति"। तथैव Prof. R.K.Sharma मतानुसारं "शिक्षणाभ्यासेन छात्राध्यापकः प्रभावपूर्णशिक्षणस्य वास्तविक- परिस्थितिं, स्वरूपञ्च ज्ञात्वा कुशलाध्यापकत्वमधिगच्छति"। अस्य शिक्षणाभ्यासस्य मुख्यविशेषताः निम्नलिखिताः वर्तन्ते ।

१. सैद्धान्तिकरूपेण प्राप्तज्ञानानां, सिद्धान्तानां, शिक्षणविधीनाञ्च व्यावहारिकप्रयोग एव शिक्षणाभ्यासः ।

२. शिक्षणाभ्यासप्रक्रिया क्रमबद्धः सन् सुसंघटितरूपेण सम्पाद्यते ।

३. शिक्षणाभ्यासप्रक्रिया प्रशिक्षणकार्यक्रमस्य प्रयोगात्मकपक्षो भवति । अयं पक्षः शिक्षकप्रशिक्षणस्य प्रमुखमङ्गं भवति ।

४. शिक्षणाभ्यासस्य सम्बन्धः प्रभावपूर्णशिक्षणप्रक्रियायाः विकासेन सह वर्तते ।

५. शिक्षणाभ्याससमये छात्राध्यापकः छात्राणां समक्षं वास्तविकशिक्षणस्य स्वरूपं प्रस्तुतीकरोति ।

५) सैद्धान्तिकरूपेण प्राप्तज्ञानानां, सिद्धान्तानां, शिक्षणविधीनाञ्च व्यावहारिकप्रयोग एव शिक्षणाभ्यासः ।

६) शिक्षणाभ्यासकार्यक्रमः शिक्षकप्रशिक्षणकार्यक्रमस्य अपरिहार्यपक्षः, यस्याभावे कुशलशिक्षकाणां निर्माणमसम्भवम्। शिक्षणाभ्यासे तु बह्वीनां क्रियाणां सम्पादनं भवति । तासां च क्रियाणां सम्पादनाय निर्धारितानि उद्देश्यानि वर्तन्ते । यथा -

१) शिक्षणाभ्यासेन सैद्धान्तिकज्ञानेन सह व्यावहारिकप्रयोगज्ञानमपि सम्पाद्यते ।

२) शिक्षणाभ्यासद्वारा छात्राध्यापकः छात्राणां मनोवैज्ञानिकपक्षस्य अध्ययनं कुर्वन् तेषां शिक्षणाधिगमप्रक्रियायाः प्रकृतस्वरूपं जानाति ।

३) शिक्षणमिव महत्त्वपूर्णं तथा रचनात्मककार्याणि प्रतिछात्राध्यापकानामात्मविश्वासः, कार्यकुशलक्षमता च वर्द्धते ।

४) शिक्षणक्रियायां समागतसमस्यानां ज्ञानम्, तासां समाधानार्थं क्षमतोत्पादनञ्च ।

५) छात्रैः, इतराध्यापकैः, कर्मचारिभिः आत्मीयतापूर्णावश्यकसम्बन्धस्थापनस्य योग्यता प्राप्तिः ।

६) शिक्षणाभ्यासेन कक्षाकक्षयोग्यतायाः विकासमस्पादनम् ।

७) छात्राध्यापकेषु व्यावसायिकदायित्वनिर्वहणस्य क्षमतोत्पादनम् ।

८) शिक्षणव्यवसाये सफलताप्राप्त्यर्थमावश्यकविशेषतानां विकासः ।

९) शिक्षणकाले उचितारोहावरोहक्रमेण वाचनं, सार्थककथनम्, उपयुक्तप्रश्नकरणादि-योग्यतानां विकासः ।

१०) शिक्षणाधिगमप्रक्रियां सरलीकर्तुं बोधगम्यञ्च कर्तुं छात्राध्यापके तादृशयोग्यतायाः अभिवृद्धिः ।

११) छात्राणां स्तरानुगुणं योग्यतानुगुणञ्च शिक्षणविधीनां प्रयोगक्षमतायाः विकासः ।

१२) प्रभावात्मकाधिगमार्थं सम्प्रेषणक्षमतायाः विकासः ।

१३) शिक्षणाधिगमसामग्रीणां निर्माणं, तेषाञ्चोचितप्रयोगक्षमताप्राप्तिः ।

१४) छात्राध्यापकेषु मूल्याङ्कनयोग्यतायाः विकाससम्पादनम् ।

शिक्षणाभ्यासकाले छात्राध्यापकैः विभिन्नाः समस्याः अनुभूयन्ते । तद्यथा -

१) प्रायोगिकशिक्षणाभ्यासार्थं विद्यालयानामुपलब्धिः दुष्करा वर्तते ।

२) प्रधानाचार्याः विद्यालयान् दत्त्वाऽपि असहयोगं कुर्वन्ति ।

३) ते अनुशासनहीनतायाः अपूर्तेः पाठ्यक्रमस्य च कारणं प्रदश्र्य शिक्षणाभ्यासार्थम् आगतान् छात्राध्यापकान् तान् एव पाठान् पाठयितुमादिशन्ति ।

४) विद्यालयीयच्छात्रा अपि जानन्ति यद् एते प्रशिक्षणार्थिनः छात्राध्यापकाः अस्माकं नियमिताध्यापकाः न सन्ति । अतः ते अनुशासने न तिष्ठन्ति, अध्ययने च रुचिं न प्रदर्शयन्ति ।

५) छात्राध्यापकोऽपि मयाऽत्र चत्वारिंशत् पाठानामध्यापनं कर्तव्यमिति मनसि निधाय स्वीयं समयं यापयितुं प्रयतते।

६) पारम्परिकशिक्षणाभ्यासे निरीक्षकाः एककालमेव द्व्यधिकान् त्र्यधिकान् वा छात्रान् निरीक्षन्ते ।

७) पाठः सम्यक् वर्तते, छात्राः अनुशासिताः सन्ति, प्रश्नाः कक्ष्यायां सुवितरिताः स्युः इत्येतादृशी या प्रतिपुष्टिः प्रशिक्षकैः शिक्षणाभ्यासकाले दीयते सा छात्राध्यापकानां गुणदोषविमर्शनपर्यन्तमेव सीमिता भवति, न तु कक्ष्याकाठिन्यानां दूरीकरणाय सक्षमा भवति ।

८) अपि च कदाचित् प्रशिक्षकैः दत्तानां सुचारुटिप्पणीनामनुपालनाय छात्राध्यापकैः विलम्बेन अवसरः लभ्यते ।

शिक्षणं काचित् सूक्ष्मातिसूक्ष्मा मानवान्तर्निहिता वैभवपूर्णा कला । कस्मिन् जने सा कला वर्तते कस्मिन् च न वर्तते तत् गणयितुं न शक्यते । यस्मिन् निहिता वर्तते, स्वत एव तस्याः परिस्फुटनं भवति । यत्र लेशोऽपि न विद्यते तत्र प्रशिक्षणमेव कार्यं सम्पादयति । प्रशिक्षणेन शिक्षणकौशलानि वर्द्धन्ते । शिक्षणप्रदानाय कानि तत्त्वानि अनुकुर्वन्ति ? तत्र च के विशेषोपायाः अवलम्बनीयाः ? काः पद्धतयः अनुसरणीयाः ? इत्येते प्रश्नाः शिक्षणप्रदानात् प्राक् मनसि समायान्ति । तस्मात् शिक्षणात् प्राक् तादृशी पुर्वसिद्धता अपेक्षिता ।

प्रायः अध्यापकशिक्षासंस्थायाः छात्राध्यापकाः शिक्षणाभ्याससम्पादनाया विभिन्नेषु विद्यालयेषु प्रविशन्ति । तत्र तैः चत्वारिंशत् पाठाः पाठनीयाः भवन्ति । परन्तु, यमेव विद्यालयं प्रति ते गच्छन्ति तत्रस्थेन परिवेशेन सह एतेषां परिचयः न भवति। छात्राः अपरिचिताः भवन्ति । प्राध्यापकः सहकारको भवति उत न तदपि चिन्तायाः कारणम् । तस्मादधोलिखितिरीत्या छात्राध्यापकानां पूर्वसिद्धता भवेत् -

१) शिक्षणाभ्यासस्य प्रारम्भिकदशायां छात्राध्यापकस्य शिक्ष्यमाणच्छात्रैरपरिचितत्वात् छात्राणां संख्याधिक्याश्च सः तेषां नियन्त्रणे असमर्थो भवति । अत्र छात्रनियन्त्रणं पाठ्यांशस्याध्यापन-मिति कार्यद्वयं समकालमेव सम्पादनीयम् । अतः शिक्षणाभ्यासात् प्राक् सैद्धान्तिकरूपेण अधीतशिक्षासिद्धान्तादयः सहजकक्षाशिक्षणपरिस्थितिषु कथं प्रयोक्तव्याः ? इत्येतादृशं कौशलं शिक्षणीयम् ।

२) पाठयोजनानिर्माणाय सोपानानामाधारेण कथं कक्षाशिक्षणं प्रदातव्यमिति तदर्थं पूर्वसिद्धता सम्पादनीया ।

३) कक्षायां कोलाहलरतच्छात्राय प्रश्नकरणद्वारा पाठोन्मुखीकरणीयम् ।

४) शिक्षणाभ्यासे अध्यापनाय निश्चीयमानाः पाठ्यपुस्तकस्य पाठ्यांशविशेषा अपि सन्ध्यलङ्कारादिभाषातत्त्वभूयिष्ठा भवन्ति । एतेषां विषयाणां पाठनाय उपकुरुतां शिक्षणकौशलानाम् अभ्यास आवश्यकः ।

५) बहुतत्त्वभूयिष्ठस्य पाठ्यांशस्य योजनाबद्धक्रमेण तदन्तर्गतांशानां सक्रमस्मरणपूर्वक-मध्यापनमित्यप्यंशः छात्राध्यापकस्य कृते क्लेशकरः । तदर्थं बहुजागरुकतया पाठ्यांशस्य स्मरणपूर्वकं विषयः पाठनीयः । अन्ततो गत्वा अध्यापनं प्रभावपूर्णं भवति चेत् छात्राः छात्राध्यापकस्य आयत्ताः अवश्यमेव भवन्तीति नास्ति संशयः ।

६) यदि विभिन्नकौशलानामभ्यासाय अनुकूला उपयुक्ताश्च तत्तत् कौशलानुरूपा: पाठ्यांशा: सुनियोजितरूपेण न पाठयेरन् तर्हि तत्तत्कौशलानि पर्याप्तरूपेण न विकसेयु: । तस्मात् छात्राध्यापकेन कौशलानुगुणं पाठ्यांशानां चयनं कृत्वा पाठनीया: ।

७) कक्षायां प्रविष्ट: छात्राध्यापक: कदाचित् शिक्षणविन्दून् स्मर्तुं प्रयतमान:, छात्रान् विस्मरति, कदाचिच्च अनवधानच्छात्रान् नियन्तुं प्रयतमानस्सन् प्रदर्शनार्थमानीतं शिक्षणोपकरणं विस्मरेत् । यदि शिक्षणोपकरणं स्मरेत् तर्हि आत्मना संरचितप्रश्नानां क्रमं विस्मरेत् । अत: सक्रमं पाठनाय पूर्वं योजनाबद्धप्रस्तूति: कुर्यात् ।

८) कक्षायां पाठनाय शिक्षणवस्तूनां सुनियोजनं, कक्षाया: कठिनतानां दूरीकरणाय उचितव्यवस्थापनं च करणीयम् ।

९) शिक्षणाभ्यासार्थं गमनात् प्राक् शिक्षणसिद्धान्तानां, सूत्राणां, विधिप्रविधीनाञ्च गहनाध्ययनं कृत्वा कार्ये तस्य प्रयोगार्थं सम्पूर्णसिद्धता आवश्यकी ।

१०) नूतनपरिस्थितौ सामञ्जस्यं संस्थापयितुं सौहार्दपूर्णव्यवहार: प्रदर्शनीय: ।

११) केषुचित् विद्यालयेषु प्रधानाध्यापका: सहयोगं नैव कुर्वन्ति । एतस्या: समस्याया: समाधानाय छात्राध्यापकस्य स्वप्रतिभाप्रदर्शनपूर्वकं छात्रेष्वध्यापनप्रभावं संस्थाप्य प्रधानाध्यापकाय प्रत्येकस्मिन् क्षेत्रे/कर्मणि सहयोगप्रदानाय मानसिकी सिद्धता आवश्यकी । छात्राध्यापका: विद्यालयस्य उन्नतये प्रयतमाना: भवेयुश्चेत्तर्हि प्रधानाध्यापक: अवश्यमेव सहकारक: स्यात् ।

१२) छात्राणां विषये अमनयोग्यदूरीकरणाय पाठ्यमानविषयस्य तलस्पर्शी अध्ययन-मावश्यकम् ।

विविधै: कलाकौशलै: दीयमानं प्रकृष्टशिक्षणं प्रशिक्षणम् । प्रशिक्षकै: यत् शिक्ष्यते तदपि प्रशिक्षणमिति वक्तुं शक्यते । कस्यापि प्रदत्तकार्यस्य सम्पादनाय कस्याप्येकस्य व्यक्तिविशेषस्य अभिवृत्ते: ज्ञानस्य, अवबोधस्य, कौशलस्य, व्यवहारस्य च क्रमबद्धविकासस्य नामैव प्रशिक्षणमिति । प्रशिक्षणे विविधानां शिक्षणकौशलानां ज्ञानं, तेषाञ्च अभ्यास: क्रियते । प्रविधे: उपयोगेन कार्ये गुणवत्ताया: विकास: निरन्तरं सञ्जायते ।

प्रशिक्षणकार्यक्रमे शिक्षणाभ्यास: प्रमुखमङ्गम् । शिक्षणाभ्यासं विना प्रशिक्षणं पूर्णतां न याति । छात्राध्यापका: विभिन्नेषु विद्यालयेषु गत्वा तत्र प्राय: चत्वारिंशत् पाठान् पाठयन्ति । पाठानां पाठनसमये सैद्धान्तिकरूपेण अधीतकौशलानां प्रयोग: क्रियते छात्राध्यापकै: । परन्तु अधीतसिद्धान्तस्य क्रियायां प्रयोग: समीचीन: भवति न वा इत्येतत् प्रशिक्षक: सूचयति । छात्राध्यापकस्य कक्षायामान्तमुपविश्य प्रशिक्षकेण तस्य सर्वोऽपि व्यवहार: निरीक्ष्यते । कुत्र दोषान्नाचरति ? कुत्र साधु व्यवहरति ? प्रभावपूर्णं सम्प्रेषणं सम्पादयति वा ? कौशलानि उपयुज्यन्ते वा ? इत्यादीन् बहून् विषयान् प्रशिक्षक: कक्ष्याया: पृष्ठे उपविश्य अवलोकयति, छात्राध्यापकस्य खातिकायां टिप्पणीं च लिखति । मौखिकरूपेण स्वीयदोषा: अन्येन केनापि उच्यन्ते चेत् स: दु:खं लज्जाञ्चानुभवति । अत: निरीक्षकै: छात्राध्यापकानां शिक्षणव्यवहारान् समीचीनदिशि परिवर्तयितुं प्रकृष्टसूचना: लिखितरूपेण प्रदीयन्ते । प्रायोगिकशिक्षणाभ्यासे प्रदत्तया अनया प्रतिपुष्ट्या: छात्राध्यापका: स्वयमाचरितानां गुणदोषाणां विमर्शनं कर्तुं प्रभवन्ति। प्रशिक्षकस्य लिखितप्रति-पुष्ट्याधारेण ते गुणानां सम्बर्द्धनेन सह दोषाणां निराकरणाय यतन्ते । एवं क्रमेण छात्राध्यापकस्य कौशलविकासो भवति । प्रथमकालांशे स: यान् दोषान् आचरितवान्, तत्क्षणमेव अध्यापकेन ते दोषा: सूचिता इति कृत्वा क्रमश: त एव दोषा: निराकृता: । एवं रूपेण प्रथमकालांशे यदि नवति: प्रतिशतं दोषमाचरितं, कौशलानां सिद्धान्तानां प्रयोगश्च सुष्ठु नैव कृतश्चेत्, तर्हि चत्वारिंशत्तमे कालांशे छात्राध्यापक: प्रशिक्षकाणां प्रतिपुष्टे: प्रभावेण अवश्यमेव कौशलवान् सञ्जायते इति ।

**सन्दर्भग्रन्थसूची-**

कुलश्रेष्ठ, एस्.पी - शैक्षिक तकनीकी के मूल आधार, आर. लाल बुक डिपो, मेरठ, २०१६.

अग्रवाल, जे.सि- शिक्षा के सिद्धान्त तथा तकनीक, आर्य बुक् डपिो,नई दिल्ली,१९७४.

मङ्गल, एस. के - शिक्षा तकनीकी, PHI Learning Private Limited, New Delhi, 2011.

जोशी, प्रह्लाद.आर- अध्यापकशिक्षा, राष्ट्रियसंस्कृतविद्यापीठम्,तिरुपति:, २००७.
पात्र, वृन्दावन-शिक्षणस्य वैज्ञानिकधारा, तिरतरङ्गप्रकाशन,भुवनेश्वर, २००८.
मिश्र,रमाकान्त- शैक्षिकप्रविधि:, चौखम्भाप्रकाशन, २००६.
Pandey, K.P- Advanced Educational Psychology for Teacher, Amitash Prakashn,New Delhi,1983.
Pandey, Ram Shakal- Principles of Education,Vinod Pustak Bhavan, Agra,1979.

सहायिकाचार्या, शिक्षाशास्त्रविभाग:,
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदशिवपरिसर:, पुरी ।



# संस्कृतस्य वैज्ञानिकता

**डॉ महेशकुमारपाणिग्राही**

मानवान्तर्निहितभावप्रकटनमाध्यमेषु भाषा सर्वश्रेष्ठं स्थानं गृह्णाति। विश्वे बह्वय: भाषा: सन्ति। स्थानकालभेदानुगुणं भाषाया: परिवर्तनकारणादेव बह्वय: भाषा: आगता: । एतत् वाक्यं भाषावैज्ञानिकानामेव। सम्प्रति बह्वाधुनिकभाषा: सन्ति। ताभि: एव भावादानप्रदानं क्रियते।

जना: वदन्ति संस्कृतभाषा सर्वासां भाषाणां जननी अस्ति। भाषावैज्ञानिकानां विचारदृष्ट्या इयं भारोपीयभाषापरिवारस्य (Indo-aryan) आदिभाषा वर्तते । प्रायश: ई.पू. ३००० वर्षपूर्वे अस्या: प्रयोग: आसीत्। तत: क्रमपरिवर्तनेन क्रमेण उत्तरवैदिकसंस्कृतं, पाणिनिसंस्कृतं, प्राकृतं, अपभ्रंशं, आधुनिकभातीयभाषाणां चोत्पत्तिरभवत्। भाषाया: परिवर्तनम् अज्ञानता-मात्राभेद-आगम-प्रयत्नलाघव-उच्चारणयन्त्राणां भिन्नतादिकारणेभ्य: भवतीति भाषावैज्ञानिकानाम् अभिमतम्।

यद्यपि संस्कृतम् आदिभाषा अस्ति, तथापि तया भाषया कथोपकथनार्थं किमर्थं संस्कृतज्ञा: वदन्ति ? भावप्रकाशनार्थं तु भारते अनेका: भाषा: सन्ति। ताभि: भावं प्रकटयाम:। बहुपुरातनभाषाया: अर्थात् संस्कृतभाषाया: आवश्यकता का ? किमर्थं एतस्या: भाषाया: प्रयोगं कुर्वन्तु इति सर्वदा वदन्ति ?

एतस्य प्रश्नस्योत्तरार्थं विद्वांस: वदन्ति - भाषाणां मध्येऽपि भेदा: वर्तन्ते। यथा-साधुभाषा, असाधुभाषा, ग्राम्यभाषा, शिक्षितभाषा, शुद्धभाषा, अशुद्धभाषादय:। साधुशब्दानां प्रयोगे धर्म:। साधुशब्दश्रवणादनन्तरं अर्थबोधोऽपि शुद्धरूपेण झटित्येव जायते। वाग्ब्रह्मण: स्वरूपदर्शनमपि अनेन भवितुमर्हतीति दर्शयितुं महाभाष्ये पतञ्जलिना भणितम् - **एक: शब्द: सम्यग् ज्ञात: सुप्रयुक्त: स्वर्गे लोके च कामधुग् भवति।** पुनश्च अपर: पक्षोऽयमस्ति - यद्यपि लोकव्यवहारे बह्वय: भाषा: सन्ति, तथापि ता: भाषा: समयानुसारेण परिवर्त्तिता: सन्ति। परिवर्तनकारणात् बहुवर्षेभ्य: प्राक् निश्चितविषय: ज्ञातुं न शक्यते। परन्तु संस्कृतभाषाया: व्याकरणकारणात् सर्वदा एकवत् तिष्ठति । अत: लिखितविषयान् व्याकरणमाध्यमेन शब्दविश्लेषणं कृत्वा ज्ञातुं शक्यते।

इतोऽपि चिन्तयामश्चेत् मनसि आयाति - "भारते अनेका: भाषा: सन्ति। यदि सर्वदा भाषां पठाम: तर्हि अस्माकं विज्ञान-इतिहास-गणित-भूगोलादिविषयाणाम् अवबोध: कदा भविष्यति। अत: एका सार्वभौमिकी भाषा भवेत् चेत्वरम्। सार्वभौमिकी भाषा संस्कृतं भविष्यति। कारणम् अस्यां भाषायां वैज्ञानिकता वर्तते। संस्कृत्याधाराशीला एषा भाषा । वैज्ञानिकतत्त्वानां संग्रह: अस्यां भाषायां वर्तते। आध्यात्मिकचेतनानि अनया प्राप्यन्ते। सार्वजनीनसर्वप्रथमभाषाऽपि वर्तते। राजनीतिशास्त्र-अर्थशास्त्र-चिकित्साशास्त्र-कलाशास्त्रादिविषया: अस्यां भाषायां लिखिता: वर्तन्ते।

यदि एतत् सर्वम् एकस्यां भाषायां वर्तते, तर्हि किमर्थं एतस्या व्यवहार: सार्वजनीनरूपेण भवितुं नार्हति। एतादृशी

सर्वज्ञानप्रदा समृद्धभाषा तु संस्कृतं विहाय अन्यत् नास्ति एव। अधुना संस्कृतं त्यक्त्वा अन्या काऽपि भाषा समृद्धा अस्ति चेत् अनुवादमाध्यमेन (संस्कृतात्) एव । न तु सार्वकालिकरूपेण।

**संस्कृतं क्लिष्टं, कण्ठस्थीकरणेन आयाति इति भावनाया: खण्डनम्-** केचन रूढीवादिन: वदन्ति संस्कृतं क्लिष्टभाषा। कण्ठस्थीकरणस्य आवश्यकता वर्तते। परन्तु ते एतत् न विचारयन्ति यत् प्रारम्भिकपर्याये या काऽपि भाषा भवतु नाम शब्दभण्डारस्य वृद्ध्यर्थं कण्ठस्थीकरणीयमेव। अनन्तरं भावनानुसारेण स्वत: मुखात् आगमिष्यति। यदि आङ्ग्लं पश्याम:, तत्रापि आदौ Go, went, gone / do, did, done इत्यादीनां कण्ठस्थीकुर्वन्ति एव। यदि तत्राभ्यासं कुर्वन्ति, तर्हि संस्कृतभाषायां किमर्थं न ?

पुनश्च क्लिष्टताविषये एतत् वक्तुं शक्यते यत् - रुचिरहितानभ्यसनीय: विषय: क्लिष्ट:। अर्थात् न पठन्ति, न वदन्ति, केवलं दूरे स्थित्वा कष्टं कष्टं इति भजन्ति। एतेन कथं वा यथास्थितिं ज्ञातुं शक्नुवन्ति । पठनेन तु आन्तरीकज्ञानमागमिष्यति । सरलं कठिनं वा तदा एव वक्तुं शक्नुवन्ति । यदि कमपि विषयं, कामपि भाषां वा सम्यक् पठन्ति तर्हि अवश्यं सरलम् । मातृभाषावत्, ज्ञातविषयवत् भाति, संस्कृतमपि तद्वत् सरलं भविष्यति। साऽपि एका भाषा। अन्यत् किमपि नास्ति।

यथा संस्कृतस्य व्याकरणं तथा अन्यासामपि भाषाणाम् व्याकरणम् । मातृभाषां विहाय अन्यां भाषां कण्ठस्थीकरणं विना व्यवहर्तुं न शक्नुम:। सर्वत्र तु क्रियापदानां, शब्दानां, प्रत्ययानां, उपसर्गाणाञ्च ज्ञानं करणीयमेव। सर्वत्र एकैव नियम: । आदौ कण्ठस्थीकरणम्, अनन्तरं भाषाज्ञानं भाषाव्यवहारो वा । पार्थक्यं केवलं शब्दभेद:। क्रियापदस्थाने आङ्ग्लभाषायां Verb इति शब्द:। यदि एतेषां ज्ञानं (पूर्वज्ञानं) विना भाषां व्यवहर्तुं न शक्नुवन्ति तर्हि संस्कृतं क्लिष्टं कथम्? अत: उपर्युक्तप्रमाणै: संस्कृतभाषा क्लिष्टाभाषा नास्तीति वक्तुं शक्यते । अर्थात् अन्यभाषावत् संस्कृतभाषा सरलाभाषा।

अत्रायं भाव: संस्कृतं सरलं, सरसं, सुमधुरं च। बहु किमपि कण्ठस्थीकरणस्यापि आवश्यकता नास्ति। यदि कोऽपि मनोयोगेन पठति, भाषां प्रति रूचिं प्रदर्शयति, तर्हि स्वत: मुखात् धारावाहिकरूपेण संस्कृतम् आगमिष्यति, अत्र नास्ति कश्चित् सन्देह:।

**संस्कृतभाषाया: वैज्ञानिकता -** अधुना संस्कृतभाषाया: वैज्ञानिकता विषये विचार्यते। आदौ किं नाम विज्ञानमिति जिज्ञासाया उपशमनं भवतु। विज्ञानं नाम प्रमाणपुरस्सरं (सप्रमाणं) तथ्योपस्थापनम्। पुनश्च तस्य तथ्यस्योपयोग: समस्थलेषु भवेत्। न केवलम् एकत्र। एवञ्च प्रतिपादितस्य तथ्यस्य प्रामाणिकताऽपि सर्वजनग्राह्या भवेत्। तदैव तत् प्रमाणं जनानां पुरत: उपस्थापयितुं शक्यते । उदाहरणं यथा - 9शल्यचिकित्सामाध्यमेन हत्पण्डिस्य परिवर्तनं कर्तुं शक्यते । एतद्वाक्यं सप्रमाणमस्ति । प्रयोगमाध्यमेनापि सिद्धम्। अत: सर्वजनग्राह्यं तथ्यम्। अत्र वैज्ञानिकता वर्तते इति वक्तुं शक्यते । परन्तु यदि कोऽपि वदति 9व्यायामद्वारा हत्पिण्डस्य परिवर्तनं कर्तुं शक्यते । एतत् वाक्यं प्रमाणाभावात्, प्रयोगाभावात् च सर्वजनग्राह्यं भवितुं नार्हति । अत: अत्र वैज्ञानिकता नास्ति इति वक्तुं शक्यते। एवमनेकानि उदाहरणानि चिन्तयितुं शक्यन्ते ।

अधुना प्रमाणपुरस्सरं संस्कृतभाषाया: वैज्ञानिकतामुपस्थाप्यते ।

**प्रमाणम् -**

**१) यथा लिखन्ति तथा पठन्ति -**

शब्दस्योच्चारणानुसारेण अर्थबोध: जायते। भारतीयजनानां भौगोलिकभेदकारणात् (स्थानभेदकारणात्) उच्चारणे भिन्नता आयाति । तत्तु सत्यमेव । परन्तु ज्ञात्वाऽपि भिन्नमुच्चारयन्ति। यथा-राम शब्दं **राम्** इति उच्चारयन्ति हिन्दीजना:। काव्यम् इत्यस्य **काव्वम्** इति उच्चारयन्ति वङ्गीया:। Put इत्यस्य पुट् परन्तु Cut इत्यस्य कट् इति उच्चारणमाङ्गलभाषायाम्। परन्तु संस्कृतभाषायां तथा नास्ति । यथा लिखन्ति तदवदेव उच्चारयन्ति। तेन यो कोऽपि मनुष्य: श्रुत्वा सारल्येन अवगन्तुं शक्नोति।

२. उच्चारणम् -

वर्णानामुच्चारणं कथं भवेत् ? कस्य वर्णस्योच्चारणस्थानं कुत्र ? तत् सर्वं संस्कृतव्याकरणे सूत्रमाध्यमेन लिखितमस्ति। अत: संस्कृतोच्चारणे स्पष्टध्वनि: आयाति । उच्चारणमपि सर्वेषामेकवत् भवति। परन्तु अन्यासु भाषासु तथा निर्दिष्टनियम: नास्तीति भाषावैज्ञानिका: वर्णानामुच्चारणविषये वदन्ति। तदपि प्रायत: संस्कृतस्य नियमान् दृष्ट्वा वदन्ति। यथा - आङ्गलमध्ये भारतीयानां वैदेशिकानाञ्च वर्णोच्चारणे भेद: जायते। ध्वने: कथमुत्पत्ति: भवति ?, कुतश्च वायु: आयाति ? इत्यस्मिन् विषये संस्कृतवैयाकरणा: वदन्ति -

**मूलाधारे पराख्या पवनजवबलाद् व्यञ्जिता नाभिदेशे,**<br>
**पश्यन्तीति प्रसिद्धा तदनु हृदिगतामध्यमाख्यां दधाना।**<br>
**ख्याताभूद् वैखरीति श्रवणपुटगतायार्थबोधे प्रवीणा**<br>
**वीणावाद्येऽवतीर्णा प्रसरतु भुवने सैव गीर्वाणवाणी।।**

३) वाक्यसंरचना -

संस्कृतभाषाया: वाक्यसंरचनाशैली अत्यन्तसरला। कारणं क्रियापदानां सुबन्तपदानां (विशेष्य-विशेषण-सर्वनाम-अव्ययानां) च स्थानं निर्दिष्टं नास्ति। यत्र कुत्रापि लिखतु (वदतु) शुद्धरूपेण बोध: भविष्यति। यथा - **छात्र: विद्यालयं गच्छति। छात्र: गच्छति विद्यालयम्। विद्यालयं छात्र: गच्छति। विद्यालयं गच्छति छात्र:।**

अत्र प्रत्येकेऽस्मिन् वाक्ये समानार्थ: आयति। परन्तु अन्यभाषायां तथा सौविध्यं नास्ति।

यथा - आङ्गलभाषायाम् - Ram is going. - राम: गच्छति।<br>
Is Ram going. - किं राम: गच्छति ?<br>
Going Ram is. - अशुद्धं वाक्यम् ।

अत: संस्कृतभाषा सरला अस्ति क्लिष्टं नास्ति ।

**४.नूतनशब्दानां संरचना -** संस्कृतभाषायां एतत् सौविध्यं वर्तते यत् धातु-प्रत्ययानां सहयोगेन अर्थावबोधननिमित्तं सार्थकशब्दानां निर्माणं कर्तुं शक्यते। अत: संविधानेऽपि ३ ५ १ अनुच्छदे एतस्मिन् विषये उल्लेख: वर्तते। तत्र लिखितमस्ति यत् आवश्यकतानुसारेण संस्कृतभाषात: शब्दं स्वीकृत्य हिन्दीशब्दभण्डारस्य वृद्धि: कर्त्तुं शक्यते।

एतत् सौविध्यं अन्यासु भाषासु नास्ति। आङ्गलभाषायां तु एकस्मिन् वर्षे एकस्यैव शब्दस्य निर्माणं भवति। तदपि कण्ठस्थीकरणीयमेव। कण्ठस्थं नास्ति चेत् व्यवहर्तुं न शक्यते। परन्तु संस्कृते एतस्मिन् विषये दृढवन्धनं नास्ति। स्वविचारानुसारेण धातुत: प्रत्ययानां योगं कृत्वा नूतनशब्दं विरचितुं शक्यते।

एवं प्रकारेण ध्वने: उत्पत्तिविषयादारभ्य लेखनं यावत् सर्वत्र वैज्ञानिकता दृश्यते संस्कृतभाषायाम्। यस्मात् कारणात् इयं भाषा सार्वजनिनी, सरला च। केवलं कण्ठस्थीकृता भाषा एषा - इति ये वदन्ति तेषां चिन्तनं शतप्रतिशतम् अशुद्धम्। पठनादनन्तरं संस्कृति-सभ्यता-कला-स्थापत्य-विज्ञानादीनां ज्ञानमपि भविष्यति। पुनश्च स्वस्य चिन्तनं, भावना, बुद्धिरपि परिमार्जिता: वर्धिताश्च भविष्यन्ति।

संविदाध्यापक:, शिक्षाशास्त्रविभाग:<br>
श्रीसदाशिवपरिसर:, पुरी



# संक्रान्तिविचार:

डॉ. ज्योतिप्रसाददाश:

त्रिषु स्कन्धेषु ज्योतिषस्य सिद्धान्तस्कन्ध: स्ववैज्ञानिकतत्त्वै: सुसम्बलितोऽस्ति। इदं कालविधानशास्त्रं कालस्य सूक्ष्माऽवयवादारभ्य प्रलयकालान्तमर्थात् कल्पान्तं यावत् महद् अवयवस्य मीमांसां करोति। येन सर्वाऽपि गणना सम्यक् तया लोके प्रचलति। वेदोक्तकर्माचरणे कालस्य महाती आवश्यकता वर्तते इति शास्त्रकारा:। प्रसङ्गेऽस्मिन् आचार्यभास्कर: वदति- "**यो ज्योतिषं वेत्तिनर: स: सम्यग्धर्मार्थकामाँल्लभते यशश्च**"। (१) धर्मार्थकामसाधकं सन्नपिलोकोपकारकमिदं शास्त्रम्। व्यवहारिकतत्त्वेषु सूर्यस्य संक्रमणं कश्चन महत्वपूर्णविचारणीयविषय: वर्तते। सूर्यस्तु कालनियामकावयव:। तस्याधरिण व्यावहारिकज्योतिषीय-विविधतत्त्वानां तथा धर्मशास्त्रीयतत्त्वानां च परिशीलनं भवति।

सूर्यस्य संक्रमणं सौरसंक्रमणमिति, तस्य संक्रान्तिर्नाम। पूर्वराशिमतीत्य रवेरग्रीमराशौ गमनं किल संक्रान्तिनाम्नाऽभिधीयते। तत्र यदा रविकेन्द्रं राश्यादिबिन्दुगतं भवति स संक्रान्ते: मध्यकाल:। पूर्वाभिमुखंगच्छतो रवे: पूर्वपाली यदा राश्यादिबिन्दुगता भवति तदानीं संक्रान्तेरारम्भ:। यदा रवे: पश्चिमपाली राश्यादिबिन्दुगता भवति तदानीं संक्रान्ते: समाप्तिकाल:। अन्येषां ग्रहाणां प्राग्राशितोऽपरराशौसंक्रमणं तस्य ग्रहस्य राशिसंक्रमणमित्युच्यते। यदा सिद्धान्तगणनागतायनांशसंस्कृतग्रहा: राश्यन्तरगमनमुररीकुर्वते सा सायनांशा: संक्रान्तिरूच्यते। यदा त्वयनांशसंस्काररहिता ग्रहाराश्यन्तरगास्तदा निरयणांशा संक्रान्तिरूच्यते। अस्माकं धर्मशास्त्रदृष्ट्या निरयणसंक्रमणस्य व्यवहार: भवति। राश्यनुसारं सूर्यसंक्रमणस्य नामान्यपि भवन्ति। ताषां संक्रान्तिनां नामानि यथा-

**घोराध्वांक्षीमहोदर्यो मन्दामन्दाकिनीतथा। मिश्राराक्षसिका सूर्यसंक्रान्तिश्चार्कवासरात्।।**(२)

नामानुसारं संक्रान्तिफलं यथा-

**घोरार्कसंक्रमणमुग्ररवौ हि शूद्रान् ध्वाङ्क्षीविशोलघुविधौ च चरर्क्षभौमे।**
**चौरान्महोदरयुता नृपतीन् ज्ञमैत्रेमन्दाकिनीस्थिरगुरौ सुखयेच्च मन्दा।।**
**विप्रांश्चमिश्रभभृगौ तु पशूँश्च मिश्रतीक्ष्णार्कजेऽन्त्यजसुखा खलुराक्षसी च।।**(३)

अर्थात् उग्रगणनक्षत्रे (३पूर्वा, भरणी, मघा) रविवासरे सूर्यसंक्रमणे सा संक्रान्तिघोरा नामिका। फलं शूद्रान् सुखयेत्। लघुसंज्ञकनक्षत्रे (अश्विनी,पुष्य,अभि.,हस्त) सोमवासरे सूर्यसंक्रमणे सा संक्रान्तिध्वांक्षा नामिका। फलं वेश्यासुखम्। चरसंज्ञकनक्षत्रे (स्वाती, पुनर्वसु,श्रवणा, धनिष्ठा, शतभिषा) भौमवासरे सूर्यसंक्रमणे सा संक्रान्तिमहोदरनामिका। फलं चौरान् सुखयेत्। मैत्रसंज्ञकनक्षत्रे (मृगशिरा,चित्रा, अनुराधा, रेवती) बुधवासरे सूर्यसंक्रमणे सा संक्रान्तिर्मन्दाकिनी नाम्नी। फलं राज्ञ: सुखयेत्। स्थिरनक्षत्रे (३उत्तरा,रोहिणी) गुरुवासरे सूर्यसंक्रमणं मन्दा नाम्नी। फलं विप्रान्सुखयेत्। मिश्रनक्षत्रे (विशाखा, कृतिका) भृगुवासरे सूर्यसंक्रमणे सा संक्रान्तिमिश्रानाम्नी। फलं पशून् सुखयेत्। तीक्ष्णनक्षत्रे (आर्द्रा,आश्लेषा, ज्येष्ठा,मूल) शनिवासरे सूर्यसंक्रमणे सा संक्रान्ति: राक्षसीनाम्नी। फलं चाण्डालसुखम्।

सौरसंक्रमणं ज्योतिषशास्त्रस्य गणितागतबिन्दुत्वात् अहोरात्रस्य यस्मिन् कस्मिन् समयेऽपि स: काल: भवितुमर्हति। तत्र दिवाप्रहरकेषु रात्रिप्रहरकेषु तत्फलविषये उक्तं चिन्तामणौ-

**त्र्यंशे दिनस्य नृपतीन् प्रथमे निहन्ति मध्ये द्विजानपि विशोऽपरके च शूद्रान्।।**
**अस्तेनिशाप्रहरकेषु पिशाचकादीन् नक्तंचरानपिनटान् पशुपालकांश्च।**
**सूर्योदये सकललिङ्गिजनं च सौम्ययाम्यायनं मकरकर्कटयोर्निरुक्तम्।।**(४)

अर्थात् दिवसस्य प्रथमत्र्यंशभागे सूर्यस्य संक्रमणे सति नृपतिनाशकर: भवति।द्वितीयत्र्यंशभागे द्विजान् हन्ति। तृतीयत्र्यंशभागे वैश्यान् हन्ति। सूर्यास्तकाले शूद्रान् हन्ति। रात्रौ प्रथमप्रहरांशे पिशाचकादीन् हन्ति। द्वितीयप्रहरांशे रात्रिचरान् हन्ति (राक्षसान्)।

तृतीयप्रहरांशे नटान् हन्ति। चतुर्थप्रहरांशे पशुपालकान् हन्ति। साक्षात् सूर्योदयकाले सकललिङ्गिजनान् (पाखण्डादि)नाशयति। कर्क-मकरसंक्रान्त्योः सौरसंक्रमणं अयनसंज्ञकं भवति।

इदानीं संक्रान्तीनां षडशीत्याननसंज्ञां विचारयामः। तद्यथा- यदा सूर्यः द्विस्वभावराशौ (मिथुन-कन्या-धनु-मीन) संक्रमति, तदानीं तादृशसंक्रमणस्य षडशीतिमुखमितिनाम। स्थिरराशौ (वृष-सिंह-वृश्चिक-कुम्भ) सूर्यस्य संक्रमणं विष्णुपदसंज्ञकम्। संक्रान्तिस्तुविष्णुपदी। चरराशौ काचित् भिन्नता वर्तते। चरराशिषु तुला-मेषौ विषुवसंज्ञकौ, अपि च कर्क-मकरौ अयनसंज्ञकौ भवतः। उक्तञ्च चिन्तामणौ-

**षडशीत्याननं चापनृयुक्कन्याझषे भवेत्। तुलाजौ विषुवं विष्णुपदं सिंहालिगोघटे।।(५)**

अपि च- **तुलादिषडशीत्यह्नां षडशीतिमुखं क्रमात्।तच्चतुष्टयमेव स्यात् द्विस्वभावेषुराशिषु।।(६)**

अर्थात् तुलाराशिप्रारम्भात् षडशीतिदिनेषु (८६दिनानि) षडशीतिमुखसंज्ञकमासः भवति। इयं स्थिति एकस्मिन् वर्षे चतुर्वारमागच्छति। केवलं द्वात्मिकराशौ रेवषडशीतिमुखमितिनिर्गलितार्थः।

धनुराशेः सप्तविंशत्यंशे (२७ं), मीनस्य त्रयोविंशत्यंशैः (२३ं), मिथुनस्यैकविंशत्यंशै (२१ं), कन्यायाः पञ्चदशांशै(१५ं)रेवषडशीतिमुखम्। प्रसङ्गेऽस्मिन् सिद्धान्तदर्पणवचनम्-

**धनुषः सप्तविंशोंऽशस्त्रयोविंशोऽण्डजस्य च (मीनस्य)।**
**द्वन्द्वसेकोनविंशश्च स्त्रियाः पञ्चदशस्मृतम्।।**
**तत्तन्मासेषु सूर्यस्य षडशीतिमुखान्वयात्।**
**षडशीत्याख्यया प्रोक्ताद्वात्मकक्षेत्रसंक्रमाः।।(७)**

प्रसङ्गेऽस्मिन्नारदवचनम्-

**स्थिरभेष्वर्कसंक्रान्तिर्ज्ञेया विष्णुपदाह्वया। षडशीतिमुखं ज्ञेयं द्विस्वभावेषु राशिषु।।**
**तुलाधराजयोर्ज्ञेयं विषुवं सूर्यसंक्रमे।।(८)**

संक्रान्तेः पुण्यकालविचारः कथंभवतितदधुना चर्चयामः।

**संक्रान्तिकालादुभयत्र नाडिकाः पुण्या मताः षोडशषोडशोष्णगोः।**
**निशीथतोऽर्वागपरत्रसंक्रमे पूर्वापराहान्तिमपूर्वभागयोः।।(९)**

अर्थात् संक्रान्तिकालात्पूर्वं परञ्चषोडश-षोडशघटिकाः तस्य पुण्यकालः। आकल्य ३२घटीमानं संक्रान्तेः पुण्यकालः। ब्रह्मसिद्धान्ते संक्रान्तेः पुण्यकालः सार्द्धषोडशघटिकाः स्वीकृताः। आकल्य ३३ घटीमानंसंक्रान्तेः पुण्यकालः। रात्र्यर्धात्पूर्वं सूर्यसंक्रमणकालः स्यात्तदा पूर्वदिवसस्य परार्धसंक्रान्तेः पुण्यकालः। रात्र्यर्धात्परं (संक्रमणं) भवति चेत् पूर्वदिवसस्य पूर्वार्धेरेवसंक्रान्तेः पुण्यकालःभवति।

सूर्यसंक्रमणकाले कर्क-मकरराश्योः विशेषः-

**पूर्णेनिशीथे यदि संक्रमः स्याद्दिनद्वयं पुण्यमथोदयास्तात्।**
**पूर्वेपरस्ताद्यदियाम्यसौम्यायने दिनेपूर्वपरे तु पुण्ये।।(१०)**

अर्थात् पूर्णे निशीथेनाम अर्धरात्रसमये यदि सूर्यस्य राशिसंक्रमणंभवति चेत् संक्रमणसमयात् पूर्वापरदिनद्वयं पुण्यकालः भवति। अर्थात् पूर्वदिवसस्य मध्याह्नात् सूर्यास्तसमयपर्यन्तं तथाऽग्रिमदिवसस्य सूर्योदयात् मध्याह्नसमयपर्यन्तं स्नानदानादौ पुण्यकालः भवति। अयं नियमः कर्क-मकरसंक्रमणं विहाय अन्य दशसंक्रान्तीनांकृते प्रयुज्यते। तत्र उदयात्पूर्वं याम्यायनसंक्रमणे पूर्वदिवसे पुण्यकालः। अस्तात्परं सौम्यायनसंक्रमणे परदिवसे पुण्यकालः। दक्षिणायनापेक्षया उत्तरायणस्य विशेषमहत्वंवर्तते।

**याम्यसोम्यसंक्रान्तेः पुण्यकालस्यापवादवचनम् -**

**संध्यात्रिनाडीप्रमितार्कबिम्बादर्द्धोदितास्तादधउर्ध्वमत्र।**
**चेद्याम्यसौम्ये अयने क्रमात्सः पुण्यौ तदानींपरपूर्वधस्त्रौ।।(११)**

अर्थात् अर्कबिम्बस्य अर्धोदयास्तकालात् उर्ध्वं त्रिनाडीप्रमित: काल: सन्ध्याकाल:। तस्मिन् सन्ध्यासमये (प्रात: संध्यायां अथवा सायं संध्यायां ) क्रमेण दक्षिणायनस्य, उत्तरायणस्य च संक्रमणं यदि भवतितदासंक्रान्ते: पुण्यकाल एवं रीत्या विचार्यते। तद्यथा- क्रमेण दक्षिणोत्तरायणे परपूर्वघस्त्रौ पुण्यौ। अर्थात् यदि प्रात: संन्ध्यायां दक्षिणायनस्य प्रवृत्ति: स्यात्तदा सूर्योदयानन्तरं सम्पूर्णमह: पुण्यम्। यदि सायं सन्ध्यायामुत्तरायणस्य प्रवृत्ति: स्यात्तदा सूर्यास्तात्पूर्वं सम्पूर्णमह: पुण्यमिति चिन्तामणिकार:।

**विष्णुपदादिसंक्रमणेविशेष:-**

**याम्यायने विष्णुपदे चाद्यानाड्य: मध्यास्तुलाजयो:।**
**षडशीत्यानने सौम्ये परानाड्योऽतिपुण्यदा।।(१२)**

अर्थात् याम्यायने नामकर्कटसंक्रान्तौ, विष्णुपदेनाम (स्थिरराशौसंक्रमणे) आद्या: षोडशघटिका: पुण्या:, स्नानदानादौअनन्तफलप्रदा। पश्चात् षोडशघटिका: नतथा पुण्यफलदा:। तुला-मेषयो: मध्या:। नामपूर्वापरभावेन अष्टौ-अष्टौघट्य: पुण्यफलदा:।

षडशीत्यनने (द्विस्वभावराशौ ) तथा उत्तरायणसंक्रान्तौ संक्रान्तिकालात्परा अग्रिमा: षोडशघटिका: पुण्यदा। कर्केप्रागेव, मकरे पश्चादेव पुण्यकालेति निर्णय:। प्रसङ्गानुसारं सिद्धान्तदर्पणस्य मतं यथा-(१३)

**पूर्वोक्तक्रमसंसिद्धारविसंक्रान्तिसम्भव:। पुण्यनाड्यस्त्रयस्त्रिंशत् स्वमध्यस्थार्कसंक्रमा:।।**
**ग्राह्यादशसुसंक्रान्तिष्वयने दक्षिणे तु ता:। अन्तस्थसंक्रमा: सौम्यायने त्वादिस्थसंक्रमा:।।**
**अतिपुण्यतमा: प्रोक्ता: संक्रमासन्ननाडिका:। चलनासन्नता यत्र दिवास्नानादिकंतदा।।**
**तन्निशार्द्धादधश्चोर्द्धं सञ्चारेप्राक्परंतत:। आसन्नद्युदलं पुण्यं निशिथे चेत्तदातिथे:।।**
**संक्रान्तिकालनिष्ठाया यद्दिने महति-स्थिति:। तत्र कार्या: क्रिया एषा विचारोह्ययनादृते।।**
**रात्रौ याम्यायने पूर्वदिनस्यान्त्य दलंमतम्। सौम्यायने परदिनस्यादिमं पुण्यदं दलम्।।**
**अह: संक्रमणे पुण्यमह: कृत्स्नंप्रकीर्त्तितम्। स्मार्तैस्तथापि संक्रान्तेरासत्तिर्बहुमन्यते।।**
**उक्तोविधेरयं कालोनिषेधेत्वामिषादिन:। पूर्वास्त्रिंशपरास्त्रिंशद्ग्राह्या: पर्वाक्षनाडिका:।।**

तत्र समन्तरेवं प्रत्यपादि यत्- संक्रान्तिदिवस: कश्चन पर्वकाल:। अत: शुद्ध-सात्विकभोजनं तस्मिद्दिने कर्तव्यम्। अर्थात् आमिषादिभोजनंसंक्रमणात्प्राक्-परंत्रिंशत् नामसम्पूर्ण: षष्ठिदण्डात्मकोकाल: वर्जनीय:।

सौरमानानुसारेण धर्मसिन्धुग्रन्थे द्वादशराशिषु संक्रान्ते: पुण्यकाल:-(१४)

राशय: मे. वृ. मि. क. सिं. क. तु. वृ. ध. म.
कु. मी.
घट्यादिपुण्यकाल: प्रागुर्ध्व १५-१५ पूर्वा- १६ परा- १६ पूर्वा- ३० पूर्वा-१६परा-
१६ प्रागुर्ध्व १५-१५ पूर्वा-१६परा- १६परा- ४० पूर्वा-१६परा- १६

**सायनसंक्रान्तिषु पुण्यकाल:-**

**तथायनांशा: खरसाहताश्च स्पष्टार्कगत्या विहृतादिनाद्यै:।**
**मेषादित: प्राक्चलसंक्रमा: स्युर्दिनेजपादौ बहुपुण्यदास्ते।।(१५)**

अयनांशा: षष्ठिसंख्याभि: गुणितास्तत: स्पष्टार्कगत्या विहता:।लब्धफलंदिनघटीपलै: मेषादिद्वादशनिरयण-संक्रमणकालात्प्राक् चलसंक्रमा अर्थात् सायनसंक्रान्ते: पुण्यकाल: भवति। परन्तु नास्योपयोग: सायनसंक्रमणस्य। व्यवहारे केवलं स्मृतिशास्त्रनियमानुसारेण निरयणसंक्रमणस्योपयोग: स्नानदानादौ क्रियते।

**(वि.द्र.**-क्रान्तिवृत्तमेंजहाँअश्विनीनक्षत्रकास्थान है वह बिन्दु निरयणमेषादि है। सन्पातबिन्दुकापूर्वापरदोलनहोता है। अभीष्ट

समय में वह सम्पातजहाँरहता है वह सायन मेषबिन्दु है। क्रान्तिवृत्तमें निरयण मेषबिन्दु से सायन मेषबिन्दु पर्यन्त अंशादिमानको अयनांश कहाजाताहै।)

अपि च- **अर्कमानकला: षष्ट्यागुणिताभुक्तिभाजिता:।**

**तदर्धनाड्य: संक्रान्तेरर्वाक् पुण्यं तथापरे।।(१६)**

अर्थात् सूर्यसंक्रमणस्य मध्यकालात् रवि बिम्बार्द्धचलनकालतुल्यमेव पूर्वपश्चाच्च संक्रान्ते: पुण्यकाल: जायते। सूर्यस्य या विम्बमानकला: ता: षष्ठ्यागुणिताफलंस्वीकृत्य तत: सूर्यस्य स्पष्टगतिकलाभिर्भाजिता यल्लब्धं तत् मध्यसंक्रमणकालात् पूर्वे परेवा पुण्यकाल: स्यात्।

**संक्रान्त्युपयोगित्वात् जघन्य-बृहत्-समनक्षत्राणि-**

**समंमृदु-क्षिप्रवसुश्रवोऽग्निमघात्रिपूर्वास्त्रपभं बृहत्स्यात्।**

**ध्रुवद्विदैवादितिभं जघन्यं सार्पाम्बुपार्द्रानिलशाक्रयाम्याम्।।**

**जघन्यभे संक्रमणेमुहूर्ता: शरेन्दवोवाणकृता बृहत्सु।**

**खरामसंख्या: समभेमहर्घ-समर्घ-साम्यं विधुदर्शनेऽपि।।(१७)**

अर्थात् जघन्यनक्षत्रे सूर्यस्य संक्रमणेशरेन्दव: पञ्चदश(१५) मुहूर्ता:, बृहत्सुनक्षत्रेषु वाणकृता: (४५) मुहूर्ता:, समभे खरामसंख्या (३०)मुहूर्ता:, द्रव्याणां समर्घ-महर्घादीनां ज्ञानाय क्रियते। फलंविधुदर्शनेन ज्ञायते। तत्र शुक्लद्वितीयायां चन्द्रोदय: जघन्यनक्षत्रे स्यात्तदा तस्मिन् मासे द्रव्यानां महर्घता। बृहत् नक्षत्रेसमर्घता, तथा समसंज्ञकनक्षत्रे अर्घेसमता दृश्यते।

**विचार**:- ४५ मुहूर्ते सूर्यसंक्रान्तौ मासे अन्नस्य समर्घता।

३० मुहूर्ते सूर्यसंक्रान्तौ मासे अन्नस्य समता। नवासमर्घ: महर्घोवा।

१५ मुहूर्ते सूर्यसंक्रान्तौ मासे अन्नस्य महर्घताकदाचितदुष्प्राप्यं च भवति।

**कर्कसंक्रान्तौ अब्दविंशोपका:-**

**अर्कादिवारेसंक्रान्तौ कर्कस्याब्दविंशोपका:।**

**दिशोनखागजा: सूर्याधृत्योऽष्टादश सायका:।।(१८)**

अर्थात् अर्कसंक्रान्ति अर्कादिवासरे सति एतेऽब्दविंशोपका: ज्ञेया:। रविवासरेकर्कसंक्रान्तौदश(१०)विंशोपका:। सोमेविंशति:(२०)। भौमेअष्टौ(८)। बुधेद्वादश:(१२)। गुरौअष्टादश:(१८)। शुक्रेऽअष्टादश:(१८)। शनौपञ्च(५)विंशोपका: भवन्ति।

**वि.द्र**:-श्लोकेऽस्मिन् क्रमश: सप्तवासराणां संक्रान्ते: बलं विंशोपकशब्देन प्रतिपादितमस्ति। अधिकेविंशोपकेबले सुभिक्षम् अन्यथा अशुभमिति। अर्थात् सोम-बुध-गुरु-शुक्रवासरेषु कर्कसंक्रमणे सुभिक्षम्। परन्तु रविवासरे कर्कसंक्रान्तौ वर्षस्थिति: सामान्या । तथा भौमवासराशनिवासरे च कर्कसंक्रान्तौ वर्षस्थिति: न शुभाय भवति।

**करणानुसारं संक्रमणफलम्-**

**स्यात्तैतिले नागचतुष्पदे रवि: सुप्तो निविष्टस्तुगरादि पञ्चके।**

**किंस्तुघ्नऊर्ध्व: शकुनौसकौलवेऽनिष्ट: सम: श्रेष्ठइहार्घवर्षणे।।(१९)**

अर्थात् तैतिल- नाग-चतुष्पदकरणेषु रवि: सुप्त:(सोतेहुए) सन् संक्रमति।, फलं- अन्नस्य महर्घता, वृष्ट्याभाव:, कदाचित् वृष्ट्याधिक्यात् सस्यहानि:।

गर-वणिज-विष्टि-बव-बालवकरणेषु रवि: निविष्ट: (वैठकर) सन् संक्रमति। फलं- साधारणम्। किंस्तुघ्न-कौलव-शकुनिषु रविरूर्ध्व: (खडे होकर) सन् संक्रमति। फलं- सुभिक्षम्।

करणपरत्वेनसंक्रान्ते: वाहन-वस्त्रनिर्णय–

**सिंह-व्याघ्र-वराह-रासभ-गजा:वाहद्विषद्घोटका:**
**श्वाऽजौ गौश्चरणायुधश्च बवतोवाहा: रवे: संक्रमे।**
**वस्त्रं श्वेत-सुपीत-हारितक-पाण्ड्वा-रक्त-कालासितं**
**चित्रं कम्बलदिग्घनाभमथशस्त्रं स्याद् भुशुण्डीगदा।।(२०)**

अर्थात् बवादिएकादशकरणानां वाहनानि क्रमेण-
१.बव-सिंह:, २.बालव-व्याघ्र:, ३.कौलव-वराह:, ४.तैतिल-रासभ:, ५.गर-गज:, ६.वणिज- वाहद्विष:,(महिष:) ७. विष्टि-घोटक: ८. शकुनि-शुनक:, ९.चतुष्पद-मेष: १०. नाग- बलीवर्द: ११.किंस्तुघ्न- चरणायुध:(कुक्कुट:)।
अर्थात्बवादिएकादशकरणानांवस्त्राणि-
१.बव-श्वेत:, २.बालव- सुपीत:, ३.कौलव-हारितक:, ४.तैतिल- पाण्डुर:, ५.गर-रक्त:, ६.वणिज- कृष्ण:, ७. विष्टि- असितं (कज्जलवर्णं) ८. शकुनि- चित्रित:, ९.चतुष्पद-कम्बलवर्ण: १०. नाग-दिगम्बर:(नग्न) ११.किंस्तुघ्न- मेघवर्णयुक्त:।

**संक्रान्ते: शस्त्रंभक्ष्यं च निर्णय:-**

**खड्गोदण्डशरासतोमरमथो कुन्तश्च पाशोऽङ्कुशो-**
**ऽस्त्रंबाणस्त्वथ भक्ष्यमत्रपरमान्नं भक्ष्यपक्वान्नकम्।**
**दुग्धं दध्यपि चित्रितान्नगुडमध्वाज्यं तथाशर्करा-**
**ऽथोलेपोमृगनाभिकुंकुममथोपाटीरमृद्रोचनम्।।(२१)**

अर्थात्बवादिएकादशकरणानांशस्त्राणि क्रमेण-
१.बव- भुशुण्डी, २.बालव- गदा, ३.कौलव- खड्ग, ४.तैतिल-दण्ड:,
५.गर-शरासो (धनु:), ६.वणिज- तोमर:, ७. विष्टि- कुन्त:, ८. शकुनि- पाश:, ९.चतुष्पद- अंकुश:, १०.नाग- अस्त्रं, ११.किंस्तुघ्न- बाण:
अर्थात् बवादि एकादशकरणानां भक्ष्यम्
१.बव-अन्नम्, २.बालव- पायसम्, ३.कौलव- भिक्षान्नम्, ४.तैतिल- पक्वान्नम् ५.गर-दुग्धम्, ६.वणिज- दधि, ७. विष्टि-चित्रितान्नं(खिचिडी) ८. शकुनि- गुड: ९.चतुष्पद- मधु:, १०. नाग- घृतम् ११.किंस्तुघ्न- शर्करा।
संक्रान्ते: फलविषये मनुस्मृतौमनो: मतं यथा-

**संक्रान्तौ यानि दत्तानि हव्य-कव्यानि दातृभि:। तानि नित्यं ददात्यर्क: पुनर्जन्मनिजन्मनि।। (२२)**
**रविसंक्रमणे पुण्ये न स्नायाद्यदिमानव:। सप्तजन्मसुरोगी स्याद्दु:खभागीही जायते।।(२३)**

।। इतिसंक्रान्तिविचार:।।

**सन्दर्भग्रन्थसूची-**

१. सिद्धान्तशिरोमणौ गणिताध्याये कालमाने श्लोकांश:-१२
२. मुहूर्तचिन्तामणौ पीयूषधाराटीकायां संक्रान्तिप्रकरणे प्रतिपादितकाश्यपवचनम्
३. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-१
४. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-२-३
५. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-४
६. सूर्यसिद्धान्ते मानाध्याये श्लो. सं.-४
७. सिद्धान्तदर्पणे द्वाविंशप्रकाशेश्लो. सं.-४५-४६
८. मुहूर्तचिन्तामणौ पीयूषधाराटीकायां संक्रान्तिप्रकरणे प्रतिपादितनारदपवचनम्।

९. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-५
१०. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्,श्लो. सं.-६
११. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-७
१२. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-८
१३. सिद्धान्तदर्पणे द्वाविंशप्रकाशेश्लो. सं.-४९-५६
१४. धर्मसिन्धुग्रन्थे प्रतिसंक्रान्ते: पुण्यकालनिर्णय:
१५. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-९
१६. सूर्यसिद्धान्ते मानाध्याये श्लो.सं.-११
१७. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-१०-११
१८. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-१२
१९. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-१३
२०. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-१४
२१. मुहूर्तचिन्तामणि:,संक्रान्तिप्रकरणम्, श्लो. सं.-१५
२२. मुहूर्तचिन्तामणौ पीयूषधाराटीकायां संक्रान्तिप्रकरणे प्रतिपादितमनुस्मृतिवचनम्।
२३. मुहूर्तचिन्तामणौ पीयूषधाराटीकायां संक्रान्तिप्रकरणे शातातपोक्ति:।

अध्यापक:, ज्योतिषविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी



# भारतीयदर्शनेषु अध्यात्मचिन्तनम्

**पङ्कजकुमारतिवारी**

अध्यात्मचिन्तनं भारतीयदर्शनेषु अतिश्रेयस्करो मुख्यविषय: आस्तिकैर्मन्यते। यत: ''आत्मा वाऽरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निधितासितव्य: आत्मनो वा अरे दर्शनेन मत्वा विज्ञानेनेदं सर्वं विदितम्'' (बृहदारण्यकोपनिषद्)। **श्रोतव्य: श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभि:. मत्वा च सततं धेय इति दर्शनहेतव:**। अखिलमाध्यत्मिकं विवेचनं दर्शनशब्दान्तर्गते भवति। सूक्ष्मैक्षिकया याथार्थ्येण दृश्यते परीक्षते निरीक्षते तत्त्वार्थदर्शनमेव दर्शनपदवाच्यमस्ति। सत्यपि मतभेदे स्व-परपक्षालोचनविवेकनैपुण्यवैदुष्येण विश्ववाङ्मये भारतीयदर्शनानि प्रभाकर इव देदीप्यन्ते। यथा ''नैको मुनिर्यस्य मतं न भिन्नम्।''[१] यद्यपि भेदप्रभेदतया बहूनि दर्शनानि प्रसिद्धानि। अपरेषामपि दर्शनानां तत्त्वादेवताप्रमाणादिभिन्नतया बहुभेदा: प्रादुर्भवन्ति।[२] हरिभद्रसुरिणोक्तं मौलिकरूपेण दर्शनानि भवन्ति।

यथा - ''दर्शनानि षडैवात्र मूलभेदव्यपेक्षया। देवतातत्त्वभेदेन ज्ञातव्यानि मनीषिभि:।''[३]

तथा - ''बौद्धं नैयायिकं सांख्य जैनं वैशेषिकं तथा, जैमिनीयं च नामानि दर्शनानामामन्र्यते।''[४]

वेदप्रामाण्यवादिदार्शनिकभेदद्वयं तर्कप्राधान-शब्दप्रधानरीत्याऽवगम्यते। वेदप्रामाण्यं यैस्तर्कमाधृत्य स्वीक्रियते, ते परतप्रामाण्यवादिनस्तर्कप्रधानास्तथा च स्वत: प्रामाण्यवादिन: शब्दप्रधाना मन्यन्ते।

जीवपरलोकपुण्यपापाद्यास्ति वादिनामास्तिकानां वेदप्रामाण्यस्वीकुर्वतां न्यायवेदान्त-सांख्ययोगवैशेषिकमीमांसादर्शनानि तथा च वेदप्रामाण्यास्वीकुर्वद्यथावदविदिति- वस्तुस्वरूपविचारवतां नास्तिकानां

चार्वाकबौद्धजैनदर्सनानि दर्शनसेविभिमन्यन्ते। दु:खनिवृत्तेर्मुख्यकारणमात्मज्ञानमुपनिषस्तु दृश्यते - ''तरति शोकमात्मवित्''[५] ''तं दुर्दशं गूढमनुप्रविष्टं गुहहितं गह्वरेष्टं पुराणम्। अध्यात्मयोगाधिगमेन देवं मात्वा धीरो हर्षशोगौ जहाति।''[६]

नित्यात्मतत्त्वौपनिषज्ज्ञानमेव दर्शनमित्यभिप्रेत्य कथ्यते - ''सम्यग्दर्शनसम्पन्नः कर्मभिर्ननिबध्यते। दर्शनेन विहीनात्तु संसारं प्रतिपद्यते ।''[७] मननमहत्वमात्मज्ञानसम्बन्धिश्रुतिाप्रतिपादितमस्ति।

यथा - ''आत्मा वाऽरे द्रष्टव्य: श्रोतव्यो मन्तव्यो निदिध्यासितव्य:[८]'' ''अत्र मननं तुं तर्को, यतो युक्त्या सम्भावितत्वानुसन्धानं मननं तु तत्।[९]'' ''न्यायचर्चेयमीशस्य मननव्यपदेशभाक्। उपासनैव क्रियते श्रवणान्तरतागता।[१०]''

शास्त्रवैशिष्ट्यं च शास्त्रविद्भिर्ज्ञायते। यथा - ''प्रदीप: सर्वविद्यानामुपाय: सर्वकर्मणाम्। आश्रय: सर्वधर्माणां विद्योद्देशे प्रकीर्त्तिता।''[११] युक्तिशास्त्रं तर्कशास्त्रं वाऽस्माकं न्यायशास्त्रमिति। सुविदितं शास्त्रविधि: - ''युक्तियुक्तमुपादेयं वचनं बालकादपि। अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मयोनिना।''

महर्षिणा कणादेनोक्तं, ''यतोऽभ्युदय नि:श्रेयससिद्धि: स धर्म:''[१२] धर्मदर्शनयोरात्म-चिन्तनानुकूलानुष्ठानप्रधानयो: सापेक्षत्वं विधीयते। 'अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इति वचनादाचारशुद्धौ कर्मविशुद्धौ च नैतिकविचार: समनुष्ठेयस्तत्त्वज्ञै:। ''जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च''[१३] इति सनातनपारम्पर्येण कर्मफलानुसारं पुनर्जन्म स्वीक्रियते। अज्ञानवशगो जीवो बन्धनमापद्य भूयो भूयो जायते म्रियते च। जन्ममरणचक्रमनादि प्रचलति, दु:खसंसारसागरान्मुक्तिरेव केवलं मुमुक्षोश्वरममुद्देश्यं मन्यते। तत्तु केवलं निराकारिकरूणासागरज्ञानसूर्यपरमात्मशिवप्रसादादेव प्राप्यते, नान्य: पन्था विद्यतेऽयनाय।

शास्त्रान्तरे आन्वीक्षिकीनिन्दा प्रयुज्यते। यथा - धर्मशास्त्रेषु मुख्येषु विद्यमानेषु दुर्वुधा:। बुद्धिमानान्वीक्षिकीं प्राप्य निरर्थं प्रवदन्ति ते।[१४] इति शास्त्रविद्भि: कटुकथनं न युक्तिसहं मन्यते। सर्वशास्त्रप्रदीपयौक्तिकेश्वरप्रतिपादनसमर्थान्वीक्षिकीनिन्दात्वल्पबुद्धिप्रयासस्तथापि यदनुमानं प्रत्यक्षागमविरुद्धं चेतन्यायाभास:।

उक्तं च प्रत्यक्षागमाभ्यामीक्षितस्यान्वीक्षणमन्वीक्षा, तया प्रवर्तते इति आन्वीक्षिकी न्यायविद्या न्यायशास्त्रम्। यत्पुनरनुमानं प्रत्यक्षागमाविरुद्धन्यायभास: स इति।[१५] तथैव सयुक्तिकनास्तिकप्रवरबौद्धमतखण्डनप्रकाण्डयशस्विसर्वशास्त्रान्वीक्षिकी-महत्वव्यथां स्वयमनुभूय तथाकथितशास्त्रकारो मनोवैज्ञानिक्यवस्थामप्राप्नोत्। यथा - महाकविना भारविणोक्तं - ''आतपे धृतिमता सह बध्वा यामिनीविरहिणा विहगेन। सेहिरे न किरणा हिमरश्मेर्दु:खिते मनसि सर्वमसह्यम्।''[१६]

अज्ञानान्धतमोनिमीलितनयन-जन्ममरणदु:खदावाग्निविदग्धजनकरुणवरुणालये-श्वरानुकम्पादृतमुमुक्ष-वस्तपत्रयविनाशप्रवृत्तयो वारम्वारं योगस्वाध्यायसम्पत्यैकविनश्वर-निराकारसच्चिदानन्दस्वरूपमीश्वरमापद्यन्ते। यथोपनिषत्सु - ''एष सर्वेश्वर एष सर्वज्ञ एषोऽन्तयाम्येष योनि: सर्वस्य प्रभाबाप्ययौ हि भूतानाम्, नान्त: प्रज्ञं न वहि: प्रज्ञं नोभयत: प्रज्ञमदृष्टमव्यवहार्यमग्राह्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शान्तं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय:।''[१७]

अकामं यथार्थमेत्य परमेश्वरं ज्ञानी मृत्योर्न विभेति तपोमूर्त्तिर्यथा -

''यथा अकामो धीरो अमृत: स्वयम्भूरसेव तृप्तो न कुश्चनौन:।''[१८]

भाष्यकार: शङ्कराचार्य ईश्वरविषयुक्तवान् - ''ईश्वरस्तु पर्यन्यवद् द्रष्टव्य:, हि पर्यन्यो ब्रीहियवादिसृष्टौ साधारणं कारणं भवति, ब्रीहियवादिवैषम्ये तु तत्तद्वीजगतान्यैवासाधारणानि सामर्थ्यानि कारणानि भवन्ति। एवमीश्वरो देवमनुष्यादिसृष्टौ कारणं भवति। देवमनुष्यादिवैषम्ये तु तत्तद्जीवगतान्येवासाधारणानि कर्माणि कारणानि भवन्ति। एवमीश्वरसापेक्षत्वान्न वैषम्यनिर्घृणाभ्यां दुष्यति।''

''अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम्' इति कृतकर्मणां विपाकरूपेण उच्चावचकुलेषु जन्म अवश्यमेव भवतीति पुनर्जन्मस्वीकृद्भिर्भारतीयदार्शनिकै: सहर्षं मन्यते। यत: ''जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च।''[१९] अज्ञानवशगो जीवो बन्धनमवाप्य भूयो भूयो जायते म्रियते चैव दृश्यते। 'पुण्यो वै पुण्येन कर्मणा भवति पाप: पापेनैव'[२०]। मनुष्य:

कर्मानुसारं शुभमशुभं जन्म प्राप्नोति, तादृक्कुले परिवारे च जन्म लभते। प्रातिभचातुर्थं विशिष्टगुणगाम्भीर्यं तद्राहित्यं च पूर्वजन्मकृतकर्मविपाक एव स्मर्त्तव्यमिति ।

मनसा वाचा कर्मणा अहिंसापालनं सत्यपरिपालनं च जनहितं विश्वहितं विश्वशान्तिद्योतकत्वमवाप्नोति। तपोमयं जीवनं सदैव यापयेद् यतस्तपसैव शुध्यति जीवनम्। अहिंसा परमं तप: इति सर्वैर्मन्यते। यत: ''अहिंसाप्रतिष्ठायां तत्सन्निधौ वैरत्याग:''[२१]। जगत्यस्मिन् किमपि कर्म नास्ति यदहिंसया न साध्यमस्ति। यत: 'अहिंसयैव भूतानां कार्यं श्रेयोऽनुशासनम्। वाक् चैव मधुरा श्लक्षणा प्रयोज्या धर्ममिच्छता[२२]।'

कस्यापि वस्तुनो याथार्थ्येण प्रतिपादनं प्रकाशनं वेति सत्यमिति । दार्शनिकदृष्ट्या चिरन्तनं शाश्वमेव सत्यमस्ति। व्यवहारिकदिशा सत्यव्याख्यानावसरे 'सत्यं ब्रूयात् प्रियं ब्रूयात्, न ब्रूयात् सत्यमप्रियम्। प्रियं च नानृतं ब्रूयाद्, एष धर्म: सनातन:[२३]।'

**संदर्भसूची -**


१. महाभारतम्.वि.५१
२. मणिभद्र: .पृ.५०
३. षड्दर्शनसमुच्चय:.पृ.१४७
४. षड्दर्शनसमुच्चयवृत्ति:.पृ.५७
५. छा.उप., ७/१/३
६. क. उप., १/२/१२
७. मनुस्मृति: ६/७४
८. बृह. उप. २/४/५
९. षड्दर्शनम् .पृ.१२०
१०. न्यायकुसुमाञ्जलि:, १/३
११. न्यायभाष्यम् .भू.पृ.१५
१२. वैशेषिकसूत्रम् .२
१३. श्रीमद्भागवद्गीता २/२७
१४. वा.रामायणम्.अ.१००/३९
१५. न्यायभाष्यम् .पृ.४३
१६. किरातार्जुनीयम् ९/३०
१७. माण्डूक्योपनिषत्.७
१८. अथर्ववेद १०/८/४४
१९. श्रीमद्भगवद्गीता २/२७
२०. बृहदारण्यकोपनिषद् २/१३
२१. योगदर्शनम् २/३५
२२. मनुस्मृति: २/१५९
२३. साङ्ख्योगदर्शनं सू.२/३५(मनुस्मृति:)


संविदाध्यापक:, सांख्ययोगविभाग:,
केन्द्रियसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:, पुरी



# योगशब्दस्यार्थ: विमर्शश्च

डॉ. प्रदीपकुमारसाहु:

इह खलु सुखदु:खमोहमये संसारे जीवा: त्रितापै: पीड्यन्ते। तेषां तत्तत्पीडाविनाशाय दर्शनशास्त्रं मोक्षदानाय च गर्जति। जन्मन: आरभ्य मृत्युं यावत् मनुष्य: एकस्मिन् अवधौ तिष्ठति। तस्मिन्नवसरे स: किञ्चित् आकलयति संञ्चिनोति च, पुन: प्रवृत्तिपथे विचरति। जनहिताय किमपि परिहरति नूतनतया च किमपि विषयीकरोति। जनहिताय जनानां प्रकृतपथनिर्देशनाय मुक्तिलाभाय वा प्राचीनान् कांश्चित् उपायविशेषाननुसरति। स एव उपायविशेषो भवति दर्शनम्।

षडास्तिकदर्शनेषु योगदर्शनमन्यतम्। अस्य दर्य्शनस्य प्रणेता महर्षिपतञ्जलि:। ''योग'' शब्द: युजिर् योगे इति धातो: कर्त्तरि घञ् प्रत्ययेन निष्पद्यते। अस्य 9योग'' शब्दस्यार्थ: भवति संयोग:। अर्थात् नरनारायणयो: सम्बग:, एकीकरणसामग्री वा योगशब्दस्यार्थ:। क्रियात्मकदृष्ट्या साधनसैव नाम योग:। एवञ्च नरस्य नारायणेन सहेक्यसम्पादनाय यत्साधनमुपदिष्टं तदेव योग शब्दस्याभिप्राय:।

वस्तुतो योगशब्द: एकाग्रतार्थकाद् युज् समाधौ इति धातोरेव निष्पद्यते। यतोहि अष्टाङ्गयोगेषु नियमत३ चित्तस्येकाग्रता अपेक्षिताऽस्ति।युज्यते समाधत्तेऽनेनेति करण वयुत्पत्त्या साधितस्य योग शब्दस्य नरस्य नारायणेन सह सम्बन्धे सहायकत्वात् योगस्याष्टाङ्गयोगैवार्थ:। भावव्युत्पत्या निष्पन्नस्य योगशब्दस्य मुख्यार्थो जीवस्य ईश्वरेण सह संयोग: एव।

यद्यपि भगवता पतञ्जलिना स्वकीये योगसूत्रे "योगश्चित्तवृत्तिनिरोधः इत्येकं सरलं निर्वचनं योगशबदस्य कृतमस्ति, परन्तु अस्ययोगशबदस्य निर्वचनं बहुधा दृश्यते। देवीभागवते योगशब्दस्य प्रेमार्थे प्रयोगः दृश्यते। यथा -

**स्वीयान् गुणान् प्रविततान् प्रवदस्तथासौ। तां प्रेमदामनुचकार स योगयुक्तः।।**[१]

अस्मिन् श्लोके प्रेमरज्वाकृष्टस्य निष्क्रियस्य अनन्तब्रह्माण्डनायकस्य विविधगुणगणनिलयस्य प्रेम्णैव योगयूक्ता संघटते। कठोपनिषदि योगस्य लक्षणविषये उक्तमस्ति यत् - **तं योगमिति मन्यन्ते स्थिरमिन्द्रियधारायाम्।**[२] इति

तैतिरीयोपनिषदि योगस्य लक्षणविषये वर्णितमस्ति यत् - **"योगः आत्मा"**[३] इति।

प्रसङ्गेऽस्मिन् श्वेताश्वेतरोपनिषदि टङ्कितमस्ति यत् - **"त्रिरुननतं स्वाप्य समं शरीरम्"**[४]। इति

महर्षिवसिष्ठस्य मते योगलक्षणं भवति यत् -

**द्वौ क्रमे चित्तनायास्य योगो ज्ञानं च राघव।**
**योगवृत्तिनिरोधो हि ज्ञानं सम्यगवेक्षणम्।।**[५]

वायुपुराणे आध्यात्मिकविषयमधिकृत्य योगशब्दस्यापरोऽर्थः उक्तमस्ति यत् -

**इत्युक्तः स तदा प्राह क्रियायोगं महात्मनाम्।**
**नारायणमुपकारार्थं दुःखविच्छित्तिकारकम्।।**[६]

अग्निपुराणे योगसाधनान्तर्गतस्य योगशब्दस्य ब्रह्मणि संयोगोऽर्थः वर्णितमस्ति। तत्रैवोक्तमस्ति यत् -

**एआत्माप्रयत्नसापेक्षा विशिष्टा या मनोगतिः।**
**तस्याः ब्रह्मणि संयोगो योग इत्यभिधीयते।।**[७]

योगशब्दस्य इतोऽपिव्यापकमर्थं दर्शयितुं भगवता व्यासेन श्रीमद्भागवतपुराणे योगशब्दस्य ज्ञानकर्मभक्तयोग अर्थाः निर्द्दिष्टाः। तत्रोक्तमस्ति -

**योगस्त्रयो मया प्रोक्ता नृणां श्रेयो विधित्सया।**
**ज्ञानं कर्म च भक्तिञ्च नोपायोऽन्योऽस्ति कुत्रचित्।।**[८]

श्रीमद्भगवद्गीतायां योगशब्दमाधारीकृत्य बहवः श्लोकाः विभिन्नेष्वर्थेषु विद्यन्ते। तानि भवन्ति यथा -

**(१) सिद्ध्यसिद्ध्योः सम भूत्वा समत्वं योग उच्यते।**[९]

**(१) श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला**
**समाधावचला बुद्धिस्तदा योगमवाप्स्यसि।।**[१०]

**(३) योगयुक्तो विशुद्धात्मा विजितात्मा जितेन्द्रियः।**
**सर्वभूतात्मभूतानां कुर्वन्नपि न लिप्यते।।**[११]

**(४) अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते।**
**तेषां नित्यभियुक्तानां योगक्षेमं वहाम्यहम्।।**[१२]

**(५) बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते।**
**तस्माद्योगाय युज्यस्व योगः कर्मसु कौशलम्।।**[१३]

इतोऽपि प्राचीनभारतीयवाङ्मये योगयाब्दो विभिन्नेषु व्यापकेषु अर्थेषु व्यवह्रियते। यथा-

**(१) जीवात्मा-परमात्मनोः संयोगो योगः।**
**(२) प्राणापानयोः संयोगो योगः।**
**(३) संख्यासंङ्कलना योगः।**
**(४) प्रकृतिप्रत्ययसंयोगो योगः।**
**(५) सूर्य-चन्द्रमसोः संयोगो योगः।**
**(६) शिवशक्ति सामरसं योगः।**
**(७) जीवात्मा-परमात्मनोः अद्वैतानुभूतिर्योयीगः।**
**(८) चित्तवृत्तिनिरोधो योगः।**
**(९) कर्मसु कौशलं वा योगः।**
**(१०) द्वयोर्वस्तुनोः संयोगो योगः।**
**(११) संसारसागरतः पारगमनयुक्तिर्वा योगः।**
**(१२) सामरस्यं वा योगः।**

योगशब्दस्य बहबः पर्य्यायवाचकशब्दाः सन्ति। यथा - समाधिः, चित्तवृत्तिनिरोधः, सर्ववृत्तिनिरोधः, राजसतामसवृत्तिराहित्यम्, राजसतामससत्यादि वृत्तिराहित्यादयः।

डाँ. सर्वपल्लीराधाकृष्णन्महोदयेन **भारतदर्शनमिति** ग्रन्थे योगाङ्गानां सेवनस्य लाभविषये उक्तं यत् -

By following the principles of the Yoga, such as heightening the power of concentration, arresting the vagaries of mind,one can master one's soul even as an athlete master is body. the Yoga helps us to reach a higher level of consciousness, through transformation of the psychic organism which enables it to get beyond the limits set to ordinary human experience.[14]

अत्र क्रियायोगान्तर्गतस्य योगशब्दस्य समाराधनमर्थो विभाति। आध्यात्मिका- आधिभौतिकै दुःखैः परिपीड्यमानस्य पुंसो दुःखविच्छित्तये परमस्य पुरुषस्य समाराधने खेदात्यन्ताभावो भवतीति सुनिश्चितम्। अत एवोक्तम्-

**तमाराध्य जगन्नपथं क्रियायोगेन बाडवा।**
**अग्नौ मोक्षं परं जग्मुस्तस्मात्तन्मोक्षकारणम्।।**[१५]

एवं गीताया बहुषु स्थलेषु विभिन्नार्थे योगशब्दः प्रयुक्तोऽस्ति। यथा "योगः कर्मसु कौशलम्"[१६] इत्यत्र कर्मकुशलतायां योगशब्दः प्रयुक्तोऽस्ति। "समत्वं योग उच्यते[१७] इत्यत्र समत्वमर्थोऽस्ति। इयं विविधप्रकरणेषु सांख्यकर्मज्ञानविज्ञानशब्दैः सह योगं भजमानो योगशब्दोऽनेकार्थतामवगाहमानः स्वार्थस्य व्यापकतामभिव्यनक्ति। एवं सत्यपि योगदर्शनस्थयोगशब्दस्य चित्तवृत्तिनिरोध एवार्थः। यतो निरुद्धचित्तवृत्तेः पुरुषस्यैव परमात्मसाक्षात्कारयोग्यता संपद्यते। अनेकासां विभूतीनामपि प्रादुर्भावो भवत्यञ्जसा। अतो योगशब्दस्य नानार्थकता स्फुटैव। शास्त्रचिन्तापरायणैकबुद्धिभिः स्वप्रयोजनपरवशतया यत्र यादृगर्थोऽपेक्षते तत्र तादृशेनार्थेन शास्त्रतात्पर्यमवगन्तव्यं "यत्परः स शब्दार्थः" इति न्यायात्।

**पदटीका**

१. देवीभागवत - ९/३/५
२. कठोपनिषद - २/३/११
३. तैतिरीयोपनिषद् - ७/५/५
४. श्वेताश्वेतरोपनिषद् - २/८
५. योगवार्तिक
६.वायुपुराण - १७/२५
७. अग्निपुराण - ६/७/३१
८. श्रीमद्भागवत्पुराण - ११/२०/६
९. श्रीमद्भगवद्गीता - २/४८
१०. श्रीमद्भगवद्गीता - २/५३
११. श्रीमद्भगवद्गीता - ५/७
१२. श्रीमद्भगवद्गीता - ९/२२
१३. श्रीमद्भगवद्गीता - २/०५
१४. Indian Philosophy
१५. वायुपुराण - ९/३५
१६. श्रीमद्भगवद्गीता - २/५०
१७. श्रीमद्भगवद्गीता - २/४८

**सन्दर्भाः -**


१.षड्दर्शनसूत्रसंग्रहः - जे.एल.गुप्ता,चौखम्बासंस्कृतप्रतिष्ठान,दिल्ली - २०१२
२.भारतीयदर्शनम् - शशिप्रभाकुमार,विद्यानिधिप्रकाशन,दिल्ली - १९९९
३. श्रीमद्भगवद्गीता - गीताप्रेस, गोरखपुर
४. योगवशिष्ठः(भा-१)- श्रीरामजीशर्मा-संस्कृतसंस्थान खजाकुतुब वरेली, यु.पि
५. योगवाशिष्ठः- महर्षिवाल्मीकिः- नागप्रकाशन्-१९९८
६. योगसारसंग्रहः- विज्ञानभिक्षुः- ईष्टर्न बुक् लिंकर्स, दिल्ली-१९८१
७. योगदर्शनम् - भारतीयविद्याप्रकाशन - वाराणसी - १९६३



सहायकाचार्यः, सर्वदर्शनविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी


❖❖❖

# स्मृतिपुराणागमानुसारं गुरोः महत्वानुशीलनम्

डॉ.कृष्णचन्द्रकविः

**अखण्डमण्डलाकारं व्याप्तं येन चराचरम्।**
**तत् पदं दर्शितं येन तस्मै श्रीगुरवे नमः।।**

भारतीयसंस्कृतौ परम्परायां गुरोः महिमा सृष्टेरारम्भकालतः वर्तते। गुरुह्येव मानवानामज्ञानरूपान्धकारं ज्ञानाञ्जनशलाकया प्रज्ञाचक्षुरुन्मिलनपूर्वकं नाशयति इहलौकिकपारलौकिककर्मणि तस्य सामर्थ्यं च विकासयति। गुरुणा विना न कोऽपि जनः कर्मणि कुशलः भवितुं नार्हति। यस्य कस्यापि कार्यस्यादौ गुरोः निदेशेन कार्यं कर्त्तव्यमिति अस्माकं भारतीयानामस्ति सदा भावना । अतः गुरोः महत्वं मानवसमाजे सर्वतोपरि वरीवर्तते। गुरुशब्दस्यानेकेपारिभाषिकशब्दाः वर्तन्ते यथा गुरु आचार्य उपाध्यायः शिक्षक इत्यादयः। प्राचीनसाहित्यास्यालोचनायां सुस्पष्टं प्रतिभाति यत् आध्यात्मिकसाधनक्षेत्रे गुरोः शरणमपरिहार्यम्। दीक्षाग्रहणं विना आध्यात्मिकसाधना अपूर्णा स्यादिति प्राचीनशास्त्रकाराणां मतम्। अस्माद्धेतौ कुलार्णवतन्त्रे प्रोक्तमस्ति -**तस्मात् सर्वप्रयत्नेन गुरुणा दीक्षितो भवेत्।** (कु० त० १४) श्रीमद्भागवतमहापुराणकारोऽपि प्रकृष्टमानवस्य निर्मातुः गुरोः महिमानमङ्गीकृत्योल्लिखति श्रेष्ठज्ञानोपलब्धये शब्दब्रह्मणि निष्णातस्य सद्गुरोः समक्षं गत्वा तत्र अस्य जगतः उपादाननिमित्तकारणभूतस्येश्वरस्य धर्मान् अवश्यमेव शिक्षेत।

**तस्माद् गुरं प्रपद्येत जिज्ञासुः श्रेय उत्तमम्।**
**शाब्देपरे च निष्णातं ब्रह्मण्युपशमाश्रयम्।।**
**तत्र भागवतान् धर्मान् शिक्षेत् गुर्वात्मदैवतः।।श्रीमद्भा ११/३/२१-२२**

एवं मुण्डकोपनिषद्यपि स्पष्टमुल्लेखो दृश्यते ब्रह्मज्ञगुरुणा संयतेन्द्रियाय प्रशान्तचित्ताय सर्वदा समीपमागताय शिष्याय तत्त्वोपदेशः कर्त्तव्य इति।

**तस्मै सः विद्वान्नुपसन्नाय सम्यक् प्रशान्तचित्ताय शमान्तवताय।**
**येनाक्षरं पुरुषवेदसत्यं प्रोवाच तां तत्वतो ब्रह्मविद्याम्।।मुण्डकोपनिषद् १/२/१३**

एवं भूतमहत्वशालिनः गुरोः महत्वमर्थं च व्याकरणनिरुक्तिदिशा मयात्र प्रतिपाद्यते। वैयाकरणाः अस्य शब्दस्य निष्पत्तिः गृशब्दे **(गृणाति)गृ निगरणे (गिरति/गिळति** )इति धातौ उ प्रत्यये कृते भवतीति प्रतिपादयन्ति। **गृ शब्दे गृणाति उपदिशति तत्वं वेदादिशास्त्राणि आत्मज्ञानसाधनानि वा इति गुरुः** अर्थात् येन आत्मज्ञानसाधकानि वैदिकतत्वानि धर्मज्ञानप्रतिपादकोपदेशाश्च दीयते स गुरुपदवाच्यः। अस्य शब्दस्यापरः अर्थः अधोलिखितरूपेण प्रतिपादितो भवति । **गृ सेचने** । गिरति सिञ्चति ज्ञानवारिणा शिष्यहृदयक्षेत्रं योऽसौ गुरुः अर्थात् ज्ञानरूपकवारिणा शिष्यस्य हृदयररूपं क्षेत्रं सिञ्चति। **गृ निगरणे** गिरति गिलति अज्ञानम् अर्थात् यः अज्ञानरूपान्धकारं गिलति सः गुरुपदवाच्यः ।

**गुरी उद्यमने** । गुरुते सत्पथिप्रवर्तयति शिष्यमिति गुरुः शिष्यं सदा सर्वदा सत्पथि प्रेरयति यः सः गुरुपद वाच्यः । **गीर्यते स्तूयते देवगन्धर्वमनुष्यादिभिः** । **गीर्यते स्तुयते महत्वादिति वा** अर्थात् देवगन्धर्वमनुष्यादयो यं स्तुन्वन्ति असौ गुरुपदवाच्यः। अस्य धातोः प्राधान्येन ज्ञानप्रदानमुपदेशप्रदानं वेत्यर्थो जायते। यस्य विस्तृतरूपेणालोचनायां गुरुशब्दः सामान्यरूपेण शिक्षकमेव बोधयति। आङ्ग्लभाषायां (टिचर) इति शब्दोच्चार्यतेऽस्माभिः ततु संस्कृतभाषायां व्यवहृतगुरुशब्दस्य सम्भवतः क्रमविकासः इति मन्यन्ते विपश्चितः पश्चिमाः। आचार्यस्य पाणिनेः मतानुसारं गुरुशब्दस्य स्थाने गरीयस् गरिष्ठः गरिमन् इत्यादिशब्दानां प्रयोगे च एषा सम्भावना किंचित् बलवती जायते। परं व्याकरणदिशा गुरुशब्दस्यार्थचिन्तनेन तस्य महत्वं रहस्यमपि सम्यक् प्रतिपादितो नस्यादतोस्य रहस्यात्मकतथ्यं महिमानं च ज्ञातुं गुरुपदस्य रसास्वादनाय तन्महिमप्रकाशकानां शास्त्राणामालोडनमस्माभिः अवश्यमेव करणीयम्। गुरोः महत्वं अद्वयतारकोपनिषदि एवं प्रोक्तमस्ति-

**गुशब्दस्त्वन्धकारो स्यात् रुशब्दस्तन्निरोधके ।**
**अन्धकारनिरोधित्वात् गुरुरित्यभिधीयते।।गुरुगीता १**

अर्थात् "गु" नाम अन्धकार: रुकार: स्तस्य निरोधकोऽस्ति अत: गुरु: शिष्यस्याज्ञानरूपान्धकारस्य नाशकोऽस्ति। तन्त्रसारे अस्य महत्वमेवमुक्तमस्ति।

**गकार: सिद्धिद: प्रोक्तो रेफ: पापस्य हारक:।**
**उकारविष्णुरव्यक्तस्त्रितयात्मा गुरु: पर:।।तन्त्रसार:**

गकार: सिद्धिदायको रेफस्तु पापहारक: उकारश्च अव्यक्तविष्णुरस्ति। एभि: स्त्रिभि: निर्मितस्य गुरुपदस्यार्थो परमगुरुं बोधयति। गुरुगीतायामेवं प्रकारेण कथितमस्ति गुकार: अन्धकारस्य वाचक: रुकार: तेज: इति उच्यते । अतो अन्धकारग्रासको ब्रह्मगुरुरेवास्ति । अपरं च गुकार: मायादीनां प्रकाशक: परं रुकारस्तु माया भ्रान्तिविनाशकोऽस्ति अत: गुरु: सर्वथा सांसारिकमायाया: नाशकोऽस्ति।

**गुकारस्त्वन्धकारश्च रुकारस्तेज उच्यते।**
**अज्ञानग्रासकं ब्रह्म गुरुरेव न शंसय:।।**
**गुकार: प्रथमो वर्णर्मायादिगुणभासक:।**
**रुकारो द्वितीयो ब्रह्म माया भ्रान्ति विनाशनम्।।** गुरुगीता २३-२४

एवं प्रकारेण गुरुशब्दस्यापरं निर्वचनमप्यस्ति यस्यार्थो भवति ब्रह्मज्ञानम्-

**गुकार: सदिति प्रोक्तो रुकारज्ञानवाचक:।**
**ब्रह्मज्ञानैकरूपत्वात् गुरुरित्यभिधीयते।।**

तान्त्रिकग्रन्थागमसारे गुरुशब्दस्य निर्वचनमेवमधोलिखितरूपेण कृतमस्ति। तत्र व्यञ्जनवकार: रकार: स्वर उकारश्च एवं प्रकारेण गुरुशब्दं त्रिधावर्गीकररणं कृत्वा ग आध्यात्मिकसिद्धि: र पापविनाशक: उकारश्च शिवस्य द्योतक: इति प्रतिपादितोऽस्ति। अस्य मतानुसारं गुरु: शिष्यस्य पापान् प्रक्षालयति आध्यात्मिकसफलताञ्च ददाति।

**गकार: सिद्धिद: प्रोक्तो रेफपापस्य दाहक:।**
**उकार: शम्भुरित्युक्त: स्त्रितयात्मा गुरु: स्मृत:।।**
**गकारज्ञानसम्पत्ति: रेफस्तत्वप्रकाशक:।**
**उकारच्छिवतादात्म्य दद्यादिति गुरुस्मृत:।। वाचस्पत्ये आगमसारवचनम्।**

**गुरो भेदा:**

अनेकेषु शास्त्रेषु गुरो: महत्वं बहुश: प्रतिपादितमस्ति। मनुना गुरो: त्रिधावर्गीकरणं कृतं तद्यथा आचार्य उपाध्याय: गुरु:। तत्र तेषां लक्षणमधोलिखितरूपेण प्रतिपादितमास्ति ।

**उपनीय तु य: शिष्यं वेदमध्यापयेत् द्विज:।**
**सकल्पं सरहस्यं च तमाचार्य: प्रचक्षते।।**
**एकदेशं तु वेदस्य वेदाङ्गान्यपि वा पुन:।**
**योऽध्यापयति वृत्यर्थमुपाध्याय: स उच्यते।।**
**निषेकादिनि कर्माणि य: करोति यथा विधि:।**
**सम्भावयति चान्नेन स विप्रो गुरुरुच्यते। मनु २/१४०-४२**

कुलार्णवतन्त्रे प्रेरकसूचकवाचकदर्शकशिक्षकबोधकरूपेण गुरो: षड्भेदा: प्रदर्शिता:। एतेषां निदर्शनमित्थं तत्र अवलोक्यते।

**प्रेरकसूचकश्चैव वाचको दर्शकस्तथा।**
**शिक्षकबोधकश्चैव षडैते गुरव: स्मृता:।।**

अन्यतन्त्रग्रन्थेषु गुरो: द्वौ भेदौ कृतौ स्त: तत्र प्रथम: दीक्षागुरु: अपरस्तु शिक्षागुरु:। साधनादिव्यापारेषु दीक्षागुरु: शास्त्राध्ययनार्थं च शिक्षागुरो: ग्रहणं कर्त्तव्यमिति तत्र प्रतिपादितमस्ति।

**गुरुस्तु द्विविधो प्रोक्तो दीक्षा शिक्षा प्रभेदत:।**

**आदौ दीक्षागुरुप्रोक्तो शेषे शिक्षागुरुर्मत:।।पि०तन्त्र १२/२**

गुरुदेव:

**गुरुर्ब्रह्मा गुरुर्विष्णु गुरुर्देवो महेश्वर:।**

**गुरु: साक्षात् परं ब्रह्म तस्मै श्रीगुरवे नम:।।गुरुगीता**

आध्यात्मिकदृष्ट्या गुरो: रहस्यज्ञानस्यातीवमहत्वपूर्णपक्षमिदमस्ति यद् शिष्य: गुरुं न केवलं मानवरूपेण गणयति अपि तु तं ब्रह्माविष्णुमहेशरूपेण कलयति गुरु: आत्मन: कृते भगवत अवतार इति चिन्तयति च। शिष्येण गुरो: पार्थिवशरीरं न केवलं शरीरमपितु ईष्टदेवस्य मुर्त्तिमान् रूपमिति चिन्तनीयम्। गुरुं प्रति असाधारणप्रेमश्रद्धां विना साधक: स्वकीयाध्यात्मिकप्रगतौ सफलं न स्यात्। प्राचीनग्रन्थेषु विषयेऽस्मिन् बहुबलं दत्तमस्ति। तत्त्वस्यास्य प्रथमप्रकाशक: श्वेताश्वेतरोपनिषद् गुरो: देवत्वविषये अस्पष्टरूपेण प्रतिपादयति । ब्रह्मज्ञानस्योपरि तथ्यात्मकरूपेण पर्यालोचनं विधाय आध्यात्मिकदिशि सफलता प्राप्तये ईश्वरं तथा गुरुं प्रति प्रेमश्रद्धासमर्पणभावस्य प्रदर्शनं नितान्तप्रयोजनमिति प्रतिपादयन् उद्घोषयति यत् स ह्येव मानव: अस्मिन् प्रतिपादितध्रुवसत्यस्यावबोधनाय समर्थो स्यात् यस्य खलु ईश्वरे अपरिमितश्रद्धाविश्वास: तथा पराकाष्टा च विद्यते एवं च यथा देवे तथा गुरावपि यस्य अप्रमेयश्रद्धास्ति तस्मै अस्या: विद्याया: प्रदानेन ज्ञानस्य परिपूर्णप्रकाश: जायते।

**यस्य देवे पराभक्ति: यथा देवे तथा गुरौ।**

**तस्मै ते कथिता ह्यर्था: प्रकाशन्ते महात्मन:।।** श्वेता० उपनिषत्६/१३

गुरुं देवेति मन्यमानाय शिष्यायैव अस्या: विद्याया: उपदेश: कर्त्तव्य इति अपरैकमन्त्रे अत्र प्रतिपादितमस्ति।

**वेदान्ते परमं गुह्यं पुराकल्पे प्रचोदितम्।**

**नाप्रशान्ताय दातव्यं नापुत्राय शिष्याय वा।।**श्वेता० उपनिषद् ६/२२

अष्टादशपुराणेषु तान्त्रिकग्रन्थेष्वपि गुरुशिष्ययो: सम्बन्धविषये व्यापकरूपेण चर्चाकृतास्ति। मुण्डमालातन्त्रे गुरो: महिमानं प्रतिपादयन् प्रोक्तोऽस्ति यत् सम्पूर्णं विश्वं गुरुमयं सह्येव शिव: सर्वार्थसाधक: परमतत्वमिति।

**गुरुरेकशिव: साक्षात् गुरुसर्वार्थसाधक:।**

**गुरुरेवपरं तत्वं सर्वं गुरुमयं जगत्।।**

महर्षिवाल्मीके: मतानुसारं स्वर्गधनधान्यविद्यापुत्रपौत्रादिसुखानि गुरुवृत्यनुरोधेन किमपि दुर्लभं नास्ति।

**स्वर्गो धनं वा धान्यं वा विद्या: पुत्रा: सुखानि च।**

**गुरुवृत्यनुरोधेन न किञ्चिदपि दुर्लभम्।। वा०रा०२/३०/३७**

महाभारतस्याश्वमेधिकपर्वणि प्रोक्तमस्ति यत् उपाध्यायाचार्येभ्योऽपि ज्ञानदो गुरु: गरीयान् यतो ह्येष शिष्यस्य त्रितापनाशाय सर्वदा प्रयतते। अतो गुरुमतिरिच्य इहावनीतले सर्वविधैश्वर्यप्रदाता कोप्यन्यो नास्ति। गुरुषु ज्ञानदो गुरु: सर्वदा गरीयान् यतो अस्मात् कोऽपि श्रेष्ठतर: संसारे नास्ति न वा भविष्यति।

**एतेषामपि सर्वेषां गरीयान् ज्ञानदो गुरु:।**

**गुरो: परतरं किञ्चिन्नभूतं न भविष्यति।। महा० भा० आश्वमेध० प०९२/५९**

एवं ज्ञानगरिम्णालंकृतं मानवं वैदिकसाहित्यं तदुपवृंहणकानि पुराणानि वेदाङ्गानि च भूयोभूयो प्रशंसन्ति। गुरोरन्तश्चेतनायामुपनिषदामनेकतथ्यपूर्णरहस्या: स्वत एव प्रतिपादिता: सन्ति इति उपनिषद: प्रतिपादयन्ति। वाचस्पत्ये नित्यातन्त्रस्याधोलिखतं पद्यं गुरुदेवं सामान्यनररूपेणानस्वीकार्यमिति स्पष्टरूपेणोद्घोषयति । कश्चित् जन: यदि गुरुं मानवरूपेण कल्पयति तर्हि तस्य मन्त्रजप: देवपूजनादिकं च व्यर्थ स्यात् एवं च स: कदापि आध्यात्मिकसाधनायामाप्तकामो न भविष्यति इति दृढ़ोक्ति: प्रकाशितास्ति।

**गुरुं न मर्त्यं ध्यायेत यदि बुद्ध्येत तस्य तु।**

**न कदाचित् भवेत् सिद्धि: न मन्त्रै: देवपूजनै:।।**

ललितासहस्रनाम्नि देव्या सह गुरोः तादात्म्यसम्बन्धः सम्यक् प्रतिपादितः। अस्मिन् गुरोः महत्त्वविषये यद् वर्णनमुपलभ्यते तस्मात् ज्ञायते गुरुः जगन्मातुः देव्याः मानवशरीरधरिरूपोऽस्ति। अत्र भगवत्याः गुरुमण्डलरूपिणी इति अपरमेकं नाम किर्त्तितमस्ति। अस्मात् प्रतीतिः भवति न केवलमस्माकं प्रत्यक्षीभूतस्य एकस्यैव गुरोः तादात्म्यं भगवत्या सहास्ति अपि तु समग्रया गुरुपरम्परया सहास्ति तस्याः तादात्म्यसम्बन्धः। कस्यापि आचार्यस्य छन्दोबद्धमतं मयाधीतं तन्मयाधः प्रतिपाद्यते यस्यार्थो भवति यथा घटकलशकुम्भादिशब्दाः एकस्यैव पदार्थस्यावबोधकाः तथैव गुरुदेवतामन्त्राः एते शब्दाः एकार्थवाचकाः तदुक्तं तेन-

**यथा घटश्च कलशः कुम्भश्चैकार्थवाचकाः।**
**तथा मन्त्रो देवता च गुरुश्चैकार्थ वाचकाः।।**

न केवलं विभिन्नशास्त्रादिषु गुरोः महत्वं देवैः तुल्यमिति प्रतिपादितमस्ति अपि तु विभिन्नसनातनधर्मसाम्प्रदायिकैराचार्यैः अपि स्वीकृतमस्ति। अद्वैतवेदान्तस्य दिग्गजेन जगद्गुरुणा आदिशङ्करेण गुरोः लक्षणं तस्य सहाभेदस्थापनं च एवं कृतम्। यः शिष्यस्याविद्यारूपी हृदयग्रान्थिमुद्घाटयति तमेव गुरु इत्याहुः अपि च शिव एव साक्षात् गुरुः गुरुः साक्षात् शिवरूपोऽस्ति अतः उभयोः मध्ये कोऽपि भेददृष्टिः न कल्पयेत्।

**अविद्या हृदयग्रन्थि विमोक्षोऽपि भवेद्यतः।**
**तमेव गुरुरित्याहु गुरुशब्दार्थभेदिनः।।**
**शिव एव गुरुः साक्षाद् गुरुरेव शिवः स्वयम्।**
उभयोरन्तरं किञ्चिन्न द्रष्टव्यं मुमुक्षुभिः।। कल्याण नीतिसार अङ्कः१४६

भारतीयनीतिः देवतीर्थदैवज्ञभेषजगुरौ सर्वथा अभेदं कल्पयति। एतेषां प्रत्यक्षोपस्थितिः सर्वथा सुखमित्यनुस्मरन्ति साधकाः। एषु यस्य यथा चिन्ता वर्तते तस्य तथैव कार्यसिद्धिः भवति।

**देवे तीर्थे द्विजे मन्त्रे दैवज्ञे भेषजे गुरौ।**
**यादृशी भावना यस्य सिद्धिर्भवति तादृशी।।** सुक्तिसुधाकरः

मानवः उग्रतपोभिः स्वकीयसाध्यं साधयति अमृततत्त्वं च लभते। इह जगति तले साधनं विना सिद्धिः कदापि न स्यात्। गुरुशिष्ययोः मध्ये साध्यः गुरुः शिष्यस्तु साधकः एवं च गुरुः देवः शिष्यस्तु उपासकः। गुरोः महत्वं प्रतिपादकेषु ग्रन्थेषु गुरवः पञ्चाग्निरूपेणापि कल्पिताः सन्ति।

**पञ्चाग्नयो मनुष्येण परिचर्या प्रयत्नतः।**
**पितामाताऽग्निरात्मा च गुरुश्च भरतर्षभः।।**

एवं प्रकारेण श्रुतिस्मृतिपुराणतन्त्रागमग्रन्थेषु गुरोः देवत्वविषये व्यापकरूपेण चर्चा कृतास्ति । अनेकेषु उपनिषत्सु गुरुशिष्ययोः नैकाः गाथाः उपलभ्यन्ते यासामध्ययनेन ज्ञायते सद्गुरोः समीपे आत्मनिवेदनेन शरणागतिमाध्यमेन च आध्यात्मिकज्ञानस्योपलब्धिः जायते। वेदोपनिषद्काले श्वेतकेतुनचिकेतामैत्रेयीप्रभृतीनां सत्यनिष्ठापरायणानां शमदमशौचस्वाध्याययुक्तानां शिष्याणां यत् किञ्चित् आध्यात्मिकसुखम् ईश्वरदर्शनादीन्यलौकिकसुखानि च जातानि तत् सर्वं सद्गुरोः समीपं गत्वा तेषामाज्ञानुसारं सेवामाध्यमेनाभवत्। दिव्यशक्तिसम्पन्नाः गुरवः केवलं स्वकीयदयाशिषबलेन आरुणि उपमन्युसदृशान् शिष्यान् निगमान्तविद्यायाः अधिकारी अकारयन्। अतो आधुनिकैरपि अस्माभिः समाजे गुरोः पदमर्यादा अवश्यमेव पालनीया सम्माननीया च।

**गुरुः दुखापहर्त्ता**

जीवः कर्मानुगः आत्मनः शुभाशुभकर्मणः फलंभुङ्त्वा बहुजन्मनः पुण्यसंचयात् कदाचित् मानुषं जन्म लभते। पुण्येऽस्मिन् मानवशरीरेऽपि यदि सः कुकर्मणि आसक्तो भविष्यति तर्हि पुनः दुःखयोनिं यास्य ति इति भयात् सदसत् कर्मनिरूपणाय पुण्यसंचयाय च सद्गुरोः अन्वेषणं करोति। सद्गुरुरेव स्व शिष्याय परमतत्वोपलब्धये भवसागरोत्पन्नत्रितापशान्तये अपुनर्भवाय च पन्थानं दर्शयति। भगसागरोत्पन्नदुःखनिवृत्तिपूर्वकं शिष्याय परमसुखं ददाति अतो गुरुदुःखापहर्त्ता।

यथा ज्ञानविज्ञानं विना मोक्षः न सम्भवति तथैव सद्गुरुं विना ज्ञानप्राप्तिरपि न स्यात्। अस्य संसारसागरस्य प्लावयिता गुरुः तथा तेन प्रदत्तं ज्ञानं नौरिवास्ति। मानवः तद् ज्ञानं लब्ध्वा दुःखदावानलापरिपूर्णस्य संसारसागरस्य पारं गन्तुं समर्थो भवति। तदुक्तमस्ति महाभारते।

**न विना ज्ञानविज्ञाने मोक्षस्याधिगमो भवेत्।**
**न विना गुरुसम्बन्धं ज्ञानस्याधिगमः स्मृतः।।**
**गुरुः प्लावयिता तस्य ज्ञानं प्लव इहोच्यते।**
**विज्ञाय कृतकृत्यस्तु तीर्णस्तदुभयं त्यजेत्।**।महा०भा०शान्ति ३२६/२२-२३

गोस्वामितुलसीदासमहाभागाः गुरुः अज्ञानरूपकस्य मोहान्धकारस्य नाशाय सूर्यः नररूपहरिः इति स्वीकुर्वन्ति स्वीय रामचरितमानसे-

**वन्दउँ गुरुपदकञ्जकृपा सिन्धुनर रूपहरि।**
**महामोह तम पुँज जासु वचन रविकर निकर।।**

एवमपि गुरुगीतायां गुरुदेवः ब्रह्मानन्दरूपपरमसुखदाता सर्वज्ञानमयः सुखदुःखद्वन्दरहित इति प्रतिपादितोऽस्ति।

**ब्रह्मानन्दं परमसुखदं केवलं ज्ञानमूर्त्तिम्।**
**द्वन्दातीतं गगनसदृशं तत्त्वमस्यादिलक्ष्यम्।।**
**एकं नित्यं विमलमचलं सर्वधीः साक्षिभूतम्।**
**भावातीतं त्रिगुणरहितं सद्गुरुं तं नमामि।**।गुरुगीता ८९

सर्वशास्त्राणामालोडनेन प्रतिभाति सुखं तु ज्ञानाधीनमेव ज्ञानमपि सद्गुरोरधीनमतो गुरुमाध्यमेन ज्ञानाहरणं तस्मात् दुःखस्य नाशः जायते। तस्मात् गुरुदुःखापहर्त्ता इति वक्तुं पार्यते।

**पित्रधिकं गुरुः**

अस्माकं संस्कृतौ परम्परायां च पञ्चपितरः इति आध्यात्मिकभावनया मन्यन्ते। ते पितरः यथा जन्मदाता उपनेता विद्यादाता अन्नदाता भयत्राता च।

**जनिता चोपनेता च यस्तु विद्यां प्रयच्छति।**
**अन्नदाता भयत्राता पञ्चैते पितरः स्मृताः ।।** चाणक्यनीतिः

एषु विद्यादाता गुरुः सदा सर्वत्र गरीयान् अस्ति। स्मृतिकारेण मनुना श्रीगुरोः पितृत्वविषये एवं स्वकीयं मतमुपन्यस्तम् तद्यथा -

**य आवृणोत्यवितथं ब्रह्मणा श्रवणावुभौ।**
**स माता स पिता ज्ञेयः स्तं न द्रुह्येत् कदाचन।**।मनु २/१४४

तथा च तत्रेव जन्मदातुः सकाशात् ब्रह्मदाता गुरुः श्रेयस्करः इति प्रतिपादितः।

**उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिता।**
**ब्रह्म जन्म हि विप्रस्य प्रेत्य चेह च शाश्वतम्।। मनु२/१४६**

यतो हि जन्मदातृणा निर्मितं शरीरं कदाचित् नाशमेष्यति परं वेदज्ञानेन समुत्पन्नस्य शरीरस्य कदापि नाशो न भवति तत्तु अजरम् अमरं च।

**शरीरमेतौ सृजतः पिता माता च भारत।**
**आचार्यशास्ता या यातिः सा सत्या साजरामरा।। महा भा अनु १०५/१८**

अतिथि-अध्यापक,:पुराणेतिहासविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः,पुरी।



# पाठ्यचर्यायां पर्यावरणचिन्तनम्

डॉ. सुशान्तहोता

**उपोद्घात:-**

साम्प्रतिकसमय: अत्याधुनिक:, वैज्ञानिक: प्रौद्योगिकश्च प्रतिभाति। जनानां प्रगति: तीव्रगत्या जायमाना प्रवर्त्तते। समग्रविश्वस्य मानवा: प्रतिक्षेत्रम् अग्रे गत्वा स्वकीयं श्रेष्ठत्वं प्रतिपादनाय तत्परा: दृश्यन्ते। जनेषु प्रतिस्पर्धाप्रवृत्ति: बलवती भवति। मानवा: विविधासु क्रियासु गतिविधिषु च आत्मानं नियुज्य प्रभूतधनानि अर्जयन्ति सामाजिकव्यवस्थाया: विकासं च साधयन्ति। परन्तु कैश्चिद् विचारकै: उक्तं यत् विकास एव विनाशस्य कारणं भवति। उदाहरणं यथा- अत्याधुनिकताया: विकासेन संस्कृते: परम्परायाश्च विनाश:। अतोऽत्र कथनस्य अभिप्रायोऽयं यत् मानवसमाजस्य विकासेन जनानां विविधै: क्रियाकलापै: प्रकृतौ तथा प्राकृतिके पर्यावरणेऽपि परिवर्त्तनं जायते। अत्र परिवर्त्तनस्य मात्रा एतादृशी बलवती भवति यत् अनेन पर्यावरणे जीवनधारणं सुकरं सुखकरञ्च न भवति। सर्वत्र प्रदूषणस्य मात्रा वर्धते। एतादृश्यां परिस्थितौ मानवीयविकासेन सह पर्यावरणस्य सुरक्षायै अन्ताराष्ट्रियसङ्घटनानां योगदानं तु वर्त्तते एव, सहैव शिक्षाव्यवस्थायां सर्वेषु स्तरेषु पाठ्यचर्यायां पर्यावरणचिन्तनस्य महती आवश्यकता अनुभूयते। अत्र पाठ्यचर्यायां पर्यावरणस्य पर्यावरणचिन्तनसम्बद्धा: केचन विन्दव: उपस्थापयिष्यन्ते।

**किं नाम पाठ्यचर्या-**

Race course, Run way, Running course, Carriage away इति आङ्ग्लभाषायां नैकानि पदानि पाठ्यचर्या इति शब्दस्य कृते उपयुज्यन्ते। अत्र पाठ्यचर्या नाम किञ्चन धावनक्षेक्षं यत्र छात्रा: एकैकं सोपानम् अतिक्रम्य उद्देश्यानि संसाधयन्त: स्वलक्ष्यप्राप्त्यर्थं धावन्ति। एवमेव पाठ्यचयार्यां न केवलं विद्यालयीया: सैद्धान्तिविषया: प्रायोगिकविषयाश्च सन्ति अपितु विद्यालयात् बहिरपि समाजस्य सामाजिकव्यवहारा:, अनुभवा: कार्यक्रमाश्च अन्तर्भवन्ति। किञ्च ज्ञानं, कौशलं, दक्षता, रीति:, दर्शनं, प्रशिक्षणम् इत्येते विषया: अत्र सम्मिलिता:। एषा पाठ्यचर्या शैक्षिकप्रक्रियाया: केन्द्रीयतत्त्वं भवति। विद्यालयभवनम्, उपकरणानि, पुस्तकालय: इत्येतानि सर्वाणि वस्तूनि पाठ्यचर्यायाम् एव समाविशन्ति। एतेषां सर्वेषाम् एकमेव उद्देश्यं भवति पाठ्यचर्याया: क्रियान्वयनम्। एषा पाठ्यचर्या एतादृशमेकं साधनमस्ति येन शिक्षकच्छात्रयोर्मध्ये उत्तमोत्तमसम्बन्ध: स्थापित: भवति।

**किं नाम पर्यावरणम्-**

परित: आवरणं पर्यावरणम् इति पर्यावरणस्य सामान्योऽर्थ: लोके विज्ञात:। यत् किमपि जगत्सर्वं, समग्रं वस्तुजातम् अस्माकं समक्षम् अस्ति तत् पर्यावरणत्वेन ज्ञायते अवबुध्यते च। वृक्ष:, लता, वनं, पर्वत:, नदी, जीवजन्तव:, वायु:, जलं, भूमि:, वनस्पतय: इत्येते सर्वे अत्र पर्यावरणशब्देन अभिव्यज्यन्त एतेषां सर्वेषां तत्त्वानां समुचितं परिमाणं सन्तुलनञ्च उत्तमं जीवनानुकुलं वातावरणं निर्माति। एकस्मिन् उत्तमे पर्यावरणे मानव: समायोजनं संस्थाप्य जीवनं यापयति। एतत् एतैदृशमेकं तत्त्वमस्ति यत् मानवस्य सर्वाङ्गीणविकासं साधयति।

**पाठ्यचर्यायां पर्यावरणचिन्तनम्-**

सर्वाङ्गीणविकाससंसाधनात्मिकी पाठ्यचर्या पर्यावरणचिन्तनसमन्विता भवेदिति विविधै: शिक्षाऽऽयोगै: शिक्षानीतिभिश्च काले काले प्रस्तावा: उपस्थाप्यन्ते। विशिष्य राष्ट्रिय-पाठ्यचर्या-रूपरेखा 2005 (National Curriculum Frame Work 2005) इत्यत्रापि समग्रे राष्ट्रियस्तरे शिक्षाया: विविधस्तरेषु पर्यावरणचिन्तनाय, पर्यावरणशिक्षां तथा संरक्षणं सुरक्षां च प्रति जागृतिसम्पादनाय अनिवार्यरूपेण पर्यावरणशिक्षाया: सञ्चालनं भवेदिति स्पष्टम् उल्लिखितं वर्त्तते। तर्हि अत्र प्रश्न: उदेति यत् पर्यावरणचिन्तनम् इत्यस्य किं तात्पर्यम् ? अस्य समाधानम् इदृशम्-

पर्यावरणचिन्तनं शिक्षाया: सैव प्रक्रियाऽस्ति यया प्रक्रियया मानवपर्यावरणयो: पारस्परिकान्त:सम्बन्धस्य निर्भरशीलतायाश्च ज्ञानं प्रदाय पर्यावरणस्य सुरक्षायै, संरक्षणाय, विकासाय च कौशलानाम्, अभिवृत्तीनां, मूल्यानाञ्च विकासाय प्रयासा: विधीयन्ते। अनेन राष्ट्रस्य भाविनागरिका: समग्रविश्वस्य सदस्याश्च पर्यावरणसमस्या: सामाधाय उन्नतजीवनयापनाय सन्नद्धा: भवन्ति।

**पर्यावरणचिन्तनस्य प्रमुखा: विन्दव:-**

पर्यावरणं प्रति जागरुकप्सम्पादनाय कस्याञ्चित् पाठ्यचर्यायां निम्नोक्ता: विन्दव: चिन्तनीया: भवन्ति। यथा-

**1. पर्यावरणसमस्यानां ज्ञानम्-**

पर्यावरणं विना मानवजीवनं सुकरं न भवति, यतोहि एतत् मानवस्य अभिन्नम् अङ्गं भवति। परन्तु आधुनिके युगे औद्योगिकक्रान्ते: परिणासम्वरूपं पर्यावरणे नैका: समस्या: जायन्ते। यथा- वायु-नदी-जल-ध्वनिप्रदूषणानि, अम्लवृष्टि:, ओजनस्तरक्षरणं, विश्वस्य तापमात्रावर्धनम्, हिमस्खलनवशात् जलस्तरस्य वृद्धि:, स्थलभागस्य न्यूनता च। अत: एतादृशीनां समस्यानां ज्ञानम् आदौ अवश्यमेव भवेत्।

**2. समस्यासमाधानाय परियोजनानिर्माणम्-**

वयं सम्यक्तया जानीम: यत् उत्तमयोजनाया: अभावेन कार्यं कदापि सफलतां न प्राप्नोति। अत: समस्यानां ज्ञानपुरस्सरं तासां समाधानाय आदौ योजना निर्मातव्या भवति। योजनायां समस्यासमाधानस्य सर्वाणि घटकानि चिन्तनीयानि भवेयु:।

**3. योजनानां क्रियान्वयनम्-**

एकस्याम् उत्तमयोजनायां बहव: कार्यक्रमा: अन्तर्भवन्ति। तेषां कार्यक्रमाणां क्रियान्वयनाय सर्वकारेण, सर्वकारेतरसंस्थाभि:, विविधशिक्षासंस्थाभिश्च प्रयास: विधातव्य:। एतदर्थं प्राविधिकी आर्थिकी च सहायता नितराम् अपेक्ष्यते।

**4. नवीनविधिप्रविधीनाम् उपयोग:-**

अल्पीयसि काले अल्पश्रमेण अधिकफलप्राप्त्यर्थम् इदानीम् अस्माकं वैज्ञानिका: प्राविधिका: विषयविशेषज्ञाश्च अनुसन्धानरता: सन्ति। पुनश्च वैज्ञानिकाविष्काराणां प्रविधीनाञ्च प्रयोग: उपयोगश्च कथं कर्त्तव्य: इत्यस्मिन् विषयेऽपि प्रशिक्षणव्यवस्था करणीया।

**5. पर्यावरणजागरुकताकार्यक्रमाणाम् आयोजनम्-**

राष्ट्रस्य नागरिकेषु सामाजिकेषु च पर्यावरणसंरक्षणं सुरक्षां च प्रति सकारात्मकाभिवृत्ते: ज्ञानाय, कर्त्तव्यानाम् उत्तरदायित्वानाञ्च अवबोधनाय नैके पर्यावरणजागरणकार्यक्रमा: पाठ्यचर्यायां चिन्तिता: सन्ति। यथा- शोभायात्रा, वीथीनाटकम्, प्रदर्शनी इत्यादय:। एतादृशानां कार्यक्रमाणाम् आयोजनाय प्रशिक्षणसंस्था: सन्नद्धा: स्यु:।

**6. विचारगोष्ठीनाम् आयोजनम्-**

सङ्गोष्ठीसु विचारगोष्ठीसु वा एतादृशानां नैकेषां विचाराणाम् उपस्थापनं भवति येन समस्यानां ज्ञानेन सह तत्समाधानोपायाश्च अन्विष्टा: भवन्ति। अत: विविधासु संस्थासु पर्यावरणसमस्यानां तत्परिहारोपायानाञ्च विश्लेषणाय पाठ्यचर्याया: चिन्तनं विधीयते। राष्ट्रस्तरस्य अन्ताराष्ट्रियस्तरस्य च विविधासु गोष्ठीषु विषयविशेषज्ञा: उत्तमोपायान् मार्गान् च प्रदर्शयन्ति।

**7. पर्यावरणविशेषज्ञै: सह परामर्श:-**

समसामयिकपर्यावरणपरिस्थितीनां विश्लेषणपुरस्सरं पाठ्यचर्यायां पर्यावरणचिन्तनाय पर्यावरणविशेषज्ञै: सह परामर्श: करणीय:। अनेन सह विविधासु शिक्षासंस्थासु पर्यावरणविशेषज्ञानां वार्त्ताकार्यक्रमाणाम् आयोजनमपि कर्त्तव्यं भवति। एवं प्रकारेण परामर्शद्वारा वतावरणसमस्यानां समाधानं कर्त्तुं शक्नुम:।

**8. प्राकृतिकसंसाधनानां सदुपयोग:-**

इदानीन्तनसमाजे प्राकृतिकसंसाधनानां दुरुपयोगकारणेन एव नैका: समस्या: रोगाश्च जायन्ते। वायुप्रदूषणम्, जलप्रदूषणम्, ध्वनिप्रदूषणम् इत्यादिसमस्या: दृष्टिपथारूढा: सन्ति। अत: संसाधनानाम् उपयोगाय प्रोत्साहनं दातव्यं तथा शिक्षासंस्थासु जागृतिसम्पादनात्मकानां कार्यक्रमाणाम् आयोजनं कर्त्तव्यम्।

**9. पर्यावरणनीते: समीक्षा-**

सर्वे नियमा: सर्वा: नीतयश्च सर्वदा समीचीना: न भवन्ति। तस्मात् राष्ट्रिय-अन्ताराष्ट्रियस्तरयो: या: पर्यावरणनीतय: निर्मिता: सन्ति तासां सर्वासां नीतीनाम् अध्यापनेन सह समीक्षा कर्त्तव्या। नीतिषु विद्यमानानां गुणदोषाणां विवेचनमपि स्यात्। पर्यावरणनीतिषु प्रस्तावितानां नियमानां, नीतीनां, प्रस्तावनानां, प्रतिवेदनानां च समीक्षया सह नियोजनं संयोजनञ्च पाठ्यचर्यायाम् अवश्यमेव भवेत्।

**10. जनसंख्याभिवृद्धिसमस्याया: निराकरणम्-**

इदानीं चीन तथा भारतम् इव नैकेषु राष्ट्रेषु जनसंख्यावृद्धि: एका महती समस्या वर्त्तते। अस्या: प्रभाव: पर्यावरणस्य उपरि साक्षात् पतति। यतोहि जनानां यावती संख्या भवति, तदनुगुणं प्राकृतिकसंसाधनानाम् अन्येषाञ्च भौतिक-सामाजिक-शारीरिकावश्यकतानां परिपूर्त्तये मानव: आदौ पर्यावरणस्य शरणं गच्छति। अनेन पर्यावरणम् अपि असन्तुलितं भवति। एवं प्रकारेण जनसंख्यावृद्धिसमस्याया: निराकरणाय अपि चिन्तनं भवति।

**निष्कर्ष:-**

उपर्युक्तविचाराणाम् अनुरूपं एतादृशा: नैके बिन्दव: सन्ति येषां प्रभाव: साक्षात् पर्यावरणस्योपरि पतति। अनेन नैका: समस्या: जायन्ते, पर्यावरणं च असन्तुलितं भवति। एतादृश्यां स्थितौ शिक्षाप्रक्रियायां पर्यावरणशिक्षाया: आवश्यकता तु वर्त्तते एव तथापि शिक्षाया: विविधेषु क्षेत्रेषु पाठ्यचर्यायाम् एतादृशपर्यावरणचिन्तनस्य आवश्यकता वर्त्तते। अत्र निष्कर्षरूपेण एवं वक्तुं शक्नुम: यत्- समसामयिकसमये शिक्षाया: सर्वेषु स्तरेषु पाठ्यचर्यायां पर्यावरणचिन्तनं शिक्षाया: एकं सर्वप्रमुखम् अङ्गं भवेदिति।

**सन्दर्भग्रन्थसूची-**

१. गोयल एम्. के., अपना पर्यावरण, विनोद पुस्तक मन्दिर, आगरा
२. डॉ. गोयल एम्. के., पर्यावरण शिक्षा, विनोद पुस्तक मन्दिर, आगरा-२, १९९७
३. अग्रवाल रेणु एवं डॉ. रामकिशन, पाठ्यक्रम, शिक्षाशास्त्र एवं मूल्याङ्कन, दोआवा हाउस।
४. यादव सियाराम, पाठ्यक्रम विकास, अग्रवाल पब्लिकेसन्, आगरा।
५. राष्ट्रीय पाठ्यचर्या की रूपरेखा २००५, राष्ट्रीय शैक्षिक अनुसन्धान और प्रशिक्षण परिषद।

अध्यापक:,, शिक्षाशास्त्रविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:,पुरी ।



# धर्मशास्त्रस्योपादेयत्वम्

**विश्वलक्ष्मीविश्वाल:**

भारतीयसंस्कृते:समृद्धौ धर्मशास्त्रस्यानन्यं योगदानमस्ति, यतो हि धर्मशास्त्रमिदं भारतवर्षस्य प्राचीनतमं शास्त्र: विहितम्। वैदिककालादाराभ्यास्य प्रचार: प्रसारश्च भारतवर्षे जात: । वेदानुमापकत्वेन सकलशास्त्रपुरस्कृततत्वेन च शास्त्रस्यास्य उपादेयत्वं महत्त्वञ्च न केवलं भारतवर्षे देशान्तरेऽपि दृश्यमानो भवति। सकलशास्त्रस्य चूडायमानत्वेन निखिललोकसंरक्षकत्वेन चास्य सातिशयं महत्त्वं चन केवलं भारतीयविद्वद्भिरालोच्यते। अपि तु पाश्चात्यपण्डितानांमध्यऽपि भारतीयधर्मशास्त्रस्य भूयसी प्रशंसा प्राप्यते । पाश्चात्यधर्मशास्त्रोद्देश्यं न केवलं आदर्शवादस्य स्थापना अपि तु व्यावहारिकतया अध्यात्मवादस्य स्थापनमस्य शास्त्रस्य मौलिकता वर्त्तते।

भारतीयधर्मशास्त्रं पुरुषार्थत्वेन प्रतिष्ठितं वर्त्तते । अस्य पुरुषार्थचतुष्टयनिदानभूतस्य धर्मशास्त्रस्य महत्त्वं सर्वत्रैव सुविदितम्। महाभाष्यकारेण महर्षिपतञ्जलिना अपवादैरुत्सर्गा बाध्यन्तामिति लिखित्वा धर्मशास्त्रस्य महत्त्वं प्रतिपादितम् । पूर्वमीमांसाकारेण महर्षिणा जैमिनिनापि "अथाऽतोधर्मजिज्ञासा इत्युपक्रम्य सन्दिग्धेषु स्थलेषु धर्मजिज्ञासा कर्त्तव्येति लिखित्वा धर्मप्रतिपादकशास्त्रस्य महत्त्वं प्रतिपादितम्।

साहित्यव्याकरणदर्शनपुराणार्थशास्त्रादिषु धर्मशास्त्रस्य य: प्रतिपाद्योधर्म: प्रपञ्चितोस्तीति नास्त्यत्र विसम्वाद: । कालिदासीयाभिज्ञानशाकुन्तलनाटकस्य मङ्गलाचरणे[१] "या सृष्टि:स्रष्टुराद्या इत्यादौ अष्टमूर्त्तिभि: शिवस्य जलमयी मूर्त्तिरेव आद्या सृष्टिरित्यभिहिता ग्रन्थकारेण मनुस्मृतेरेव संगृहीतम् । तथाहि[२]

**सोभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधा:प्रजा: ।**
**अत एव ससर्जादौ तासु बीजमवासृजत् ।।**

शकुन्तलाया: दृष्यन्तेन सह विवाहो गान्धर्वरीत्या जात: । प्रसङ्गोऽयं धर्मशास्त्रानुमोदित एव । गान्धर्वविवाहेषु[३] अन्यतम: ।

What can India teach us नामके ग्रन्थे ग्रन्थकार: प्रो. मेक्समुलरमहोदयेन भारतीयधर्मशास्त्रस्य प्रशंसाकरणसमये लिखितं यत् न केवलं भारतीयधर्मशास्त्रे पूजाप्रार्थनादीनामन्तर्भाव अपि तु दर्शन- नैतिकता- नियम- शासनादीनामप्यअन्तर्भावो राजते । शास्त्रमिदं शास्त्रान्तरापेक्षया प्राचीनतरत्वं वर्त्तते। अस्यैव शास्त्रस्य स्मृतिरिति अपरा संज्ञा"धर्मशास्त्रं तु वै स्मृति: इति मनुवचनात् यद्यपि सांख्यस्मृति: वेदान्तस्मृतिश्चेति स्मृतिसंज्ञा वर्त्तते । तथापि सा स्मृतिसंज्ञा यौगिकी इति । परन्तु यत् धर्मप्रतिपादकं शास्त्रमिति तस्यैव धर्मशास्त्रस्य महत्त्वम् ।

भारतीयशास्त्रपरमपरायां वेदनि:सृतानि यावन्ति शास्त्राणि भवन्ति तेषु वेदार्थानुमापकत्वेन सकलशास्त्रपुरस्कृतं धर्मशास्त्रमेव मूर्द्धन्यस्थानं विभर्त्ति । **श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृति**: इति मनुवचनात् ज्ञायते यदस्यैव शास्त्रस्य स्मृतिरिति अपरासंज्ञा। वेदानन्तरमेवास्य द्वितीयं स्थानम् । शास्त्रमिदं समाजशास्त्रमित्यपि कथयितुं शक्यते । यतो हि संसारस्य समेषामपि जनानां कर्त्तव्याकर्त्तव्यज्ञानार्थं शास्त्रमिदं मार्गदर्शनं करोति । न केवलमस्य महत्त्वमस्मिन्नेव शास्त्रे सीमितम्, अपि तु शास्त्रान्तरेष्वपि अस्य महत्त्वं सर्वविदितमस्ति । मन्वादिप्रणीतानां विभिन्नानामपिधर्मशास्त्राणां सर्वेषामेव प्रामाण्यमङ्गीक्रियते । न कस्यापि अप्रामाण्यमिति महतीगौरववहा इयं भारतीयपरम्परा । आपातत: विरुद्धानीव प्रतीयमानानि स्मृतिवचनानि देशकालकर्त्तृव्यवस्थाविशेषभेदेन व्यवस्थाप्य एकवाक्यतया प्रतिपाद्यन्ते आचार्यै: । तत्रैकवाक्यताया: साकांक्षाणामाकांक्षापरिपूरणमअन्यत: क्रियते, निराकांक्षाणां विरूद्धानां विषमकल्पनादेशकालादिदृष्ट्या व्यवस्था उपदिश्यते । तुल्यबलानां च विकल्प: स्वीक्रियते । पुनश्च धर्मशास्त्राणां सुमहद्गौरवं यत् परस्परं सम्प्रतिपन्नानि विप्रतिपन्नानिन्यपि शास्त्राणि धर्मशास्त्रप्रशंसायां सम्बदन्तीति ।

तत्रादौ उत्तरमीमांसाका:[४]ब्रह्मणो जगत्कर्त्तृत्वमीमांसायां सांख्यस्मृते: अप्रमाण्यप्रदर्शनपुर:सरं मन्वादिस्मृतीनां

प्रामाण्यं प्रतिपादयन्ति ।

**सांख्यस्मृत्यास्ति संकोचो न वा वेदसमन्वये ।**
**धर्मे वेदःसावकाशः संकोच्योऽनवकाशया ।।**
**प्रत्यक्षश्रुतिमूलाभिर्मन्वादिस्मृतिभिर्मितिः ।**
**अमूलाकापिली बाध्या न संकोचोऽनया ततः ।।**

सांख्याचार्यैरपि "धर्मेण गमनमूर्ध्वं गमनमधस्ताद् भवत्यधर्मेण इति विद्वद्भिः ऊर्ध्वगमनसाधनस्य धर्मस्य प्रतिपादकं शास्त्रमुपादेयत्वेन अङ्गीक्रियते । विहितकर्मजन्यो धर्म इति धर्मं लक्ष्यद्भिर्नैयायिकैः विहितकर्मोपदेशकानां धर्मशास्त्राणां प्रामाण्यमङ्गीकृतमेव ।

रक्षोहादिना वेदस्योपकारार्थं समवतीर्णं व्याकरणं वेदानुमापकस्य धर्मशास्त्रस्य संरक्षकमिति सुव्यक्तमेव । पुनश्च महाभाष्यकारैः[५] सूत्रभाष्ये "नैवेश्वर आज्ञापयति नापि धर्मसूत्रकाराःपठन्ति, अपवादैरुत्सर्गा बाध्यन्तमिति लिखित्वा धर्मशास्त्राणां सर्वमान्यत्वं प्रदर्शितम् ।

पूर्वमीमांसायामपि[६] "अथतो धर्मजिज्ञासा इत्युपक्रम्य प्रवृत्ता इति तस्या अपि धर्मपुरस्कारत्वेन तथासन्दिग्धेषु धर्मनिर्णयेन च धर्मशास्त्रेण सह मैत्री विद्यते । धर्मपुरस्कारत्वेन शास्त्रस्यास्य धर्मशास्त्रमिति नामान्तरम् । धर्मशास्त्रेण सह पूर्वमीमांसायाः निगूढः सम्बन्धोऽपिविद्यते । इतिहासविशेषो[७]महाभारतग्रन्थोऽपि उपसंहारे धर्ममेव प्रंशसन् आह- धर्मादर्थश्च कामश्च स किमर्थं न सेव्यते" ।

**न जातु:कामान्न भयान्न लोभाद्धर्मं त्यजेद् जीवितस्यापि हेतोः ।**
**धर्मो नित्यः सुखदुःखे त्वनित्यो जीवो नित्यो हेतुरस्य त्वनित्यः ।।**

इति । पुनश्चात्रैव धर्मशास्त्रप्रणेता मनुः बहुधा प्रशंसितः-

**ऋषयस्तु व्रतपराः समागम्य पुरा विभुम् ।**
**धर्मं पप्रच्छुरासीनमादिकाले प्रजापतिम् ।।**
**तैरेवमुक्तो भगवान् मनुः स्वायम्भुवोऽब्रवीत् ।**
**शुश्रुषध्वं यथा वृतं धर्मं व्यास समासतः ।।** इत्यादिना ।

आदिकाव्यं रामायणमपि बलिप्रश्नं समादधतः रामचन्द्रस्य मनुस्मृतेः[८] श्लोकद्वयमुपन्यस्य स्मृतीनां प्रामाव्यमङ्गीचकार । तद् यथा किष्किन्ध्याकाण्डे[९]-

**राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवः ।**
**निर्मलाः स्वर्गमायान्ति सन्तः सुकृतिनो यथा ।।**
**शासनाद्वाविपोक्षैद्वास्तेनःपापात् प्रमुच्यते ।**
**राजात्वाशासन् पापस्य तद्वाप्नोति किल्विषम् ।।**

आयुर्वेदज्योतिर्वेदावपि रोगग्रहपीडयोः कारणत्वेन पापमेव प्रदर्शयन्तौ तयोरुपशमानार्थं दानजपादिकृत्यमुपदिश्य धर्मप्रतिपादकं शास्त्रं सम्मानयन्ति । धर्मेण सह नित्यविरोधमुपगतयोरपि अर्थकामयोः प्रतिपादके शास्त्रे धर्मशास्त्रम्आत्मनः सहायकं मन्यते । तथाहि अर्थशास्त्रकारो विष्णुगुप्तः[१०]

**व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः ।**
**त्रय्या च रक्षितो लोकःप्रसीदति न सीदति ।।**

इति वर्णाश्रमाचारप्रशंसया धर्मोऽऽद्रियते । कामशास्त्रमपि भोगविच्छेदेन वस्तूनां नियतविषयतामभिलषत् धर्मशास्त्रविन्दते । वर्णाश्रमाचारविरूद्धैर्हेतुवादिभिरपि प्रजापालनादौ स्वस्वत्त्वपरिरक्षणादौ च धर्मशास्त्रं नूनमादरणीयम् ।

साक्षाद्भगवतीश्रुतिरपि धर्मं प्रशंसति । [११]"धर्मो विश्वस्य जगतःप्रतिष्ठालोके धर्मिष्ठं प्रजा उपसर्पन्ति, धर्मेण

पापमनुदति, धर्मे सर्वं प्रतिष्ठितम्, तस्माद्धर्मं परमं वदन्ति"इति धर्मप्रशंसया तत्प्रतिपादकं शास्त्रमपि प्रशंसितमिति दिक् ।

**पादटीका-**

१-अभिज्ञानशाकुन्तलम्- प्रस्तावना
२-म. स्मृ- १/८
३-मनुः- ३/२१, या.स्मृ-१/६१
४-उ.मी- २/१
५-महा.भा- १/१४३
६-पू.मी- १/१/१
७-याज्ञ. स्मृ.भूमिका, पृ- १
८-ण.स्मृ- ८/३/८,३/६
९-रा.कि- १८/३३-३४
१०-कौ. अ- १/३
११-तै.आ- १०/६४

शोधच्छात्रा, धर्मशास्त्रविभागः

केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः,पुरी ।



# प्राचीनभारती-ालिपेः गुरुत्वम्

शोधार्थी – दीपक प्रधानः

**भूमिका –**

प्राचीनभारती-ेतिहासस्-ा तथा च संस्कृतेः मूलोत्सत्वेन अभिलेख–स्मारक–मुद्राः विशेषं स्थानं प्राप्नुवन्ति। अभिलेख इति शब्दस्-ा मुख्-ाः अर्थो भवति कस्-ाचित् वस्तुनः उपरि उत्कीर्णत्वम्। प्राचीनभारते मूलतः अभिलेखास्तु पर्वतस्-ा गात्रे प्रस्तरे धातौ मृत्तिका-ां काष्ठफलके स्तम्भे मन्दिरस्-ा गात्रे इत्-ादिषु स्थानेषु उत्कीर्णाः भवन्ति स्म। दुर्भाग्-ावशतः अस्माकं देशे ग्रीस–रोम–चीनादीनां देशानाम् इव कालानुक्रमिकत्वेन इतिहासस्-ा लिपिबद्धकरणा-ा प्रवणता नासीत्। प्राचीने भारते तु हेरोडोटास–थुकिडिडिस–टकिसास इत्-ादीनाम् इव कोऽपि नासीत्, यद्देशस्-ा सुपुत्राणां कृते उपलब्धं प्रमाणं तथा च प्रेरणादा-ाकम् इतिहासं भाविप्रजन्मनः पुनर्निर्माणस्-ा कृते दद्युः। भारतवर्षस्-ा प्राचीनेतिहासस्-ा पुनर्निर्माणा-ा साहित्-ा–अभिलेख–मुद्रा–प्रत्नतात्त्विकोत्खननजातद्रव्-ा–स्मृतिस्तम्भ इत्-ादीनि मूलानि सन्ति, एतेषाम् उपरि एव प्राचीनभारती-ेतिहासो निर्भरशीलः अस्ति। एतानि उपादनानि आधारीकृत्-ा एव भारतवर्षस्-ा लुप्ताः इतिहासाः पुनः सजीवाः भवन्ति वर्तमाने समाजे। अधुना प्राचीनभारती-ो उपलब्धिविषयाद्यज्ज्ञानं प्राप्-ाते तत् तु अभिलेखाद् देव।। अभिलेखस्-ा साक्ष्-ास्-ा उपरि आधारीकृत्-ा भौगलिक–ऐतिहासिक–अर्थनैतिक–प्रशासनिक इत्-ादिषु विष-ेषु विविधानि तथ्-ानि प्राप्-ान्ते।

**१. भौगिलिकी वर्णना –**

अभिलेखेषु तु विभिन्नानां नगराणां पर्वतानां नदीनां स्थितिः, राज्ञो -ात्रापथः, राज्-ाविस्तारस्तथा च सीमा-ाः उल्लेखः इमे विष-ाः वर्णिताः सन्ति, एते विष-ाः इतिहासनिर्माणे सहा-ाकाः भवन्ति। अशोकस्-ा राज्-ाविस्तारः तु पूर्वे बङ्गदेशाद् उत्तरे हिन्दुकुसं प-र्न्तं हिमाल-ाद् दक्षिणस्-ा दक्षिणीभागं चित्तलदूर्गं प-र्न्तं विस्तृतः अस्ति। पूर्वे अस्-ा राज्-ास्-ा विस्तारः आसीत् कामरूपम् (आसामनगरं) प-र्न्तं, पश्चिमे -ावननरेशं प-र्न्तं तथा च अस्-ा पार्श्ववर्तिनः एवञ्च उत्तरे हिमाल-ासीमां प-र्न्तं विस्तृतः अस्ति। दक्षिणे चोलात् पाण्ड्यसत्-ापुतुतः तथा च केरले ताम्रपर्णिनः राज्ञः अपेक्ष-ा राज्-ां तु प्रशस्तमासीत्। रुद्रदाम्नो गिर्णा-ाशिलाभिलेखाद् -ेषां प्रदेशानां वर्णना प्राप्-ाते तेषामधः दी-ाते-

पूर्वापराकरावन्त-ानूप–नीवृदानर्त्त–सुराष्ट्र–श्वभ्र–मरु–कच्छ–सिन्धु–सौवीर–कुकुरापरान्त–निषादादीनाम्। एतानि विहा-ा अपि उर्ज-ातगिरेः सुवर्णसिकता-ाः तथा च पलाशिनीनद्याः च उल्लेखः प्राप्-ाते।

चन्द्रस्-ा महरौली इति लौहस्तम्भाभिलेखे बङ्गप्रदेश–दक्षिणमहासागर–विष्णुपदपर्वतादीनां वर्णना प्राप्-ाते। सिन्धोः सप्त मुखानि

इत-ास्मिन् विष-ो विद्वांस: मतं पोष-न्ति -ात् पूर्वदिश: सिन्धौ मेलना-ा पाञ्चावस-ा शतद्रु-विपाशा-इरावती-चन्द्रभागा-वितस्ता इति पञ्च नद्यस्तथा च पश्चिमदिश: काबुलप्रदेशं प्रति आगते कुम्भा-सिन्धु एते नद्यौ इति सप्त: नद्य: एकत्रत्वेन सिन्धुमुख इति उच-ते।

वीसलदेवस-ा देहल-ां टोपरा इति स्तम्भाभिलेखे तु राजस्थान-पाञ्चावनगर-ोस्तत्कालिन-ा: राजनैतिक-ा: गतिविधे: उपरि अस-ा अभिलेखस-ा प्रभावो दृश-ते। विन्ध-ाहिमाल-ो: -ादन्तरालदेशम् आसीद्वीसलदेवस्तज्जीतवान्।

२. **ऐतिहासिकं प्रमाणं वर्णना वा –**

प्राचीनभारती-ेतिहासे तु अभिलेखा: गुरुत्वपूर्णं स्थानं प्राप्तवन्त:। १७७४ ख्रिष्टाब्दे एशि-ाटिक सोसाइटि इत-ास-ा स्थापनात् परं स-ार उइलि-ाम जोन्समहोद-ा: अभिलेखस-ा संग्रहमारब्धवान्। परन्तु लिपिज्ञानस-ा अभावत्वादभिलेखस-ा पाठस्तु सम्भवपरो न जात: ।अनेन प्राचीनेतिहासस-ा तथा च संस्कृते: पुनर्निर्माणा-ा सहा-ाकानाम् अभिलेख-स्मारक-मुद्रा इत-ादीनां पठना-ा तथा च प्रकाशना-ा ब-ुलर कनिंघम-चार्ल्स विल्किंस-डी.सी.सरकार-राजेन्द्रलालमित्र-पण्डित राधाकान्त शर्मा इत-ादीनां -ोगदान: तु अत-न्तो महत्त्वपूर्ण: आसीत्। पुरातत्त्वसम्बन्धिसामग्र-ा: तु भारती-ेतिहासस-ा निर्माणे उत्तमरूपेण सहा-ाका: सिद्धा: जाता: तस्मात् हेतो: पुरातत्त्व: तु एकस्मिन् स्वतन्त्रे विष-ारूपे प्रतिस्थापितो जात:।

अभिलेखा: तु मौर्-ा-शुङ्ग-आन्ध्र-सातवाहन-कुषाण-क्षत्रप-गुप्त-वाकाटक-चालुक-ा-राष्ट्रकूट-चोलादीनां वंशानां प्राचीनतमस-ा इतिहासस-ा तथा च संस्कृते: विष-े महत्त्वपूर्णं ज्ञानं प्र-ाच्छन्ति।

**राज्ञो वंशा: –**

रुद्रदाम्नो गिर्णाराभिलेखे (१५० ख्रिष्टाब्दे) रुद्रदाम्ना सह पितामहस-ा चष्टनस-ा तथा च पितु: ज-ादाम्नो नाम अपि उत्कीर्णम् अस्ति तद्यथा –

**तदिदं राज्ञो महाक्षत्रपस-ा सुगृहीतनाम्न:**
**स्वामिचेष्टनपौत्रस-ा राज्ञ: क्षत्रपस-ा ज-ादाम्न:**
**पुत्रस-ा राज्ञो महाक्षत्रपस-ा गुरुभिरभ-ास्तनाम्नो रुद्रदाम्न:...।।**

समुद्रगुप्तस-ा प्र-ागसप्रशस्तौ पितामहस-ा श्रीगुप्तस-ा तथा च चन्द्रगुप्तादारभ-ा मातु: कुमारदेव-ा नाम अपि उल्लेखितमास्ति। स्कन्दगुप्तस-ा भितरीस्तम्भाभिलेखे वंशस-ा संस्थापकादारभ-ा स्कन्दगुप्तं प-न्तिं प्रत-ेकं राज्ञो नामातथा च प्रथमचन्द्रगुप्तादारभ-ा राज्ञीनामपि नामानि उल्लिखितानि सन्ति।

**राज्ञो विज-ावर्णना –**

अभिलेखेषु ऐतिहासिकवर्णनात्वेन रुद्रदाम्नो गिर्णाराभिलेखे तु राज्ञो -ुद्धे: ज-ास-ा कथा स्पष्टरूपेण वर्णिता अस्ति। रुद्रदामा तु -ौधे-ाराज्ञे उत्साहं प्रद-ामासातथा च दक्षिणाधिपतिं शतकर्णिं -ुद्धे वारद्व-ां पराजितवान् एवञ्च जीत्वा अपि तस्मै शतकर्ण-े मुक्तिं प्रदत्तवान् आसीत्। समुद्रगुप्तस-ा प्र-ागसप्रशस्तौ तु समुद्रगुप्तस-ा दिग्विज-ास-ा वर्णना विस्तारितरूपेण आलोचिता अस्ति। पुनश्च वीसलदेवस-ा दिल्लीटोपराभिलेखे (११६३ ख्रिष्टाब्दे) शाकङ्भरिन: चाहमानवंशी-ास-ा राज्ञो विज-ास-ा वर्णना प्राप-ते। वीसलदेवो हिमाल-ास-ा तथा च प्राचीनभारती-ास-ा इतिहासस-ा अपि च संस्कृते: पुनर्निर्माणा-ा विन्ध-ापर्वते स्वस-ा विज-ास्मृतिं चिरस्था-िकरणा-ा टोपरा-ां स्थितस-ा अशोकस-ा प्रस्तराभिलेखस-ा उत्कीर्णं कृतवान् आसीत्। प्रसङ्गे अस्मिन् पद्यम् एकं प्राप-ते -ाथा –

**अम्भो नाम रिपुप्रि-ाान-ान-ो: प्रत-ार्थिदन्तान्तरे**
**प्रत-ाक्षाणि तृणानि वैभवमिलत्काष्ठं -ाशऽतावकम्।**
**मार्गो लोकविरुद्ध एव विजन: शून-ो मनो विद्विषाम्**
**श्री मद्विग्रहराजदेव भवत: प्राप्ते प्र-ाणोत्सवे।।**

३. **सामाजिकचित्रणम् -**

प्राचीनेषु भारती-ेषु अभिलेखेषु तु सामाजिकचित्रणस्-ा गुरुत्वपूर्णं स्थानं विराजते। अशोकस्-ा अभिलेखेषु तु सामा-िकी परिवारप्रणाली दृष्टिगोचरभूता जाता अस्ति। वर्णाश्रमधर्मप्रसङ्गे तु ब्राह्मणस्-ा दानं क्षत्रि-स्-ा शासको वैश-स्-ा वाणिज्-ां पशुपालनामित इमे विष-ाः वर्णिताः सन्ति। पुनश्च का-स्थादीनां वर्णना परिलक्ष-ते। राजा अशोकस्तु दासैः सेवकैः सह च समुचितत्वेन व्-वहारा-ा आदेशं प्रदत्तवानपि च एनमादेशं -था-थत्वेन पालितवन्तश्च । अनेन ज्ञातुं शक्नुमो -त् स प्रजानुरागी राजा आसीदिति । तस्मिन् काले राजा एकाधिकान् विवहानपि कुर्वन्ति स्म। पुनश्च तत्कालिनः समाजस्-ा मनोरञ्जना-ा मृग-ा-गीत-द्यूतक्रीडादीनामपि उल्लेखः प्राप्-ते। कुषाण-शकादीनां शासकानाभिलेखाज्ज्ञा-ते -त् ते प्राचीनभारती-ेतिहासस्-ा कृते संस्कृतेः पुनर्निर्माणा-ा च हिन्दुधर्मस्-ा संस्कृतिभाषासु च प्रभावितो भूत्वा हिन्दुधर्मस्-ा रीतिनीतिं स्वीकृतवन्तः। ते भारती-शासकैः सह वैवाहिकं सम्बन्धं स्थापितवन्तः। पट्टवा-श्रेण-ाः मन्दसौरप्रस्तराभिलेखात् ज्ञा-ते -त् स्त्रि-ो -दा बहिर्गच्छन्ति स्म । तदा ताः रेशमिवस्त्र-स्वर्णहार-पुष्पमालिका इत्-ादीनां धारणं कुर्वन्ति स्म।

४. **धार्मिकावस्था -**

अभिलेखेषु विभिन्नानां धर्माणां सम्प्रदा-ानां कथा उल्लिखिता अस्ति। अशोकस्-ा अभिलेखे तु ब्राह्मण-श्रमण-आजीवक इत्-ादीनां धार्मिकसम्प्रदा-ानां प्रचलनमासीत्। राजा अशोकस्तु राष्ट्रधर्मेण सह व्-क्तिगते जीवने अपि बौद्धधर्मं स्वीकृतवान्। धार्मिकस्वतन्त्रता-ाः अतीतं मनोहरं रूपं तु अभिलेखे परिलक्षितं भवति। चेदिवंशस्थस्-ा कलिङ्गराज्ञः खारवेलस्-ा हाथीगुम्फाभिलेखे (प्रा-ो द्विती-शताब्द्यां) तु आदौ अर्हत-जैनसम्प्रदा-स्-ा सिद्धपुरुषाणां कृते नमस्कारसूचकं वाक्-ां विराजते -

**नमो अरहन्तानं नमो सव सद्धानम्**

**(नमः अर्हद्भ्-ाः। नमः सर्वसिद्धेभ्-ाः)।**

गुप्तराजा तु पुनो वैष्णवधर्मस्-ा अनुरागी आसीत्। मेहरौली इति लौहस्तम्भाभिलेखे राजा चन्द्रगुप्तो विष्णोः ध्वजं स्थापितवान् तस्-ा वर्णना कृता अस्ति -

**तेना-ं प्रणिधा-ा भूमिपतिना भावेन विष्णौ मतिम्।**

**प्रान्शुर्विष्णुपदे गिरौ भगवतो विष्णोर्ध्वजः स्थापितः।**

अभिलेखस्-ा प्रारम्भे तु मङ्गलवाचकाः शब्दाः प्र-ुज्-न्ते तद्यथा - ओम्, स्वस्ति, श्री, औ इत्-ाद-ाः। सू-र्-शिव-शक्ति-गणेश इत्-ादीनां देवानामाराधना-ाः उल्लेखः अपि बहुषु स्थलेषु प्राप्-ते। अभिलेखाः निर्विघ्नेन समाप्तिं गच्छे-ुः इत्-स्माद् हेतोः मङ्गलकामनां कुर्वन्ति स्म।

महाराज्ञः संक्षोभस्-ा खोह इति ताम्रपट्टे (५२४ ख्रिष्टाब्दे) ओं नमो भगवते वासुदेवा-ा इति उत्कीर्णः अस्ति। एतान् अतिरिच्-ा अपि -ज्ञ-दान-मन्दिरस्-ा निर्माण-मन्दिरस्-ा जीर्णोद्धार-प्रतिमास्थापन-देवता-पूजा-उत्सव-व्रत-तीर्थ-ात्रा इत्-ाद्याः विष-ाः वर्णिताः सन्ति।

५. **भाषा -**

भाषाज्ञानं लिपिज्ञानं वा पश्चात्वर्तीनां भाषाणां लिपीनां वा क्रमविकाशस्-ा अवबोधने विशेषं ज्ञानं प्रददाति। अभेलेखेषु प्र-ुक्ताभ्-ो ब्राह्मीलिपिभ्-ः आधुनिकदेवनागरीलिपिः प्रकाशिता अस्ति इति मन्-ते। अभेलेखेषु प्राप्ताभ्-ां संस्कृत-प्राकृतभाषाभ्-ां प्र-ोगेण तत्कालिन्-ाः भाषा-ाः वैविध्-ा-ा तथा च भाषा-ाः विकाशा-ा क्रमावबोधे सह-ोगिता प्रदी-ते। लेखनकला-ाः प्राचीनता-ाः प्रामाणिकं तथ्-ं तु एतेभ्-ः अभिलेखेभ्-ः प्राप्-ते। मौ-र्वंशी-ाभिलेखेषु अशोकस्-ा १७ शिलालेखाः, ७ स्तम्भलेखाः तथा च अन्-े लघुलेखाः अधिकांशत्वेन प्राकृतभाषा-ां तथा च ब्राह्मलिपिषु उत्कीर्णाः सन्ति। चेदिवंशस्थस्-ा कलिङ्गराज्ञः खारवेलस्-ा हाथीगुम्फाभिलेखः तु प्राकृतभाषा-ां तथा च ब्राह्मलिपिषु प्र-ुक्तः अस्ति तथा च क्षत्रपकालिनो रुद्रदाम्नो गिर्णाराभिलेखः तु (७२ शकसंवति, १५० ख्रिष्टाब्दे) ब्राह्मीलिप्-ां तथा च संस्कृतभाषा-म् उत्कीर्णः अस्ति, एतौ अभिलेखौ विशेषं स्थानं स्वीकृतवन्तौ। गुप्तवंशस्थस्-ा सम्राटः समुद्रगुप्तस्-ा, द्विती-चन्द्रगुप्तस्-ा, स्कन्दगुप्तस्-ा

इत्‍यादीनामभिलेखाः तु ब्राह्मलिप्‍यां तथा च संस्कृतभाषायाम् उत्कीर्णाः सन्ति, एते अभिलेखाः तु इतिहासनिर्माणे सहायकाः सिद्धाः जाताः सन्ति। अतीते ज्ञानवृद्धये तु एतेषामभिलेखानां भाषा एकं गुरुत्वपूर्णं स्थानं धत्ते।

६. अर्थनैतिकी आर्थिकी अवस्था वा –

अभिलेखेषु वर्णितैः भूमिदान–ग्रामदान–कूपनिर्माण–बाँधनिर्माणैः तथा च ताम्रपट्टादीनां प्रयोगेन तत्कालिन्याः समाजव्यवस्थायाः समृद्धेः अपि च उत्कृष्टार्थिकव्यवस्थायाः विषये ज्ञातुं शक्यते। आर्थिकी व्यवस्था समीचीना आसीदित्यस्माद् हेतोः प्रजाभ्यः कर–उपहार–दान–शुल्क इत्यादीन् न गृहीतवान् राजा रुद्रदामा। अपि च राजा स्वयम् एव स्वस्य राजकोषाद् बहुलमर्थं प्रदाय सुदर्शनह्रदस्योपरि उत्कृष्टबाँधं निर्मितवान्। नालन्दा इति ताम्रपट्टे अपि भोजनव्यवस्थायाः उच्चस्तरः प्रदर्शितः अस्ति सम्यग् बहुघृत–बहुदधिभिः व्यञ्जनैः युक्तमन्नम्। रुद्रदाम्नः तथा च स्कन्दगुप्तस्य तिथिरहिताद् गिर्णाराभिलेखात् ज्ञायते यत् चन्द्रगुप्तमौर्य–अशोकाभ्यां निर्मितानां प्रणालीनां व्यवस्था तु सुसम्पन्ना आसीत्, सुदर्शन इति नामकः ह्रदस्तु रुद्रदामा–स्कन्दगुप्ताभ्यां पुनः संस्कृतः आसीत्। व्यवसायाः कृते निगमश्रेण्याः कथा अपि उक्ता अस्ति। पट्टवायान्तर्गते मन्दसौराभिलेखे (५२९ मालवसंवत्, ४७२ ख्रिष्टाब्दे) सूर्यमन्दिरस्य निर्माणं तथा च पुनरुद्धारः, वस्त्रस्य विज्ञापनं तथा च तेषां वस्त्राणां देशे विदेशे च प्रसिद्धलाभः इति इमे विषयाः तु आर्थिकीं स्थितिं स्पष्टीकुर्वन्ति।

७. प्रशासनिकी व्यवस्था –

अशोकस्य शासनकाले तु नृपप्रजयोः परस्परः सम्बन्धः आसीत् पिता पुत्र इव। अशोकः तस्य शासनसूत्रस्य सर्वाणि अपि कार्याणि स्वकेन्द्रिकानि कृतवान्। स जनकल्याणाय वृक्षरोपण–नलकूपनिर्माण–औषधिव्यवस्था–मनुष्यपशुचिकित्सा इत्यादिव्यवस्थाः कृतवान् आसीत्। अशोकस्य राज्ये तु महापात्र–धर्ममहापात्र–राजुक–प्रादेशिक इत्यादयः आधिकारिकाः नियुक्ताः भवन्ति स्म। गुप्तसाम्राज्यं तु बहुधा विभक्तमासीत्। प्रान्तीयः शासकः राष्ट्रिक–भोगिक–भोगपति इत्यादिभिः नामभिः परिचितः आसीत्। समुद्रगुप्तस्य प्रयागप्रशस्तौ तु केषाञ्च आधिकारिकपदानां नामोल्लेखः प्राप्यते तद्यथा – आयुक्तः, पुरुषः, महादण्डनायकः कुमारः, अमात्यः, सन्धिविग्रहः इति। करं यो गृह्णाति स षष्ठाधिकृत इति उच्यते स्म। रुद्रदाम्नो गिर्णाराभिलेखे उल्लेखितम् अस्ति यत् – सुदर्शनह्रदस्य उपरि बाँधनिर्माणाय प्रजाभ्यः कर–वेगार–उपहारादीन् न स्वीकृत्य स्वस्य राजकोषाद् बहुलम् अर्थं प्रदाय यादृशी दृढता आसीत् तां दृढतां परिवर्त्य इतोऽपि गुणत्रयं वर्धितवान् अपि विस्तारम् अपि अधिकं कृतवान्। अनेन ज्ञातुं शक्यते यत् तत्कालिनी समाजव्यवस्था तथा च प्रशासनिकी व्यवस्था तु सुशृङ्गलाबद्धा आसीदिति।

उपसंहारः –

निःसन्देहेन प्राचीनभारतीयसंस्कृतेः यथार्थरूपत्वेन अभिलेखस्तु महत्त्वपूर्णाङ्गरूपेण विद्यमानः। अभिलेखेषु तु तत्कालिकसमाजिक–धार्मिक–आर्थिक–साहित्यिक इत्याद्यानां स्थितीनां चित्रणं प्राप्यते। यदि अभिलेखानाम् अन्वेषणं न अभविष्यत् तर्हि कालान्तरेण भारतीयाः प्राचीनलिपीनां ब्राह्मी–खरोष्ठीत्यादीनां ज्ञानमपि नाभविष्यत् इति। यदि अभिलेख–स्मारक–मुद्रा इत्यादीनां यदि पुरातत्त्वविदः अन्वेषणं न कृतवन्तः स्युस्तर्हि भारतः स्वस्य अतीतस्य गौरवाद् वञ्चितो भविष्यति। तथा च वक्तुं शक्यते यत् प्राचीनभारतस्य इतिहासस्य संस्कृतेः निर्माणे च अभिलेखः तु विशेषरूपेण सहायकः सिद्धः अस्ति।

साहित्यविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी



# ऋग्वेदे सवितृतत्त्वविमर्शः

ज्योतिर्मयी परिडा

ऋग्वेदे बहुदेवतानां वर्णनं दृश्यते । बहुदेवतावाद: एकदेवतावाद: तथा सर्वेश्वरवाद इति विधानां देवताविषयकवादानां परिचर्चा विद्वद्भिः क्रियते । देवतानां विषये तत्तपदार्थेषु स्थित:अभिमानीदेव:एवदेवतारूपेण स्तूयते । बादरायणव्यास: स्ववेदान्तसूत्रे अस्मिन्विषये प्रतिपादयति,देवताशब्दो दिव्धातो: व्युत्पाद्यते । अस्य शब्दस्य प्रयोग: क्रीडा-विजिगीषा व्यवहार-द्युतिस्तुति-चमत्कृति-मोदमद-स्वप्न-कान्ति-गत्यादिषु अर्थेषु प्रयुज्यन्ते[१] । दिव्धातो:अच्प्रत्ययात् संयोजनाय देव:शब्दो निर्मीयते[२] । देवेन सह स्वार्थार्थे (देवात्तल्) सूत्रेण"तल् प्रत्यय-संयोजनेन पुन:देवताशब्दो निष्पद्यते[३] । यास्काचार्येण विरचिते निरुक्तशब्दकोषस्य दैवताकाण्डे देवताशब्दस्य निर्वचनमेवं कृतमस्ति । यो देव:सा देवता[४]। देव: दानात्दीपनात्वाद्योतनात्वाद्युस्थानो भवतीति वा[५] । शाङ्करभाष्ये - मनुष्याणामेवादान्ता येऽन्यैर्रूत्तमैर्गुणै: सम्पन्नास्ते देवा:[६] । वाचस्पत्ये - यत: क्रीडति सर्गादिभि: विजिगीषते शत्रून्,व्यवहरति सर्वभूतेषु आत्मवत्तया,द्योतते स्तूयते स्तुत्यै: सर्वत्र गच्छतीति तस्मात्देव: ।।[७]

अर्थात्दानशक्तिसम्पन्नो दीपक:प्रकाशको वा देवपदवाच्योभवति[८] । य: स्वर्गे वसति। तस्मादपि देव: भवति । एतेन सिद्ध्यति यद्देवता: स्वभक्तजनेभ्य: प्रकाशं वस्तुप्रदानं च प्रयच्छन्ति एवं परं तेषां मनोरथनाबपि पूरयन्ति । अत्र सर्वासां देवतानां नामसंकीर्त्तनेन एतद्ज्ञातव्यं भवति यत्सर्वासां पूजा करणीया एव । पूजायोग्यस्तु एकल: सर्वव्यापक: सर्वज्ञश्च भगवान्एव वर्तते । देवशब्दस्य प्रयोग: तेषां कृतेऽपि भवति ये विद्वांस: सत्यस्य अर्चका:सन्ति अथ च सत्यविद्याया: प्रकाशं कुर्वन्ति । यतो हि ते ज्ञानस्य दानं प्रयच्छन्ति, वस्तूनाञ्च यथार्थरूपेणवर्णनमपि कुर्वन्ति ।

देव-शब्द:अनेकार्थान् अभिव्यनक्ति । सा एव देवतापदवाच्या या मानवेभ्यो सर्वदा यत्किमपि प्रयच्छति एव । विद्वान्पुरूषोऽपि देवता अस्ति । लिखितमपि "**विद्वांसो हि देवा:** यतो हि ते विद्याया दानं प्रयच्छन्ति । एवं सूर्य:. चन्द्र:आकाश्चापि देवता:सन्ति । ता: सर्वा:प्रकृतिं प्रकाशयन्ति। माता आचार्य: अतिथि चापि देवा:सन्ति । एवं प्राणा: चक्षु: वायु: अन्तरिक्षमादित्य: इत्यादय: अर्था: उपलभ्यन्ते ।मुख्यरूपेण देवता तिसृषु श्रेणीषु विभाज्यते ।

(१)पार्थिवदेवता: ।
(२)स्वर्गीयदेवता: ।
(३) अन्तरिक्षस्थानीयदेवता: ।

यास्केनापि तिस्त्र एव देवता उक्ता: । पृथिव्याम् अग्निदेवता मध्ये वायुदेवता इन्द्रदेवता वा आकाशे च सूर्यदेवता । दिगनुसारमपि विभाजनं भवति । यथा - स्वर्ग-स्थानीया द्यु-वरूण-मित्रादित्य-सूर्य-सविता - पूषा - विष्णु-अश्विनौ-ऊषादय:।

वायव्यस्थानीया इन्द्र-वायु-पर्जन्य-रूद्र - अज-मातरिश्वा - त्रित-आपत्य- अपानपात-अहिर्बुध्न्य-आपो देवता च। पृथिवीस्थानीया अग्निबृहस्पति-सोम- सिद्धादया: ।

**देवतानां संख्या –**

**ये देवासो दिव्येकादशस्य पृथिव्यामध्येकादशस्य ।**
**अप्सुक्षितो महिनैकादशस्य ते देवासो यज्ञमिमं जुषध्वम् ।।**[९]

देवतानां संख्या विषये वैदिकानां पौराणिकानां च मध्ये मतभेद: दृश्यते । यास्काचार्येण स्वनिरूक्ते याज्ञिकानां बहुदेवतावादस्य तथा आत्मविदाम् एकात्मवादस्य समन्वेयेन तिस्त्र: देवता:इति प्रतिपादिता: । बृहत्देवताकारमतानुसारेण–

अग्निरस्मिन्नथेन्दरस्तु मध्यतो वायुरेव च ।
सूर्योदिवीति विज्ञेयास् तिस्र एवेहिदेवता ।।[१०]

पृथिवीस्थानीयानां देवानां मध्ये प्रमुखः अग्निः अन्तरिक्षस्थानीयदेवानां मध्ये प्रमुखः इन्द्रः अथवा वायुः तथा द्युस्थनियदेवतानां मध्ये प्रमुखः आदित्यः । ऋक्मन्त्रे देवानां संख्या विषयकं वर्णनमपि प्राप्यते त्रयः त्रिंशद्देवाःइति उच्यन्ते । ऐकादशः पृथिवीस्थानीयाः एकादशान्तरिक्षस्थानीयाः तथा एकादशद्यूस्थानीयाः भवन्ति । ताण्ड्यब्राह्मणे तैत्तिरीयब्राह्मणे तथा च कौषितकिब्राह्मणे३ ३ संख्या उल्लिखिता आसीत् ।[११]परन्तु एताः देवताः काः इतिविषये नकिञ्चित् तथ्यम् अव्याप्यते । अस्मिन्विषये शतपथब्राह्मणे उच्यते यत्

अष्टौवसवःएकादशरूद्राः द्वादशादित्यास्त
एकस्त्रिंशदिन्द्रश्चै वप्रजापतिश्च त्रयस्त्रिशङ्क्या गाविति[१२] ।।

अष्टौवसवःएकादशरुद्राः द्वादशआदित्याः एकः इन्द्रः तथा एकः प्रजापतिः एवं त्रयः त्रिंश देवाः । ऐतरेयब्राह्मणे अस्याः संख्याः द्विगुणिता संख्या उच्यते । ३ ३ सोमपाःदेवाःतथा ३ ३असोमपाः देवाः । शतपथब्राह्मणे एकस्मिन्स्थाने देवानां संख्या ३ ३ ३ ९ इति । एषामपि संख्या सांख्यायन श्रौत्रसूत्रे उपलभ्यते । यद्यपि बहुदेवानां वर्णनं दृश्यते तथापि एकदेवतावादस्य स्वरःमन्त्रे अव्याप्यते ।

इन्द्रं मित्रं वरुणमग्निमाहुरथी दिव्यः स सुपर्णोगरुत्माान् ।
एकं सद्विप्राबहुधा वदन्त्यग्नि यमं मातरिश्यानमाहुः ।।[१३]

ऋग्वेदस्य एतादृश्याः भावनायाः आधारेण पुराणसाहित्ये वर्णनानि प्राप्यन्ते । मीमांसकानां मतेन देवताः अपरुषविधाः । देवानां नास्ति कश्चित् विग्रहः इत्यर्थः । देवगणःमन्त्रात्मकःइति ।यास्काचार्येण देवतानां संख्याविषये यत्-तिस्र एव देवता इति नैरुक्ता[१४] । त्रिविधित्वं उक्तम् तस्य बीजम्एकस्मिन्मन्त्रे प्राप्यते । यथा - सूर्यो नो देवतासुवातो अन्तरिक्षात्अग्निः पार्थिवेभ्यः[१५] । ऋग्वेदस्य अपरेस्मिन्मन्त्रे त्रिविधेषु स्थानेषु एकादशसंख्यकाः देवताः निवसन्ति इति ३ ३ संख्यकाः देवाः इत्यस्य वर्णनं प्राप्यते ।

ये दिवासो दिवि एकादशस्य पृथिव्यध्येकादश स्थ ।
अप्सुक्षितो महिननेकादशस्थ ते देवासो यज्ञमिमं जुषध्वम् ।।[१६]

त्रिविधेषु स्थानेषु तिस्रः प्रमुखाः देवताः अपिपरिगणिताः सन्ति । एतत् ध्यातव्यम् यत् ऋग्वेदीयमन्त्रेषु आदौ अग्निसूक्तं ततः इन्द्रसूक्तं तथा तृतीयस्थाने विश्वेदेवपरकं सूक्तं प्राप्यते।

**द्युस्थानीयाःदेवता**

द्युस्थानीयदेवतासु प्रमुखः भवति आदित्यः । आदित्यस्य अपि विविधानि रूपाणि परिवर्जितानि दृश्यन्ते । ऋग्वेदे पृथक् रूपेण सूर्यस्य सवितुः मित्रस्य आदित्यस्य च कृते सूक्तानि प्राप्यन्ते । यदि सः एकः एव देवः तर्हि कथं पृथक्सूक्तानि प्राप्यन्ते इति प्रश्नःमनसो स्वतः आयाति ।

सवितृः देवस्य महत्वं ऋग्वेदे दृग्गोचरीं भवति । एकादशसूक्तेषु ऋग्वेदे सवितुः स्तुतिः दृश्यते । सः हिरण्यमयः तथा द्वाभ्यां संचालितरथेन सःप्रतिदिनं आगच्छति इति वर्णनं सूक्तेषु दृश्यते । सविता शब्दस्य अर्थः विविधेषु ग्रन्थेषु परिचर्चितः दृश्यते ।

**सवितृदेवः**

"सुह्लधातोः सविता शब्दस्य उत्पत्तिः भवति । "सुह्ल धातोः निष्पन्नाः अनेके शब्दाः सवितुः कृते भवन्ति । यथा – प्रसविता एवं प्रसवः ।

सविता यदा प्रारम्भे सूर्यस्य एकं विशेषणमात्रमासीत्अनन्तरं एकसूक्ष्मदेवः इति परिचितः अभूत् । सविता सूर्योदयस्य प्राक्कालीनः देवः । तदानीमाकाशात्अन्धकारः दूरीभूतः भवति तथा तस्य किरणाः आकाशमार्गे विच्छुरिताः

भवन्ति । सवितृदेवं हिरण्याक्ष: हिरण्यबाहु: हिरण्यहस्त: हिरण्यपाणि: हिरण्यजिह्व: इति उच्यते । सवितृदेवस्य स्वर्णमय: रथ: श्वेत: अश्व: च अस्ति । सवितादेव:मनुष्याणां कृते रत्नदानं करोति । यज्ञे श्रेष्ठधनदाता सवितृदेव: । सविता एव यज्ञदेवस्य कृते अमरत्वसाधनभूतं सोमम् उत्पादयति तथा हव्यदात्रे तथा पृथिवीलोकं द्युलोकं च विस्तारयति । प्रजानां कल्याणाय स्वभुजं प्रसारयति । हिरण्यमयौ बाहू ऊर्ध्वं प्रसारयति तथा संसारस्य रक्षणार्थं जलमयौ बाहू प्रेरयति । विश्वस्य आनन्दार्थं उदित:सन्बाहूतेज:वा प्रसारयति ।

प्रजानां कृते धनं प्रददाति । यद्यपि सवितृदेव:सर्वसुखं प्रियजनानां कृते च दीर्घायु: प्रददाति तथापि धनप्राप्त्यर्थं विशेषरूपेण सविता स्तूयते । प्रचुरधनदात्रीदेव:सविता अत: स्तुत्या धनं वर्षति । धनद:सवितास्तोतृभ्य: सविता । घृतव्रतसविताजगत: कृत्स्न ईश्वर: जगत् विधारयति । व्रतरक्षकश्च भवति ।

सवितु: देवस्य महिमा त्रिलोके व्याप्त: अस्ति । कर्मप्रसविता सविता सर्वेभ्य: गन्तव्य: भवति स्थावरजङ्गमयो: उपरि तस्य शासनं तिष्ठति । सविता सर्वेषां द्विपदचतुष्पदानामुत्पत्तिकर्त्ता स्वर्णमयहस्तयुक्त: भवति । अश्वयुक्तरथेन स्वतेजसा व्याप्त: मनुष्याणां हितार्थं धनधारणं सदा प्रेरिता:भवन्ति । यदा सविता उदित:भवति तदा यज्ञकर्मप्रारम्भ भवति । तस्य अस्तकाले युद्धरत: राजा अपि युद्धं परित्यज्य स्वगृहं प्रत्यागच्छति । सर्वे गतिशीला:कर्मनिष्ठा: जना: स्वस्वकार्याणी परिसमाप्यु स्वगृहं प्रत्यागच्छन्ति । सविता सुवर्णहस्त:प्राणदातासु नेता हर्षदाता धनदाता भवति । सवितु: मार्ग: सुनिश्चित: रजरहित: तथा सुनिर्मित: भवति । सविता अन्तरिक्षस्य भ्रमणं कृत्वा समस्तलोकान्निरीक्षति ।

**सवितृशब्दस्य परिभाषा**

यास्काचार्यप्रणीत निरूक्तानुसारं सर्वेषामुत्पादकरूपेण सवितावर्णित: अस्ति ।

सर्वस्य प्रसविता । तस्यैषा भवति[१७] । सर्वस्य कर्मण: वृष्टिदानादिना य: अभ्यनुज्ञायति स: सविता ।(प्रसवैखर्ययो:) तृन्सविता सर्वस्य कर्मप्रेरक: सविता प्राणिनां कृते अन्नदात्रीभवति ।वामनशिवराजआप्दे इत्यस्य संस्कृतकोषाननुसारं सवितृशब्दस्य अर्थ: भवति जनक:उत्पादक: फलदाता च । पुन:सवितृशब्द: शिवस्य इन्द्रस्य मन्दारवृक्षस्य तथा अर्कवृक्षस्य पर्यायवाची ।

सूर्यकान्तस्य वैदिककोषानुसारं सवितृशब्दस्य अर्थ: भवति प्रेरक: । चन्द्रशेखर उपाध्यायकृतस्य वैदिककोषानुसारं सवितृशब्द: सर्वस्य प्रसविता अर्थे प्रयुज्यते । आदित्य: अपि सविता उच्यते । सु तृच् - सवितृ । सप्तार्थेषुसविता शब्दस्य प्रयोग: अध:प्रदत्तोऽस्ति।

१. जगत्प्रेरक: जगत्स्रष्टा वा सूर्य: ।

२. इन्द्र:अर्थ वा परमात्मा । सवितृकारणात् सूर्यस्य बोध: भवति ।

देवोऽनयत्सवितासु पाणि:[१८] ।।

सविता यन्त्री पृथिवीमरभ्णात्[१९] ।।

३. पदयात् पूर्वम् अदित्यस्य रूपं सविता उच्यते ।

४. प्रसविता, पिता, पालक: ।

५. वैश्वानराग्नि: ।

६. वायु: सर्वप्रेरक: ।

७. राष्ट्रस्य समाहर्त्तानामक: अधिकारी ।

दधातारात्री: सवितेदं जुषन्ताम्[२०] ।।

**निर्ष्कष:**

**नम: सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे ।**
**त्रयीमयाय त्रिगुणात्मधरिणे विरञ्चिनारायणशङ्करात्मने ।।**

सवितृदेव:सर्वेषां प्राणिणां जनकस्तथापोषक:। पुन: प्राणिनां कृते चेतनां प्रयच्छतु । सर्वेषां प्राणिनां रोगनिवारक: भवतु ।

**पादटिप्पनी**

१.वै.को,पृ.४८५
२.अष्टा.१.१३४ Sanskrit English Dictionary ,page 492(Manigr Williams)
३.वै.,पृ.४८९
४.नि.७.१
५.नि.७.१५.बृ.उ.(शाङ्कर भाष्य)
६.२,पृ.११८७
७.वाचस्पत्यम्,भाग-५,पृ.२६७५
८.The Regvedic and Vedic Religion, Page(Maxmuller) 52-53
९.ऋ.१.१३९.११
१०.बृ.१.६९
११..ता.बा.१०.१०.१६,
१२.श.ब्रा.११.६.३.५ तै.बा.१.२.२.५,कौ.बा.८.६
१३.ऋग्-१.१६४.४६
१४.नि.७.५
१५.ऋक्-१०.१५.१
१६.ऋक्-१.१९९.११
१७.नि.१०.३२
१८.ऋक् ३.३३.६, नि२.२३
१९.ऋ.१०.१४९.१, नि.१०.३२
२०.अ.२.८.२, ७.२७.४, वाज.सं.८.२७

शोधच्छात्रा, पुराणेतिहासविभाग:,
केन्द्रीयसंस्कृतविश्वविद्यालय:,श्रीसदाशिवपरिसर:, पुरी।



## तर्कभाषासु बौद्धतर्कभाषाया: उपादेयता

मधुमिता दास:

भारतीयदर्शनपरम्परायां न्यायतर्कभाषा, जैनतर्कभाषा, बौद्धतर्कभाषा इति ग्रन्थत्रयं विद्यते। तत्र तर्कविषये सम्यक्तया विवरणं परिलक्ष्यते। उपनिषदि यद्यपि अध्यात्मवादीनामात्मज्ञानार्थं तर्कस्य प्रयोजनीयता न दृश्यते, परन्तु नैयायिका:, जैना:, बौद्धाश्च यथार्थज्ञानमुपस्थापयितुं तर्कस्याश्रयं नयन्ति। तर्काश्रयेण क्रियमाणा विचारा: विशुद्धा: भवन्ति। तर्केण सत्यस्योन्मोचनार्थं बहुप्रयाससाध्य: यथार्थवाक्यस्य प्रयोग: दृश्यते। अत एवोच्यते- **"युक्तियुक्तं वचो ग्राह्यं बालादपि शुकादपिह्व**

दार्शनिकस्तत्वचिन्तका: किमपि तत्वमुपस्थापयितुं तत्वानुरूपतत्वस्य च संरक्षणार्थं तर्कवाक्यस्यानिवार्यता स्वीकुर्वन्ति। तर्कस्य महत्वं किमिति जिज्ञासते सति, तर्हि उच्यते- तर्केण यदुपस्थाप्यते, तत् मोह: नाशयति, विचारेषु बुद्धे: निर्मलता आपादयति, संस्कृतपदानां व्यवहारे दक्षता आपादयति, शास्त्रान्तरभ्यसने योग्यता आपादयति, संशयिताज्ञाने यथार्थता आपादयति। इदमेवार्थं लक्ष्यीकृत्य केनाप्याचार्येण तर्कस्य महत्वं प्रतिपादितं यत्-

**"मोहं ऋणद्धि विमली कुरुते च बुद्धिं सूते च संस्कृतपदं व्यवहारशक्तिम्।**
**शास्त्रान्तरभ्यसनयोग्यतया युनक्ति तर्कश्रमो न तनुते कमिहोपकारकम् ।।"**[१]

भारतीयदर्शनशास्त्रपरम्परायां तर्कशास्त्रं नैकविधनामभि: सम्बोध्यते, अपितु बहुनि नामानि सन्ति इत्यस्य यथा- तर्कशास्त्रं, हेतुविद्या, हेतुशास्त्रं, प्रमाणशास्त्रं, न्यायशास्त्रम्, आन्वीक्षिकी इत्यादय:। प्रदीपवत् देदीप्यमान: न्यायशास्त्रस्य महत्वं सुविदितम्। प्रसिद्धन्यायभाष्यकार: वात्सायनस्य भाषया तर्कशास्त्रस्योपायभूता प्रयासेन प्रदीपवत् ज्ञानालोकवर्तिका प्रज्वालयति तर्कज्ञानरूपा शक्तित: विदुषां चेतसि। अत्रोक्तम्-

**"प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।**
**आश्रयः सर्वधर्मणां विद्योदेशे प्रकीर्तिता।।**[२]

भारतीयदर्शनशास्त्रे तर्कस्योपयोगः प्रामुख्येन प्रकारत्रयेण प्रयुज्यन्ति दार्शनिकाः। तद्यथा-

(१) स्वसिद्धान्तोपस्थापयितुमेव च संरक्षणार्थम्।
(२) स्वसिद्धान्तोपरि आरोपितः दोषस्य, आरोपस्य, आक्षेपस्य च निवारणम्।
(३) अपरमतं खण्डनार्थं एवं स्वमतसंरक्षणार्थं च।

तार्किकविचारधारायां तार्किकविचारयुक्तकथा त्रिविधा इति प्रशस्तिरस्ति। वाद- जल्प- वितण्डा इति कथायाः भेदत्रयं निरूपितम्।

- वादः- गुरुशिष्ययोर्मध्ये तात्विकविचारनिष्कर्षः
- जल्पः- जल्पर्नाम द्वयोः प्रतिस्पर्धिनोः स्वमतोपस्थापनपूर्वकं परमतखण्डनप्रचेष्टा
- वितण्डा- अपरमतखण्डननिमित्तं विचारविमर्शः

यदा कदा वादशब्दस्योपयोगः तार्किकविचारधारायां तर्कशास्त्रम् अथवा वादविद्या वादशास्त्रं वेति व्यवह्रियते। आचार्य असङ्गेन वादविद्यायाः विभागः षड् भागेन विभाजितम्, तद्यथा- (क) वादः (ख) वादाधिकरणम् (ग) वादाधिष्ठानम् (घ) वादात्मकारः (ङ) वादनिग्रहः (च) वादे बहुकरेति।

(क) वादः- वादस्य स्वरूपं स्पष्टीकर्तुं षट् प्रकाराः स्वीक्रियते, यथा- भाषणम् , प्रवादः, विवादः, अपवादः, अनुवादः, अववादः। एतेन तत्वज्ञाननिष्पत्तिर्जायते।

(ख) वादाधिकरणम्- सिद्धान्तनिष्पत्तये निष्कर्षपर्यन्तं वादः प्रचलति। तत्र प्रशासनिकाधिकारी, ब्राह्मणपरिषदाधिकारी अर्थात् बौद्धभिक्षुकानां महत्वं स्वीक्रियते।

(ग) वादाधिष्ठानम्- वादस्य संरक्षणार्थं आवश्यकता अथवा संचालकस्यावश्यकता हेतुरेव वादाधिष्ठानामि।

(घ) वादालंकारः- वक्तायाः गुणबाहुल्यता स्वीक्रियते। एते गुणाः पञ्चधाभवन्ति, यथा- स्वपरसमयज्ञता, वाक्कर्म सम्पन्नता, वैशारद्यता, धीरता, दाक्षिण्यता इति।

(ङ) वादनिग्रहः- प्रतिपक्षपराजितोपायः वादनिग्रहः। मैत्रेयमतेन निग्रहस्त्रिविधः, यथा- वचनसन्यासः, कथाप्रसादः, वचनदोषेति।

(च) वादे बहुकरः- विषयविशेषज्ञता वादे बहुकरेति ख्यातः।

दार्शनिकाः स्वमतोपस्थापयितुं अवश्यं प्रमाणमुपयोगः कुर्वन्ति। प्रमाणं दृढीकर्तुं तर्कस्यावश्यकता विद्यते। अत एव तर्कस्य मूले प्रमाणानां संस्थितिः। एतदर्थं कियन्त प्रमाणानि स्वीकुर्वन्ति दार्शनिकाः चेदुच्यते-

**"प्रत्यक्षमेव चार्वाकाः बौद्धवैशेषिकाः द्वयम्**
**सांख्ययोगास्त्रयं चैव तार्किकाश्च चतुष्टयम्।**
**पञ्च प्रभाकराभाट्टा तथा वेदान्तिनश्च षट्**
**पौराणिकास्तथा चाष्टौ प्रमाणानि कुर्वन्ति वैः।।**

भारतीयदर्शनसम्प्रदाये आस्तिकनास्तिकविचारधारायां भिन्नस्तर्कः प्रचलितः। विचारचातुर्यकारणात् सामान्यरूपेण तर्कशास्त्रं वर्गत्रयेण विभज्यते, तद्यथा- ब्राह्मणतर्कः, जैनतर्कः, बौद्धतर्कश्चेति भेदेन।

**ब्राह्मणतर्कः**- वेदानुकुलास्तिकसम्प्रदायान्तर्गतस्तर्कः यत्र न्यायशास्त्रस्य प्राधान्येन परिस्फुरणं दृश्यते

**जैनतर्कः**- जैनतर्कस्तु जैनसम्प्रदायानुमोदितः यथार्थसत्यानुसरणरूपं वाक्यम्।

**बौद्धतर्कः**- बौद्धतर्कस्तु बौद्धसम्प्रदायाचार्यानुमोदितः यथायथःसत्यप्रकाशस्य प्रारूपम्।

इतिहासपृष्ठावलोकनेन दृश्यते यत् ब्राह्मणतर्कसम्बन्धितः न्यायविद्यया सह बौद्धस्तर्कस्य वादानुवादः कारणात् अनयोस्तर्कयोः शुद्धिरूपता परिवर्धता च आपादिता भवति। यद्यपि न्यायविद्या बौद्धन्याययोः परस्परविरुद्धाभासः सुस्पष्टः,

तथापि एकैकशः स्व स्व पक्षस्य स्वरूपप्रतिपादने पूर्वोत्तरपक्षीरूपेणोद्भासितः भवन्ति। यदि गौतमीयन्याय एवं बौद्धन्याययोः तुलनात्मकाध्ययनं क्रियते, तर्हि भारतीयतर्कशास्त्रे गौरवमयस्येतिहासस्य पुनरुद्धारः भविष्यति। गौतमीयन्यायः सर्वप्राचीनन्यायेति प्रख्यातिरस्ति, परन्तु बौद्धन्यायः अर्वाचीन भूत्वाऽपि तत्समस्थानं पूरयति। गौतमीयन्याये प्रादुर्भूता आचार्याः, यथा- गौतमः, वात्सायनः, उद्योतकरः, वाचस्पतिमिश्रः, उदयनाचार्यः, गङ्गेशोपाध्यायः, वर्धमानः, वासुदेवः, रघुनाथः, मथुरानाथः, जगदीशः, गदाधरः प्रभृतयः आचार्याणां नामानि दृष्टिपथमागच्छन्ति। एते आचार्याः स्व स्व तार्किकचातुर्येण बौद्धाचार्याणां सैद्धान्तिका युक्तिं खण्डयन्ति। बौद्धन्यायस्य प्रादुर्भावसन्दर्भे चतुर्विधाधिकरणानि प्राप्यते, यथा-

(१) विवादाधिकरणम्
(२) अनुवादाधिकरणम्
(३) आपत्ताधिकरणम्
(४) किञ्चाधिकरणम्

बौद्धदर्शनस्य सर्वप्राचीनसाहित्यं भवति त्रिपिटकसाहित्यम्, यथा- सुतपिटकम्, विनयपिटकम्, अभिधर्मपिटकम् चेति। त्रिपिटकसाहित्याधारेण बौद्धन्यायस्य क्रमिकविकासः बौद्धदर्शनस्य सौत्रान्तिकः, वैभाषिकः, माध्यमिकः, योगाचारश्चेति चातुर्विध्यसम्प्रदायाधारेण संजातरभूत्।

शून्यवादस्य प्रतिष्ठापकरूपेण आचार्यनागार्जुनस्य प्रख्यातिः श्रुयते। तेन माध्यमिककारिका विरच्य बौद्धन्यायं प्रचारक्षेत्रे योगदानं कृतवान्। बौद्धन्यायस्य प्रचारक्षेत्रे आचार्याणां महत्यवदानं विद्यते, तेषु आचार्यवसुबन्धुः विज्ञानवादस्य प्रतिष्ठापकाचार्यरासीत्। पुनश्च नागार्जुनः, वसुबन्धुः, दिङ्नागः, धर्मकीर्तिः, धर्मोत्तरः, शान्तरक्षितः, कमलशीलः, मोक्षाकरः इत्यादीनामचार्याणा प्रशस्तिरस्ति। आचार्यदिङ्नागः बौद्धन्यायस्य संस्थापकरूपेण ख्यातः। सः प्रमाणसमुच्चयं विरच्य बौद्धन्याये सर्वेषामाश्चर्यश्चकितो अकरोत्। ग्रन्थेऽस्मिन् षट् परिच्छेदाः सन्ति, तेषां क्रमानुसारेण नामानि- प्रत्यक्षपरीक्षा, स्वार्थानुमानपरीक्षा, परार्थानुमानपरीक्षा, दृष्टान्तपरीक्षा, जातिपरीक्षा इति। प्रमाणसमुच्चये समुदायः २७० श्लोकाः सन्ति। तेषु मङ्गलपद्यस्य महत्वं बौद्धन्यायस्य प्रतिपादने समर्थीयते। यथा-

**प्रमाणभूताय जगद्धितैषिणी प्रणम्य शास्त्रे सुगताय तायिने।**
**कुतर्कसंभ्रान्तजनानुकम्पया प्रमाणसिद्धिः विधिवद्विधीयते[३]।।**

विज्ञानवादी आचार्यदिङ्नागेन न्यायशास्त्रस्य भाष्यस्य च समालोचना स्वशास्त्रे विहितम्। अत एव न्यायवर्तिककार उद्योतकरेण स्ववर्तिकग्रन्थस्यादौ कुतर्कवादी बौद्धानामाक्षेप्योल्लिखितं यत्-

**यदक्षपादः प्रवरो मुनीनां शमायशास्त्रं जगतो जगाद।**
**कुतर्किकज्ञाननिवृत्तिहेतोः करिष्यते तस्य मया निबन्धः[४]।।**

न्यायवर्तिककारस्य मतवादं प्रमाणवार्तिककारधर्मकीर्तेः खण्डनं कृतवान्। उद्योतकरमतवादमुपस्थापयितुं न्यायवार्तिकतात्पर्यटीकाकारः महान्दार्शनिकः वाचस्पतिमिश्रेण कथितम्-

**"इच्छामि किमपि पुण्यं दुस्तरं कुनिबन्धपंकमग्नानाम्।**
**उद्योतकरगवीनामतिजरतीनं समुद्धरणात्[५]**

बौद्धन्यायः गौतमीयन्यायः अनयोः तार्किकदृट्या विवादः सुस्पष्टः। महर्षि गौतमस्य न्यायसिद्धान्तः गौतमीयन्यायसिद्धान्तेति ख्यातः। तेषु प्रकाशकाचार्यस्य केशवमिश्रस्य न्यायतर्कभाषा प्रथमः। द्वितीयस्तु जैनतर्किकयशोविजयगणि विरचिता जैनतार्कभाषा। तृतीयस्तु मोक्षाकरगुप्तविरचिता बौद्धतर्कभाषा इति प्रसिद्धिरस्ति। षड्दर्शनसमुच्चये एवं तात्पर्यदीपिकायां बौद्धतर्कभाषायाः नामोल्लेखः प्राप्यते। मोक्षाकरगुप्तन विरचितायाः बौद्धतर्कभाषायाः प्रतिपाद्यविषयोऽस्ति बौद्धदृट्या प्रमाणस्य विवेचनम्। यद्यपि तार्किकविचारधारायां मोक्षाककरगुप्तः प्रमाणवार्तिककारधर्मकीर्तेः

मतावलम्बिनः प्रतीयते, तथापि स्वाभिमतप्रकाशदृट्या भिन्नता प्रतिपादयति। तेन प्रमाणस्य लक्षणं स्वतन्त्ररूपेण यदुपस्थापितम् यथा- प्रमाणं सम्यग् ज्ञानमपूर्वगोचरमि इति। तच्च प्रमाणं प्रत्यक्षानुमानभेदेन द्विविधमिति बौद्धैः सम्मतम्। बौद्धतर्कभाषायां परिच्छेदस्त्रयं स्वीकृतम्। प्रथमस्तु प्रमाणलक्षणप्रतिपादनेन साकं प्रत्यक्षप्रमाणस्य निरूपणम्। द्वितीयपरिच्छेदे तु स्वार्थानुमान स्वरूपं एवं तृतीयपरिच्छेदे परार्थानुमानस्वरूपं प्रतिपादितम्।

**पादटिप्पणी-**

१. बौ. तर्कभाषा
२. न्या. द. वा. भा
३. प्र. समु. १
४. न्या. वा. श्लो. १. १. १
५. न्या. वा. ता. टी. १. १. १

**ग्रन्थसूची-**

बौद्धतर्कभाषा, जैन तर्कभाषा, न्यायतर्कभाषा, बौद्धन्यायः, न्यायबिन्दुः प्रमाणवर्तिकम्, श्लोकवर्तिकम्, प्रमाणसमुच्चयः, द्वादशदर्शनसमीक्षणम् सर्वदर्शनसंग्रहः, भारतीयदर्शनम्

शोधच्छात्रा, सर्वदर्शनम्



# हैमपाणिनीयशब्दानुशासनयोः संज्ञाप्रकरणस्य संक्षिप्तमध्ययनम्

**महेश्वरवागः**

**उपोद्घातः-**

संस्कृतभाषाकालेन प्रवहन्ती सती तस्याः स्वरूपकल्पनायां भिन्नता समागता। नियमनं यत्र उपचर्यते तद्व्याकरणशास्त्रमिति अभिधीयते। भगवता भर्तृहरिणा प्रोक्तम्–**साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः**तत्र भिन्नमुपायं कौशलं च पुरस्कृत्य विचारः प्रस्तुतो विद्यते। पदकल्पन-वाक्यकल्पनाभ्यां काव्यनाटकादीनां शास्त्राणां प्रकृतज्ञानाय व्याकरणशास्त्रज्ञानं नूनमेवावश्यकमिति भाष्यकारेणापि निगदितं यत् -

**सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा।।**[१]

तदेव व्याकरणं वेदस्य मुखत्वेन स्मृतम्- **मुखं व्याकरणं स्मृतम्**[२]। कालक्रमानुसारेण व्याकरणसाहित्याकाशे विविधव्याकरणसम्प्रदायाः प्रादुर्भूताः। सन्त्यनेके वैयाकरणाः सहस्रशो व्याकरणग्रन्थाश्च। काले काले अनेकविधमभिधानम् एतस्य जायते। शब्दानुशासनं व्याकरणं चेत्यादिभावेन प्रयोगसाधनं केनचित् परिनिष्ठितमार्गेण पदानामुपपादनम् एतस्य लक्ष्यम्। प्रयोगवैचित्र्यानुसारं यथा लोके प्रयुज्यते। तेषामुपस्थापनमनुशासनं च यथाविधि प्रतिपादनमेतेन क्रियते। इदानीमनुशासनपदं विविच्यते। तत्र **शासु – अनुशिष्टौ** अदादौ पठ्यते। अनुपूर्वकादस्मात् करणे ल्युटि **अनुशासनम्** इति पदं निष्पद्यते। शब्दानामनुशासनमिति कर्मणि षष्ठी तदन्तस्य अनुशासनपदेन सह समासे सति शब्दानुशासनमिति पदं निष्पद्यते। इह खलु संसारे विद्यमानयोः शब्दानुशासनयोः पाणिनीयशब्दानुशासनं हैमशब्दानुशासनञ्च श्रेष्ठत्वं भजतः। अधुना अनयोः शब्दानुशासनयोः संज्ञाप्रकरणस्य संक्षप्तिमध्ययनं क्रियते।

**१. वर्णसमाम्नायसंज्ञा-**

- पाणिनीयवर्णसमाम्नाय- ४२वर्णाः(९अच् , ३३हल्) ।
- सिद्धहैमशब्दानुशासनम्- ४०/४४वर्णाः।

| संज्ञा | पाणिनीयशब्दानुशासनम् | हैमशब्दानुशासनम् |
|---|---|---|

स्वरा: अच्वर्णा:। अ आ इ ई उ ऊ ऋ ॠ लृ ए ऐ ओ औ।

ओदन्ता:स्वरा:(१/१/४)[३]औकारावसानां वर्णा:स्वरसंज्ञा: स्यु:। अ आ इ ई उ ऊ ऋ ॠलृ ए ऐ ओ औ।अनवर्णानामी(१/१/६)[४]अवर्णवर्जो औदन्तावर्णानामिसंज्ञा: स्यु:। इ ईउ ऊ ऋ ॠलृ ए ऐ ओ औ।

व्यञ्जनम् हल्वर्णा: । क ख ग घ ङ, च छ ज झ ञ, ट ठ ड ढ ण, त थ द धन, प फ ब भम, य र ल व, श ष स ह। कादिर्व्यञ्जनम्(१/१/१०)[५]कादिवर्णो हपर्यन्तो व्यञ्जनं स्यात्। कखगघङ, च छ जझ ञ, ट ठ ड ढ ण, त थ द धन, प फ ब भम, य र ल व, श ष स ह।

कादिर्वर्णो हपर्यन्तो व्यञ्जनं स्यात् कखगघ ★, च छ जझ ञ, ट ठ ड ढ ण, त थ द धन, प फ ब भम, य र ल व, श ष स हअघोषा:-आद्य-द्वितीय-श-ष-स अघोषा:(१/१/१३)अन्यो घोषवान्(१/१/१४)य-र-ल-वा अन्तस्था:(१/१/१५)[६]

उच्चारणस्थानम् अकुहविसर्जनीयानां कण्ठ: ।इचुयशानां तालु ।ऋटुरषाणां मूर्धा। लृतुलसानांदन्ता: ।उपूपध्मानीयानामोष्ठौ ।ञमङणानां नासिका च ।जिह्वामूलीयस्य जिह्वामूलम् ।नासिकानुसारस्य।

अष्टौस्थानानिवर्णानामुर:कण्ठ:शिरस्तथा ।जिह्वामूलं च दन्ताश्च नासिकोष्ठौ च तालु च।।

**२.पदसंज्ञा-**

पाणिनीयशब्दानुशासनम्-

सुप्तिङन्तंपदम्(१/४/१४)[७]सुबन्तं तिङन्तं च पदसंज्ञं स्यात्।

हैमशब्दानुशासनम्-

तदन्तं पदम्(१/१/२०)[८] स्याद्यन्तं त्याद्यन्तं च पदं स्यात्।

**३.वाक्यसंज्ञा-**

पाणिनीयशब्दानुशासनम्–

एकतिङ्वाक्यम्। पठति।

हैमशब्दानुशासनम्-

सविशेषणमाख्यातं वाक्यम्(१/१/२६)[९]

प्रयुज्यमानै: अप्रयुज्यमानै: वा विशेषणै: सहितं प्रयुज्यमानम् अप्रयुज्यमानं वा आख्यातं वाक्यं स्यात्। धर्म्मोवोरक्षतु।

**४.सवर्णसंज्ञा-**

पाणिनीयशब्दानुशासनम्-

तुल्यास्यप्रयत्नं सवर्णम्(१/१/९)[१०]

ताल्वादिस्थानम् आभ्यन्तरप्रयत्नश्च इत्येतद्द्वयं यस्य येन तुल्यं तन्मिथ: सवर्णसञ्ज्ञं स्यात्।

हैमशब्दानुशासनम्-

तुल्यस्थानाऽऽस्यप्रयत्न:स्व:(१/१/१७)[११]

आसेप्रयत्न आस्यप्रयत्न: स्पृष्टतादि:, तुल्यौ वर्णान्तरेण सदृशौ स्थानास्यऽऽप्रयत्नौ यस्य स वर्णस्तं प्रतिस्व: स्यात्।

**५.दीर्घसंज्ञा-**

पाणिनीयशब्दानुशासनम्-

अक:सवर्णे दीर्घ:(६/१/१०१)

अक: सवर्णेऽचिपरेदीर्घ एकादेश: स्यात्। दैत्यारि:। श्रीश:। विष्णूदय:।

हैमशब्दानुशासनम्-

समानानां तेनदीर्घ:(१/२/१)दण्डाग्रम्, दधीदम्, नदीन्द्र:।

**६.गतिसंज्ञा-**

पाणिनीयशब्दानुशासनम्–

गतिश्च(१/४/६०)[१२] प्रादय: क्रियायोगे उपसर्गसञ्ज्ञा गतिसंज्ञाश्च स्युः।

हैमशब्दानुशासनम्–

गति:(१/१/३६)[१३] गतिसंज्ञमव्ययं स्यात्। अद: कृत्य।

**७.अव्ययसंज्ञा-**

पाणिनीयशब्दानुशासनम्-

स्वरादिनिपातमव्ययम्(१/१/३७)स्वरादयो निपिताश्चाव्ययसंज्ञा: स्युः। स्वर्। अन्तर्। प्रातर्। अन्तर्।

हैमशब्दानुशासनम्-

स्वराऽऽदयोऽव्ययम्(१/१/३०) स्वरादयोऽव्ययानि स्युः। वृक्षस्य श्वेत्यादि।

**८.कारकसंज्ञा-**

पाणिनीयशब्दानुशासनम्–

क्रियान्वयित्वं कारकत्वम् क्रियाजनकत्वं कारकत्वम् वा।

हैमशब्दानुशासनम्–

क्रियाहेतुः कारकम्(२/२/१)[१४][14]हैम.श. २अ/२पा.

क्रियाया निमित्तं कर्त्रादिकारकं स्यात्। करोतीति कारकमन्वर्थाश्रयणाच्चनिमित्तमात्रेण अनन्तरव्यापारस्य हेत्वादे: कारकसंज्ञा न स्यात्।

**उपसंहार:-**

उपरिवर्णितानां विविधानां संज्ञानामध्ययनेन शब्दानुशासनकाराणां सूक्ष्मविचारधारायां भिन्नताया: कारणेन कुत्रचित् समानं मतं कुत्रचित् भिन्नमतं परिलक्ष्यते। सम्प्रति विश्वविद्यालयेषु विद्यालयेषु पाणिनीयव्याकरणमेव अध्ययनं भवति। परन्तु पाणिनीयव्याकरणस्य काठिनताकारणात् श्रीसिद्धहेमाभिधानमभिनवं व्याकरणमत्यन्तं सारल्यमिति वक्तुं शक्यते।

**सन्दर्भग्रन्थसूची**


| | | | |
|---|---|---|---|
| १. | पाणिनीयशिक्षा | - | अशोककुमारबन्दोपाध्याय: -, स्वदेशप्रकाशनम् २०१०९। |
| २. | महाभाष्यम् | - | उद्योतटीका ४२/६०। |
| ३. | सिद्धहैमशब्दानुशासनम् | - | मुनिहिमांशुविजय:, न्यायकाव्यतीर्थ:, श्रीआनन्दजी-कल्याणजीपेढीकार्यवाहकै: प्रकाशितम्। |
| ४. | वैयाकरणसिद्धान्तकौमुदीम् | - | डॉ. शिवप्रसादशर्मा, चौखम्बासुरभारतीप्रकाशनम् वारणासी, २००८ |
| ५. | व्याकरणमहाभाष्यम् | - | जयशङ्करलालत्रिपाठी, चौखम्बाकृष्णदासएकादमी वारणासी, २०१७ |
| ६. | व्याकरणशास्त्रेतिहास: | - | लोकमणिदाहाल:, भारतीयविद्याप्रकाशनम्२०१८। |


पदटीका-

[1]म.भा.उद्योत-४२/६०

[2]पा.शि. का.सं-१२

[3]हैम.श. १अ/१पा.

[4]हैम.श. १/१

[5]हैम.श. १/१

[6]हैम.श. १/१

[7]वै.सि.कौ.सं-४४

[8]हैम.श. १अ/१पा.

[9]हैम.श. १अ/१पा.

[10]वै.सि.कौ.सं.प्र.

[11]हैम.श. १अ/१पा.

[12] वै.सि.कौ.सं.प्र.

[13]हैम.श. १अ/१पा.

शोधच्छात्र:, व्याकरणविभाग:

केन्द्रीयसंस्कृतविश्वविद्यालय:श्रीसदाशिवपरिसर:, पुरी, ओडिशा



# आश्रमव्यवस्थासु राज्ञः प्रासङ्गिकता

मनोजकुमारस्वाइँ

आश्रमशब्दः आपूर्वकात् 'श्रमधातुतः' 'घञ्' प्रत्यययोगे निष्पन्नः भवति । आश्रम्यति अस्मिन् इति व्युत्पत्त्या 'आश्रमशब्दः' निष्पद्यते । अनया व्युत्पत्त्या यत्र परिश्रमः कर्त्तव्यः तथा यस्मिन् परिश्रमः क्रियते इति अर्थद्वयं लभ्यते । इयमाश्रमव्यवस्था मानवस्य ऐहिकमाध्यात्मिकं लक्ष्यं च प्रदर्शयति । आश्रमग्रहणेन स्वजीवनं केन प्रकारेण प्रवर्त्तनीयं तथा परमलक्ष्यप्राप्त्यर्थं किं वा आचारणीयं तत् सर्वं प्राप्यते । महाभारते कथितमस्ति मानवजीवनस्य अन्तिमलक्ष्यपर्यन्तमियमाश्रमव्यवस्था सोपानसदृशी विद्यते। एतादृशस्य सोपानस्य चत्वारः भागाः विद्यन्ते । क्रमानुसारेण एकमेकं भागमाश्रित्य अन्तिमे चतुर्थे भागे मनुष्यः माक्षमिच्छेत् । एतस्य सोपानस्य चत्वारः दण्डसदृशभागाः चत्वारः आश्रमाः उच्यन्ते । यत्र आत्मज्ञानार्थं अथवा किमपि विशेषप्रशिक्षणप्राप्त्यर्थमेकमेकमाश्रममधिकृत्य तिष्ठति । पुनः भीष्मः शान्तिपर्वणि प्रजानुरञ्जनोपायस्य प्रकाशनात् प्राक् प्रथमतः राजा आश्रमधर्मस्य सम्यग्तया प्रतिष्ठां कुर्यादि इति उक्तवान् । मानवजीवनस्य सुखसमृद्ध्यर्थं भारतीयसमाजे मुनिभिः ऋषिभिश्च आश्रमव्यवस्था सुप्रतिष्ठापिता वर्तते । अतः अन्यथा समाजे वर्णसङ्करस्य उद्भवः भवेत् । यावत्पर्यन्तं राज्ये प्रजाः सुरक्षिता न स्युः तावत्पर्यन्तं वर्णाश्रमधर्मस्य पालनं नैव स्यादिति बुद्ध्या प्रजारक्षणं राज्ञा स्वधर्मत्वेन स्वीकार्यम् ।

मनुष्यजीवनं प्रति इत्थं क्रमनिर्देशः क्रियते । येन मानवः एव जीवनस्य समुचितं विकाशं कारयितुं समर्थः भवति । एतदेव आश्रमस्य चरमोद्देश्यं विद्यते । प्रसङ्गेऽस्मिन् मनुस्मृतौ मनुना इदमेव प्रत्यपादि यथा –

**सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निस्सेविताः ।**
**यथोक्तकारिणं विप्रं नयन्ति परमां गतिम् ।।**[१]

तथा च आपस्तम्बेऽपि अभिहितम् ।

**आश्रमाणां विभाजनम् –**

शतायुर्वै पुरुषः इति वेदवाक्यानुसारेण पुरुषस्य सम्पर्णमायुः शतमिति अवधार्यते । यथा च यजुर्वेदे - यथा पश्येम शरदः शतम्, जीवेम शरदः शतम्। अत एव मनुष्यस्य जीवनं विभक्तम् । ते च भागाः आश्रमाः इति उच्यन्ते । यथा – ब्रह्मचर्याश्रमं, गृहस्थाश्रमं, वानप्रस्थाश्रमं, संन्यासाश्रमश्चेति । कतिपयविचारकाणां मतानुसारेण प्रारम्भे त्रयः आश्रमाः आसन् । यत्र वानप्रस्थाश्रम-सन्यासाश्रमयोः अभिमतं प्रतिपादितम् । यतः द्वयोः आश्रमयोः उद्देश्यं भवति अध्यात्मदर्शनं, सत्यानुसन्धानं च । अतः द्वयोः आश्रमयोः प्रायशः भेदाभावात् एकाश्रमः इति तेषां मतिर्नवेति , परन्तु परवर्त्तिसमये आश्रमाणां विकाशः चतुर्धा संजातः, अतः मनुः याज्ञवल्क्यादिभिः स्मृतिकारैः चतुर्णां आश्रमाणां वर्णनं कृतम् । यथा-( ब्रह्मचारी,गृहस्थः,वानप्रस्थः यतिस्तथा। एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः । )

मनुनाऽपि[२] एकस्मिन् स्थले त्रयाणामाश्रमाणामुल्लेखोऽपि कृतः यथा –

**त एव हि त्रयो लोकास्त एव त्रय आश्रमाः ।**
**त एव हि त्रयो वेदास्त एवोक्तास्त्रयोऽग्नयः ।।**

परन्तु मनुना मनुष्यजीवनं शतवर्षात्मकमिति मत्वा चतुर्णां आश्रमाणां विभाजनमकरोत्। ते च भागाः पचविंशतिवर्षात्मिका भवन्ति । तथा च वाल्मीकिरामायणे, गौतमधर्मसूत्रे, आपस्तम्बे अन्येषु धर्मग्रन्थेषु च सुस्पष्टं चतुर्ण्णामाश्रमाणां वर्णनमवाप्यते ।

**आश्रमचतुष्टये राज्ञः कर्त्तव्यम् –**

वर्णाश्रमे स्थितपूजनीयपुरुषाणां कृते तेषां अभिष्टवस्तु दत्वा सम्मानसत्कारादिः राजा कुर्यात् । वर्णाश्रमे स्थितपुरुषाणां

रक्षणादि राजा स्वयं कुर्यादिति भीष्मेण कथितम् । तेषां पुरुषाणां रक्षणेन वर्णसङ्करस्य रक्षा अपि सम्भवति । तस्मात् रक्षणात् ब्रह्मचारी यत् यत् धर्मफलं प्राप्नोति,तस्मादपि शतगुणं धर्मं राजा प्राप्नोति[३] । साधारणजनेषु व्यवहारप्रदर्शनकाले प्रियाप्रियभावनां यत्नपूर्वकं वर्जयित्वा चातुवर्ण्यस्थापनां,पालनञ्च राजा कुर्यात् । आश्रमस्थितान् पुरुषान् राजा स्वगृहे स्थापयित्वा तेषां भोजनव्यवस्थादिः कुर्यात् । एवमेव करणेन राज्ञा गृहस्थधर्मफलं प्राप्यते । तद्यथा[४] –

**आश्रमस्थानि भूतानि यस्तु वेश्मनि भारत ।**
**आददीतेह भोज्येन तद् गार्हस्थ्यं युधिष्ठिर ।।**

वानप्रस्थाश्रमिणां कृते राजा वने प्रकोष्ठनिर्माणादिकं कुर्यात् । त्रैविद्येषु निपुणवानप्रस्थानां कृते विपुलधनमपि राजा दद्यात् । तस्मात् दानात् वानप्रस्थाश्रमपुण्यफलं राजा प्राप्नोति । देशधर्मान्,कुलधर्मान् ,सर्वभूताञ्च पालयन् सन्यासाश्रमस्य फलं प्राप्नुयात् तथा सर्वाश्रमी भवेत् । येन कर्मणा आश्रमस्थिताः पुरुषाः सम्यग्तया जीवितुं न प्रभवन्ति तावत् पर्यन्तं राजा तषामाश्रमिणां रक्षणं कुर्यात् । तेषां रक्षणेन समाजस्य कल्याणमपि सम्भवति ।

**पादटिप्पणी -**

१. मनु.-६.८८ २. मनु.स्मृ.-२.२३०
३. शा.प- ६६.४१ ४. म.भा.शा.प-६६.२५

शोधच्छात्रः,धर्मशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यलयः,श्रीसदाशिवपरिसरः,पुरी



# श्रीमद्भगवद्गीतायां योगस्य गौरवत्वम्

**मीनाक्षीमीना**

अखिलभूतले श्रीमद्भगवद्गीतायाः सश्रद्धं समुहत् प्रसारणं ग्रन्थरत्नस्यास्यं गौरवं गायति। भारतवर्षस्य परमपवित्रे -धर्मक्षेत्रे भगवतः पुरूषोत्तमस्य श्रीकृष्णस्य श्रीमुखविनिःसृता परमप्रज्ञामयी गीता समेषां मनुष्याणां श्रेयसे प्रेयसे च समुद्दिष्टा। धर्म-कर्म-तत्वविद्भिः विपश्चिद्भिः समादृतायां गीतायां कस्य न विदितं विपश्चितो भगवद्गीतायाः गौरवमहात्म्यञ्च। गीता न केवलं सर्वासामपि उपनिषदां सारभागमपितु श्रुतिसारमपि प्रस्तौतितराम्। सांख्य-योगदर्शनयोः सिद्धान्तानां विवेच प्रतिपादनं दर्शनसारसंग्रहे उपलभ्यते। वेदान्तदर्शनप्रतिपादितस्य "तत्त्वमसि" इति महावाक्यानां अत्रोपलभ्यात् वेदान्तोपगाहित्वमप्यस्य लक्ष्यते।

उक्तं च – **सर्वोपनिषदो गावो दोग्धा गोपालनन्दनः।**
**पार्थो वत्सः सुधीर्भोक्ता दुग्धं गीतामृतं महत्** [१] ।।

केचन दार्शनिकाः ये दर्शनानां सारभूता आदर्शरूपाश्च सन्ति। तथा रूचिरया भाषयाऽभिहिताः सन्ति सर्वजन -ग्राह्यत्वं भजन्ते। यथा- आत्मनः अजरत्वम् अमरत्वम् अविनाशित्वं च यद् दर्शनानां सारमस्ति तत् कथमिदं गद्यरूपेण माधुर्येण च प्रस्तुयते-

**न जायते म्रियते वा कदाचि**
**न्नायं भूत्वा भविता वा न भुयः।**
**अजो नित्यः शाश्वतोऽयं पुराणो ।**
**न हन्यते हन्यमाने शरीरे**[२] ।।

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि।।**[३]

जीवनं पुरुषार्थसाधनं धर्मार्थकाममोक्षेति पुरुषार्थचतुष्टयम्। धर्मार्थकामार्थम् अर्थोपार्जनार्थं मोक्षावाप्तये च सर्वत्रैव कर्मण: आवश्यकता अनुभूयते। यद् जीवने कर्म विहाय ज्ञानमपि दुरासदम्। मानवजीवने कर्मैव तारकम्, साधकम्, दु:खनिरोधकम्, अर्थादिगमसाधनम्। यत्र -सत् कर्म: तत्र -तत्र सुरवम् कर्मण: सुखादिगमहेतुत्वात् यथा रामादिजीवनम्। ते तवशुद्धान्त:करणस्य तात्विकज्ञानोत्पन्नस्य योगस्य कर्मण्येवान्तकरणशोधाधिकारो मयेदं कर्त्तव्यमिति बोधोऽस्तु न ज्ञाननिष्ठरूपे वेदान्तविचारदौ। कर्म च कुर्वतस्तव तत्फलेषु स्वर्गादिषु कदाचन कस्याञ्चित्यवस्थायां कर्मानुष्ठानात्प्रागुर्ध्वं तत्काले वाऽधिकारो मयेदं भोक्तव्यमिति। योग शब्देन प्राक् भोक्तम्। अत्र तु योगस्य कर्मणि कुर्वित्युच्यते। आह – समत्वं योगोच्यते। "सुखदु:खे समे कृत्वा" इत्यत्र जयाजयसाम्ये न। कार्यप्रवृतिमन्तरेण जीवने न किञ्चित् साफल्यं सम्भाव्यते। अत एव कर्मणोऽनिवार्यत्वं शंस्यते।

तथोक्तं च – **नियतं कुरु कर्म त्वं कर्म त्वं कर्म ज्यायो ह्यकर्मण:।**
**शरीरयात्रापि च ते न प्रसिद्ध्येदकर्मण:**[४]**।।**

कृतेऽपि कर्मणि कथमिव कर्मबन्धनसाधनं न स्याद् इति जिज्ञासायां प्रोच्यते यद् इन्द्रियनिग्रह-पुर:सरम् अनासक्तभावनया कृतं कर्म न बन्धनहेतुत्वं भजते। "न कर्मणाम् नारम्भात् नैष्कर्म्यं पुरुषोऽश्नुते।" न च संन्यासनादेव चित्तशुद्धिं विना कृता सिद्धं ज्ञाननिष्ठा-लक्षणां सम्यक् फलपर्यवसायित्वेनाधिगच्छति नैव प्राप्नोतीस्यार्थ:। कर्मजन्यं चित्तशुद्धिमन्तरेण सन्यास एवं सम्भवति।

**अनाश्रित: कर्मफलं कार्यं कर्म करोति य:।**
**स संन्यासी च योगी च न निरग्निर्न चाक्रिय:**[५]**।।**

**कर्मयोग:**– आदौ निष्कामकर्मनिष्ठा ततोऽन्त:करणशुद्धि: तत: शमदमादिसाधनपुर:सर: सर्वकर्मसंन्यास:। ततो वेदान्तवाक्यविचारसहिता भगवद्भक्तिनिष्ठा, तत्वज्ञाननिष्ठा तस्या: फलं च त्रिगुणात्मकविद्या निवृत्या जीवमुक्ति : प्रारब्धकर्मफलभोगपर्यन्तं तदन्ते च देहमुक्ति:। तत्र योगस्थ: कुरु कर्माणि इत्यादिना सूत्रिता सत्वशुद्धिसाधनभूता निष्कामकर्मनिष्ठा सामान्यविशेषरूपेण प्रपञ्चते।

सांख्यबुद्धिमाश्रित्य ज्ञाननिष्ठा भगवतोक्ता –एषा तेऽभिहिता सांख्ये बुद्धि: इति योगबुद्धिमाश्रित्य कर्मनिष्ठोक्ता योगे त्विमां श्रृणु इत्यारभ्य कर्मण्येवाधिकारस्ते—मा ते इत्यनेन।

नियतं कुरुकर्म त्वं कर्म अर्थात् नियतनिमित्तेन विहितं कर्म श्रौतं स्मार्तं च नित्यमिति प्रसिद्धं कुरु।

**भक्तियोग:** - भगवान् अनन्यं प्रेम भक्ति: वा। शाण्डिल्यसूत्रान्तर्गते लक्षणं "परानुभक्तिरीश्वरे"। श्रीमद्भागवतस्य नवधा भक्ति:। भक्तिज्ञानसूत्रस्य श्रद्धा। गीतोक्तं भक्तिदर्शनस्य प्रतिपादयत् ये सर्वाणि कर्माणि मयि संन्यस्य सगुणे वासुदेवे समर्प्यमत्परा अहं भगवान्वासुदेव एव पर: प्रकृष्ट: प्रीतिविषयो येषां ते तथा सन्तोऽनन्येनैव योगेन न विद्यते मां; भगवन्तमुत्त्वा- ऽन्यदालम्बनं यस्य तादृशेनैव योगेन समाधिनैकान्त–भक्तियोगपरनाम्ना। यथा –

**ये तु सर्वाणि कर्माणि मयि संन्यस्य मत्परा:।**
**अनन्येनैव योगेन मां ध्यायन्त उपासते**[६]**।।**

ये आर्ता अर्थार्थिनो जिज्ञासवो ज्ञानिनश्च यथा येन प्रकारेण सकामतया निष्कामतया च मामीश्वरं प्रपद्यन्ते भजन्ति तास्यर्थैव तदपेक्षितफलदानेनैव भजाम्यनुगृहाम्यहं न विपर्येण। तेषां ज्ञानी नित्ययुक्त एकभक्तिविशिष्यते।

आर्त- जिज्ञासु-अर्थार्थी ज्ञानी तेषां मध्ये ज्ञानितत्वज्ञानवान्निवृतसर्वकामो विशिष्यते सर्वतोऽपिरिच्यत्त सर्वोत्कृष्ट:। प्रियो हि यस्याद्ध्यात्मा ज्ञानिनोऽतस्तस्याह मत्यर्थे प्रिय:। प्रसिद्धं हि लोक आत्मा प्रियो भवतीति। तस्माज्ज्ञानिन आत्मत्वाद्वासुदेव: प्रियो भवतीत्यर्थ:। स च ज्ञानी मम वासुदेवस्यात्मैवेति ममात्यर्थे प्रिय:। संसारदु:खान्निर्विण्णा जरामरणमोक्षाय

जरामरणादिविविधदु:ख - संसारदु:खनिरासाय तदेकहेतुं मां सगुणं भगवन्तमाश्रित्येसतत् शरणं गत्वा यतन्ति यतन्ते महर्षि तानि फलाभिसंधिशून्यानि विहितानि कर्माणि कुर्वन्ति ते क्रमेण शुद्धान्त: करणा: सन्तस्तज्जगत्कारणं मायाधिष्ठानं शुद्धं परंब्रह्म निर्गुणं तत्पदलचयं मां विदु:। तदोक्तं–

**साधिभूताधिदैवं मां साधियज्ञं च ये विदु:।**
**प्रयाणकालेऽपि च मां ते विदुर्युक्तचेतस:[७]।।**

यत: साधिभूताधिदैवमधिभूताधिदैवाभ्यां सहितं यथा साधियज्ञं चाधियज्ञ येन च सहितं मां ये विदुश्रियन्त यन्ति ते युक्तचेतस: सर्वदा मयि समाहितचेतस: सन्तस्तत्संस्कारपाटवाप्रयाण भगवता पतञ्जलिना उक्तं – "समाद्धिरीश्वरप्रणिधानात्" इति। तत: प्रत्येक्चेतनाधिगमोऽप्यन्तरायाभावश्च इति च। तत: इति ईश्वरप्रणिधानादित्यर्थ:। यथोक्तं –

**प्रियो हि ज्ञाननित्यर्थमहं स च मम प्रिय:।**

सर्वाणि भूतान्यात्मत्वेन पश्यन्नात्मनो दु:खहेतावपि प्रतिकूलबुद्ध्यभावाद्द्वेष्टा सर्वभूतानां किं तु मैत्रो मैत्री स्निग्धता तद्वान्। यत: करुण: करुणा दु:खितेषु दया तन्सर्वभूताभयदाता परमहंस परिव्राजक इत्यर्थ:।

**येन केनचिदाच्छान्नो ये केनचिदाश्रित:।**
**यत्र क्वचनशायी स्यातं देवा ब्राह्मणं विदु:[८]।।**

**ज्ञानयोग: -**

**श्रद्धावाँल्लभते ज्ञानं तत्पर: संयतेन्द्रिय:।**
**ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति [९]।।**

श्रद्धावानिति श्रद्धावां–श्रद्धायुर्थमते ज्ञानम् । श्रद्धालुत्वेऽपि भवति। काश्चिन्मन्दप्रस्थानोऽत आह तत्परो गुरुपासनादावभियुक्तो ज्ञानलब्धोयुपाये श्रद्धावान्। यथा हि दीप: स्वोत्पत्तिमात्रेणैवान्धकारनिवृतिं करोति न तु कश्चित्सहकारिणामपेक्षते तथा ज्ञानमपि स्वोत्पत्तिमात्रेणैव ज्ञाननिवृतिं करोति न तु किञ्चित्प्रसंख्यानादिकमपेक्षते इति भाव:। प्राणोत्क्रमणकाले करणमस्यात्यन्तव्यग्रतामपि मत्कृपया मां सर्वात्मानं विदुर्जानन्ति , तेषां मृतिकालेऽपि मदाकारैव चित्तवृति: पूर्वोपचित्तसंस्कारपासदवाद्भवति। मद्भक्तियोगात्कृतार्धा एवेति भाव:।

**गीता सुगीता कर्तव्या किमन्यै: शास्त्रविस्तरै:।**
**या स्वयं पद्मनाभस्य मुखपद्माद्विनि:सृता [१०]।।**

गीता गायत्रीमन्त्रादपि श्रेष्ठतरा प्रतिभाति। तत्र गायत्रीमन्त्रजपेन जापक: मुक्तो भवति, परन्तु गीताभ्यासो स्वं परं च मोचयति। किमधिकं, गीता भगवत: सनकादपि श्रेष्ठतरा। यदुक्तं स्वयं भगवता–

**गीताश्रयेऽहं तिष्ठामि गीता मे चोत्तयं गृहम्।**
**गीताज्ञानमुपाश्रित्यं त्रिलोकान् पालयाम्यहम्[११] ।।**

साम्प्रतिकसमाजे गीताया: आवश्यकता नितरामनुभूयते। पाश्चात्यसभ्यतानुप्रागिता अस्मद्देशीया जना गीताज्ञानस्तरेण क्रमश: भारतीयसंस्कृतितों विच्युता परिणामत: समाजे बहुविधा: समस्या: परिदृश्यन्ते। तासां निराकरणं गीतातत्त्वज्ञानेन अवश्यं भवितुमर्हतीति नास्ति शङ्कावकाश:।

**सन्दर्भा:-**


१.गीतामाहात्म्यम्-६
२.श्री.भ.गी.२/२०)
३.गीता.२/४७)
४.गीता.३/८
५.गीता.६/१)
६.गीता.१२/६)
७.गीता.७/३०)
८.महाभारतम्)
९.गीता.४/३९
१०.भीष्म.४३/१
११. वराहपुराणम्)



शोधच्छात्रा

सांख्ययोगविभाग:, सदाशिवपरिसर:, पुरी




# शरीरे नाडीसंख्याविमर्शः

परिसीमा रथः

पिण्डस्थितिर्नाड्यधीना पिण्डशोधने नाडीज्ञानं परमोपयोगीत्यतः तन्निरूपणं योगशास्त्रेषु कृतमस्ति। लिङ्गादुपरि नाभेरधस्तात् पक्ष्यण्डसदृशः कन्दोऽस्ति। तत एव अनेका नाड्य ऊर्ध्वमधस्तिर्यक् च प्रसरन्ति-

**ऊर्ध्वमङ्गादधो नाभेः कन्दो योनिः खगाण्डवत्।**
**तत्र नाड्यः समुत्पन्नाः सहस्राणां द्विसप्ततिः।[१]**

अपि च-

**द्वासप्ततिसहस्राणां नाडीनां मलशोधने।**
**कुतः प्रक्षालनोपायः कुण्डल्यभ्यसनादृते।।[२]**

द्वासप्ततिसहस्त्रेषु नाडीषु प्रधाना दश, तत्रापि मुख्याः तिस्रः, तास्वपि एका मुख्या सुषुम्णा। सा मूलाधारद्वारा मेरूदण्डान्तर्गता सती शिरोदेशे कपालद्वयसन्धिश्च ब्रह्मरन्ध्रपर्यन्तं गच्छति। तत्र सूर्यरश्मिसम्बन्धः सदैव तिष्ठति, तयोः सम्बन्धाद्वैद्युत् शक्तिः सम्पद्यते। अत एव मरणसमये यस्य लिङ्गशरीरं सुषुम्णया निःसरति तस्य बह्मरन्ध्रगमनानन्तरं तदीयवैद्युतसम्बन्धात् क्षणेनैव मार्तण्डमण्डलं भित्वा ततः परं वैद्युतलोकेऽभिगमनं भवति। अन्ते क्रममुक्तिद्वारा अमृतरुपः मोक्षः प्राप्यते। अन्यमार्गेण प्राणनिःसरणं तु वैद्युत्सम्बन्धाभावेन न मार्तण्डमण्डल विभिद्य गमनम्, किन्तु ततोऽध एव स्वकर्मानुसारं चन्द्रमण्डलात् स्वर्गप्राप्तिर्भवति ततश्च प्रत्यवरोहणम्।

**नाडीनां दशद्वाराणि-**

इडानाडी सूर्यनाडी, पिङ्गलानाम्नी चन्द्रनाडी, सुषुम्नानाडी ब्रह्मनाडी चेति उच्यते। अयं च मूलकन्दस्थाने क्रमशो नासिकाया वामदक्षिणाभ्यां भागाभ्यां नासिकपर्यन्तं प्रवहति। सुषुम्णानाम्नी ब्रह्मनाडी तालुमार्गेण ब्रह्मरन्ध्रपर्यन्तं प्रवहति। अस्मादेव मूलकन्दात् निःसृत्य तेषु तेषु स्थानेषु व्रजन्ति। सरस्वतीनामिकानाडी मुखद्वारपर्यन्तं याति। द्वे पूषालम्बूषे क्रमशो वामदक्षिणचक्षुः पर्यन्तं प्रवहतः। गान्धारी हस्तिजिह्विका च कर्णद्वारपर्यन्तं वहतः। कुहूः गुदाद्वारे वहति। लिङ्गद्वारे च शाङ्खिनी प्रवहति, सा दण्डमार्गेण ब्रह्मरन्ध्रपर्यन्तं वहति। एवं प्रकारेण नाड्यः दशद्वारेषु प्रवहन्ति। अन्याः सर्वा नाड्यो रोमकूपेषु वहन्ति।

नाडीचक्रस्य विविधैः प्रकारैः आच्छन्नत्वाद् वायुः सुषुम्णामार्गे न प्रविशति। अतः प्राणायामादिभिः नाडीशोधनमत्यावश्यकम्। अतः विधिपूर्वकं प्राणायामसाधनेन सुषुम्णान्तर्गतः सकलो मलः क्षालनीयः। नाडीशुद्धया समस्तदोषाः विनश्यन्ति, देहे साम्यमुपतिष्ठते, सुगन्धिः प्रादुर्भवति, कान्तिः प्रस्फुटति, स्वरे माधुर्यं जायते ,नादाभिव्यक्तिश्च स्पष्टं प्रतीयते।

**योगवसिष्ठे नाडीशुद्धिः-**

देहनाडीषु द्वासप्ततिर्द्वासप्ततिः प्रतिशाखं नाडीसहस्राणि भवत्यासु व्यानश्चरिति यथा भुवः स्पन्देषु स्पन्दनमार्गभूतेषु विवरेषु वारि जलं सर्वतो स्फुरति तद्वत्। **यथा-**

**देहेऽस्मिन्देहनाडीषु वातः स्फुरति योऽभितः।**
**स्पन्देष्विव भुवो वारि स प्राण इति कीर्तितः।।**

तत्र नाडीपरिगणनं योगोपनिषदि उल्लेखो वर्तते। उदाहरणत्वेन प्रस्तूयते । **यथा-**

**कन्दमध्यस्थिता नाडी सुषुम्नेति प्रकीर्तिता।**
**तिष्ठन्ति परितस्तस्य नाड्यो मुनिपुंगव।।**
**द्विसप्ततिसहस्राणि तासां मुख्याश्चतुर्दश।**
**सुषुम्ना पिङ्गला तद्वदिडा चैव सरस्वती।।**
**पूषा च वरूणा चैव हस्तिजिह्वा यशस्विनी।**

अलम्बुसा कुहूश्चैव विश्वोदारा पयस्विनी।।
शंखिनी चैव गान्धारा इति मुख्याश्चतुर्दश।
आसां मुख्यतमास्तिस्रस्तिसृष्वेकोत्तमोत्तमा।
ब्रह्मनाडीति सा प्रोक्ता मुने वेदान्तवेदिभिः।
पृष्ठमध्यस्थितेनास्थ्ना वीणादण्डेन सुव्रत।
सह मस्तकपर्यन्तं सुषुम्ना सुप्रतिष्ठिता।।

शरीरस्थानं विद्यमानानां नाडीनाम् उद्धृतानि स्थानानि सन्ति। तत्र प्रमाणत्वेन योगोपनिषदि वचनानि सन्ति-

नाडीस्थानानि-

सुषुम्नाया इडा सव्ये दक्षिणे पिङ्गलास्थिता।
सरस्वती कूहुश्चैव सुषुम्नापार्शयोः स्थिते।।
गान्धारा हस्तिजिह्वा च इडायाः पृष्ठपूर्वयोः।
पूषा यशस्विनी चैव पिङ्गलापृष्ठपूर्वयोः।
कूहोश्च हस्तिजिह्वाया मध्ये विश्वोदरा स्थिता।
यशस्विन्याः कूहोर्मध्ये वरूणा सुप्रतिष्ठता।
पूषायाश्च सरस्वत्या मध्ये प्रोक्ता यशस्विनी।
गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शंखिनी।।
गान्धारायाः सरस्वत्या मध्ये प्रोक्ता च शंखिनी।।
अलम्बुसा स्थिता पायुपर्यन्तं कन्दमध्यगा।
पूर्वभागे सुषुम्नाया राकायाः संस्थिता कूहूः।।
अधश्चोर्ध्वं स्थिता नाडी याम्यनासान्तमिष्यते।
इडा तु सव्यनासान्तं संस्थिता मुनिपुंगव।।
यशश्विनी च वामस्य पादाङ्गुष्ठान्तमिष्यते।
पूषा वामाक्षिपर्यन्ता पिङ्गलायास्तु पृष्ठतः।।
पयस्विनी च याम्यस्य कर्णान्तं प्रोच्यते बुधैः।
सरस्वती तथा चोर्ध्वं गता जिह्वा तथा मुने।।
हस्तिजिह्वा तथा सत्यपादाङ्गुष्ठन्तमिष्यते।
शंखिनी नाम या नाडी सव्यकर्णान्तमिष्यते।
गान्धारा सव्यनेत्रान्ता प्रोक्ता वेदान्तवेदिभिः।
विस्वोदराभिधा नाडी कन्धमध्ये व्यवस्थिताः।।

नाडीसंख्या विचारणायां प्रामुख्येन दशविधाः नाद्यः भवन्ति। गर्भोपनिषदि जीवः कथमुत्पद्यते एतस्य विषयस्य विवरणं लभ्यते। षट्विधरसो भवति रसाच्क्षोणितं- श्रोणितान्मांसं मांसान् स्नायवः- स्नायुभ्योः अश्थिनी, अस्थिभ्यः मज्जा, मज्जातः शुक्रं, शुक्रशोणित-संयोगात् आवर्तते गर्भः,इत्यादिभिः वचनैः जीवोत्पत्तिप्रकारः उपदिष्टः वर्तते।

हठयोगशास्त्रे- इड़ा पिङ्गला-सुषुम्नानाडीविषये एका उक्तिः प्रसिद्धा। तद्यथा-

इडा भगवती गंगा पिंगला यमुना नदी।
इडापिंगलयोर्मध्ये बालरंडा च कुण्डली।।
गंगायमुनयोर्मध्ये बालरंडा तपस्विनीम्।
बलात्कारेण गृह्णीयात्तद्विष्णोः परमं पदम्।।

गङ्गायमुनयोराधाराधेयभावेन तयोर्भावनाद्गंगायमुनयोरभेदेन भावनाद्वा गंगायमुनये इडापिंगले तयोर्मध्ये सुषुम्नामार्गे

तपस्विनी निरशनस्थिते:। बालरंडा बालरंडाशब्दवाच्यां कुंडलीं बलात्कारेण हठेन गृह्णीयात्। तत्तस्या गंगायमुनयोर्मध्ये ग्रहणं विष्णोर्हरेर्व्यापकस्यात्मनो वा परमं पदं परमपदप्रापकम्।

इडा वामनि:श्वासा नाडी भगवत्यैश्वर्यादिसम्पन्ना गंगा गंगापदवाच्या पिंगला दक्षिणानि: श्वासा यमुना यमुनाशब्दवाच्या नदी। इडापिंगलयोर्मध्ये मध्यगता या कुण्डली सा बालरंण्डा। मुहूर्तयोर्द्वयं युग्मं घटिकाचतुष्टयात्मकं तत्पर्यन्तं तदवधि निर्भयं नि:शंक चालनाद् इयं शक्ति: सुषुम्णायां समुद्गता सती किञ्चिदूर्ध्वमाकृष्यते । तेनोर्ध्वमाकर्षणेन कुण्डली तस्या: प्रसिद्धाया: सुषुम्नाया मुखं प्रवेशमार्गं ध्रुवं निश्चितं जहाति त्यजति वा। तस्मात् मार्गत्यागादयं प्राणवायु: स्वत: स्वयमेव सुषुम्णां व्रजति । सुषुम्णामुखात्प्रागेव कुण्डलिन्या निर्गतत्वादिति भाव:। **यथा-**

**मुहूर्तद्वयपर्यन्तं निर्भयं चालनादसौ।**
**उर्ध्वमाकृष्यते किञ्चित्सुषुम्णायां समुद्गता।।**
**तेन कुण्डलिनी तस्या: सुषुम्नायां मुखं ध्रुवम्।**
**जहाति तस्मात्प्राणोऽयं सुषुम्णां व्रजति स्वत:।।**

यस्माच्छक्तिचालनेन प्राणा: सुषुम्णां व्रजन्ति । तां सुखसुप्तामरून्धती-शाक्तिं नित्यं प्रतिदिनं सञ्चालयेत्। तस्या: शक्ते: सञ्चालनेनैव योगी रोगेभ्य: कासश्वासजरादिभ्य: प्रमुच्यते । **तद्यथा-**

**तस्मात्सञ्चालयेन्नित्यं सुखसुप्तामरून्धतीम्।**
**तस्या: सञ्चालनेनैव योगी रोगै:प्रमुच्यते।।**

इयं मध्यमा नाडी सुषुम्ना योगीनां हठाभ्यासेनासनं स्वस्तिकादि प्राणसंयाम: प्राणायाम: मुद्रा महामुद्रादिका तै: सरला ऋज्वी भवेत्।

**ज्ञात्वा सुषुम्नासद्भेदं कृत्वा वायुं च मध्यगतम्।**
**स्थित्वा सदैव सुस्थाने ब्रह्मरन्ध्रे निरोधयेत्।।**

प्राणमनसोर्लयं विना मोक्षो न सिध्यतीत्युक्तम्। तत्र प्राणलयेन मनसोऽपि लय: सिध्यतीति तल्लयरीत्याह-सदैव सुस्थाने, सुराज्ये धर्मिक देशे इत्याद्युक्तलक्षणे स्थित्वा सिद्धिं कृत्वा वसति कृत्वेत्यर्थ:। सुषुम्णा मध्यनाडी तस्या: सद्भेदं शोभनं भेदनप्रकारं ज्ञात्वा गुरुमुखाद्विदित्वा वायुं प्राणान् मध्यगं मध्यं नाडीसञ्चारिणं कृत्वा ब्रह्मरन्ध्रे निरोधो लय: प्राणलये ज्ञाते मनोऽपि लीयते। **तदुक्तं वासिष्ठे-**

**अभ्यासेन परिस्पंदे प्राणानां क्षयमागते।**
**मन: प्रशमायति निर्वाणमविश्यते।।इति**

प्राणमनसो लये सति भावनाविशेषरूपसमाधिसहकृतेनान्त:करणेनाबाधितात्मसाक्षात्कारो भवति तदा जीवन्नेव मुक्त: पुरूषो भवति।

घेरण्डसंहितायां लिखितमस्ति यद्, मानवशरीरे द्वासप्ततिसहस्त्राणि नाडीषु दशा: मुख्या: सन्ति। यथा इडा-पिङ्गला-सुषुम्ना चेति सन्ति प्रधाननाड्य:। इयं मेरूदण्डे सूर्यचन्द्राग्निरूपा: तिष्ठन्ति। तत्र शुभ्रवर्णात्मका इडा नाडी मेरूदण्डस्य वामभागे स्थिताऽस्ति। सा च शक्तिरूपा साक्षादमृतमयी। सूर्यविग्रहा पुंरूपा पिङ्गलानाड़ी दक्षिणभागे विद्यते। एवञ्च अग्निरूपिणी सर्वतेजोमयी सुषुम्ना तयोर्मध्ये विराजते। सुषुम्णाया मध्येऽपि चित्राख्या नाडी विद्यते, यत्रेच्छायाज्ञानक्रियात्मकं कोटिसूर्यसमप्रभं स्वयंभूलिङ्गं वर्तते। तदूर्ध्वं हकारे फकारबिन्दुनात्मकं ह्रीं मायाबीजं वर्तते। तदूर्ध्वं दीपशिखाकारा रक्तवर्णात्मका देवीरूपिणी कुण्डलिनी सुशोभते।

नाडीनां विषये घेरण्डसंहितायां उक्तंञ्च नाभिमूले सूर्यनाडी(इडाानाडी), तालुमूले च चन्द्रनाडी तिष्ठति। यदा सहस्त्रदलकमलात् पीयुषधाराया: क्षरणं भवति, तदा तस्य पीयुषधारायां सूर्य भक्षति। यस्मात् परिणामात् मनुष्य: मृत्युं प्रविष्टो भवति। परञ्च यत् चन्द्रनाड़्या द्वारा सुधाधारायां भक्षणं करोति, तदनन्तरं मनुषस्य मृत्यु:कदापि न सम्भवतीति। **तद्यथा-**

**नाभिमूले वसेत्सूर्यस्तालुमूले च चन्द्रमा:।**
**अमृतं ग्रसते सूर्यस्ततो मृत्युवशो नर:।।**

ऊर्द्ध्वञ्च गमयेत्सूर्यञ्चन्द्रञ्च अथ आनयेत्।
विपरीतकरी मुद्रा सर्वतन्त्रेषु गोपिता।।

घेरण्डसंहितायां नाडीस्वरूपविषये मुद्राप्रकरणाध्ये वर्णितमस्ति। तद्यथा-

तावदाकुञ्चयेद्गुह्यं शनैश्चितनिमुद्रया।
यावद्गच्छेत् सुषुम्णायां वायुः प्राकाशयेद्धठात्।।

नासिकायाः वामपुटे इडानाडीस्थानम्, दक्षिणनासापुटे पिङ्गलानाडीस्थानं तयोर्मध्ये सुषुम्णा स्थानमस्ति। वामनेत्रे गान्धारि, दक्षिणनेत्रे हस्तजिह्वा, वामकर्णे यशस्विनी, दक्षिणकर्णे पृथा, मुखेऽलम्बुषा, लिङ्गे कुहुः मूलाधारे च शंखिनी नाडी तिष्ठति। एवं प्रकारेण मुख्यदशनाडिका स्वं स्वं स्थानमाश्रित्य मानवशरीरे निवसन्ति। एतेषु नाडीषु इडापिङ्गलासुषुम्णाः तिस्रो मुख्या सन्ति, तास्वपि एका सुषुम्णा प्रमुखास्ति । तदुक्तं याज्ञवल्क्यशिक्षायाम्-

तासां मुख्यतमस्तिस्रस्तिसृष्वेकोत्तमोत्तमा।
मुक्ति मार्गे च सा प्रोक्ता सुषुम्णा विश्वधारिणी।।

नाडीनां शुद्धिः-

कुशासने मृगाजिने व्याघ्राजिने च कम्बले।
स्थूलासने समासीनाः प्राङ्मुखे वाऽप्युदङ्मुखः।

कुशासने, मृगाजिने, व्याघ्राजिने अथवा स्थूलासने पूर्वमुखः वा उत्तरमुखः वा भूत्वा नाडीशुद्धेः अनन्तरं प्राणायामं समभ्यसेत्।

नाडीशुद्धिं द्विधा प्रोक्ता समनुर्निर्मनुस्तथा
बीजेन समनुं कुर्यान्निर्मनुं धौतिकर्मणा।।

नाडीशुद्धिः द्विधा उच्यते, मन्त्रसहितं समनु, मन्त्र रहितं निर्मनु इति। बीजमन्त्रेण यः नाडीशुद्धिः जायते सः समनु एवं धौतिकर्मेण यः नाडीशुद्धिः जायते निर्मनु नाडीशुद्धिः उच्यते। नाडीविज्ञानम् अत्यन्तं विशिष्टं विद्यते। येन नाडीविज्ञानेन योगिनः योगधर्मे प्रविशन्ति। नाडीविज्ञानेन शोधनेन च सर्वासु क्रियासु दक्षता जायते योगिनः। अर्थात् सर्वसमर्थाः भवन्ति। हठयोगशास्त्रे हठस्य लक्षणं प्रतिपादयता आचार्येणोक्तं- वपुषो कृशत्वं ,मुखे प्रसन्नता, ध्वने स्फुटत्वं प्राकट्यं नेत्रे सुष्ठु निर्मले आरोग्यं विदर्घातोर्जयः क्षयाभावरूपः अग्नेरौर्यस्य दीपनं दीप्तिर्नाडीनां विशेषण शुद्धिर्मलापगमः एतद्धठस्य हठाभ्याससिद्धेर्भाविन्या लक्ष्यतेऽनेनति हठयोगलक्षणम्। तद्यथा-

वपुः कृशत्वं वदने प्रसन्नता नादस्फुटत्वं नयने सुनिर्मले।
अरोगता बिन्दुजयोऽग्निदीपनं नाडीविशुद्धिर्हठयोगलक्षणम्।।

एवं योगसिद्धिये नाडीनां शोधनमत्यावश्यकं विद्यते। अतो यागिभिः नाडीशोधने प्रयत्नो विधेयः।

सन्दर्भग्रन्थसूची:-

१.हठयोगप्रदीपिका,तृतीयोपदेशःश्लो.१२३
२.योगवसिष्ठ
३योगपनिषद
४श्रीमद्देवीभागवतपुराणम्
५.हठयोगप्रदीपिका,चतुर्थोपदेशःश्लो,१६,१७५घेरण्डसंहिता
६पातञ्जलयोगदर्शनम्
६.पातञ्जलयोगदर्शनम्,३
८.षट्चक्रनि

पादटिप्पणी-

१हठयोगप्रदीपिका,तृतीयोपदेशः १२३-११७-११८-११९
२.यो.वा.सर्ग ७८,श्लो.१०
३.योगपनिषद पृ.१६२,१६३
४.हठयोगप्रदीपिकाद्वितीयोपदेशश्लो८-९
६.श्रीमद्देवीभागवतपुराणम्७,३५,२८-३३
७.घेरण्डसंहिता,तृतीयोपादेशःश्लो३३-३

शोधच्छात्रा, सांख्ययोगविभागः
केन्द्रीयसंस्कृतविश्वविद्यालय, श्रीसदाशिवपरिसरः,पुरी ।



# श्रीमद्भागवतपुराणे सांख-ादर्शनविमर्श:

सन्दीप चटर्जी

पुराणानां महत्त्वं तु सर्वविदितमेवास्ति। अष्टादशमहापुराणेषु श्रीमद्भागवतस्-ा महत्त्वमनुपमद्विती-ां चास्ति। वेद-वेदान्तपारङ्गते गीता-ा: कर्तरि व्-ासे खेदमनुभवति देवर्षिर्नारदस्तं भागवतमुपदिदेश। एतत्प्रभावेणैव वेदव्-ासो निर्बाधो बभूव तथा च द्रष्टुं शक्-ते –

**वेदान्तवेदसुस्नाते गीता-ा अपि कर्तरि।**
**परितापवति व्-ासे मुह्यत्-ज्ञानसागरे।।**
**तदा त्व-ा पुरा प्रोक्तं चतु:श्लोकसमन्वितम्।**
**तदी-ाश्रवणात्सद्यो निर्बाधो वादरा-ण:।।**

तस्माद्धेतो: एतत्पुराणस्-ा महत्त्वं केन वर्णि-ातुं शक्-ते। -ो भवसिन्धुं सारल्-ेन तर्तुमिच्छति, तेषां कृते पुराणमेतत् प्लवरूपमस्ति। अन्धं तमस्तितीर्षूणां कृते चाध्-ात्मप्रदीपभूतमस्ति। कलौ प्राणिषु कृपां कृत्वा गुह्यं पुराणमिदं प्रकाश-ामास श्रीशुक: तद्यथा

**-ा: स्वानुभावमखिलश्रुतिसारमेक-**
**मध्-ात्मदीपमतितितीर्षतां तमोऽन्धम्।**
**संसारिणां करूण-ाऽऽहपुराणगुह्यं**
**तं व्-ाससूनुमुप-ामि गुरूं मुनीनाम्।।**

श्रीभगवान् नारा-णो ब्रह्मणे अध्-ात्मदीपं प्रकाशितवान् –

**कस्मै -ेन विभासितोऽ-मतुलो ज्ञानप्रदीप: पुरा।**

-दा श्रीमद्भागवतमहापुराणस्-ा दार्शनिकस्वरूपस्-ा चर्चा क्रि-ते तदा इदमेव तत्त्वं सम्मुखमापतति -त् पुराणमिदं सर्ववेदान्तसारभूतं वर्तते। अद्वैतमतानुसारं जीवब्रह्मणोरैक्-ां वर्तते, न त-ोर्मध्-े कोऽपि भेद:। एतदेव भागवत्पुराणेनापि स्पष्टी भवति। मोक्षप्राप्तिरेव तस्-ा प्र-ोजनमस्ति–

**सर्ववेदान्तसारं -द् ब्रह्मात्मैकत्वलक्षणम्।**
**वस्त्वद्विती-ां तन्निष्ठं कैवल्-ैक प्र-ोजनम्।।**

अस्मिन् पुराणे भक्ति–ज्ञान–विरागाणां मन्दाकिनी सततं प्रवहति। तद्यथा द्रष्टुं शक्-ते –

**श्रीमद्भागवतं पुराणममलं -द्वैष्णवानां प्रि-म्।**
**-ास्मिन् पारमहंस्-मेकममलं ज्ञानं परं गी-ते।।**
**तत्र ज्ञानविरागभक्तिसहितं नैष्कर्म्-मािविष्कृतम्।**
**तच्छ्रृण्वन् विपठन् विचारणपरो भक्त्-ा विमुच्-ेन्नर:।।**

एतेनैव ज्ञा-ते -त् भागवते समस्तदर्शनानां सिद्धान्ता: सविस्तरं समुपलभ्-न्ते। शोधपत्रेऽस्मिन् केवलं सांख-ादर्शनस्-ा विचार: प्रस्तु-ते।

श्रीमद्भागवते सांख-ादर्शनम् –

श्रीमद्भागवते सांख-ादर्शनस्-ा परिपाकस्तु पूर्णरूपेण वरीवर्ति। -द्यपीदं वक्तुं शक्-ते -त् तमेव विदित्वाऽतिमृत्-ुमेति नान्-ा: पन्था विद्यतेऽ-ना-ा इति श्रुतिवचनादात्मज्ञानं विना कथं मुक्तिर्भवेत्। तथापि इदमवधे-ां -त् आत्मदर्शनरूपमेव ज्ञानं हृद-ाग्रन्थिभेदकम् अहङ्कारनिवर्तकं च परमकल्-ाणा-ा कल्पते। तत्त्वज्ञानादेव विविक्तात्मज्ञानं भवति। सांख-ाशास्त्रे एव

तत्त्वानि सम्-ाक् प्रतिपादितानि सन्ति। तस्माद्धेतोः सांख्-ोक्ततत्त्वज्ञानं मुक्तिसाधकम्, नास्त्-ात्र कश्चन सन्देहलेशोऽपि।

श्रीमद्भागवतस्-ा तृती-स्कन्धे सांख्-ादर्शनस्-ा विशदं विवेचनमस्ति। अत्र सांख्-दर्शनपद्धत्-ानुसारं प्रकृतिपुरुषादीनां -थार्थविवेचनं कृतमस्ति तद्यथा –

**प्रकृतेः पुरुषस्-ापि लक्षणं पुरुषोत्तम।**
**ब्रूहि कारण-ोरस्-ा सदसच्च -दात्मकम्।।**

इति देवहूत्-ाा प्रश्ने कृते भगवान् कपिलः प्रकृतिपुरुष-ोर्लक्षणं प्रोक्तवान्। पृथ्वी–जल–तेजो–वा–वाकाशादीनि पञ्चमहाभूतानि शब्द–स्पर्श–रूप–रस–गन्धादीनि पञ्चतन्मात्राणि, पञ्चज्ञानेन्द्रि-ाणि, पञ्चकर्मेन्द्रि-ाणि, महत्वम्, अहङ्कारः, मनश्चेति तत्त्वानां वर्णनमपि विशद्रूपेणाकरोत्। तद्यथा –

**-त्तत्त्रिगुणमव्-क्तं नित्-ां सदसदात्मकम्।**
**प्रधानं प्रकृतिं प्राहुरविशेषं विशेषवत्।।**
**पञ्चभिः पञ्चभिर्ब्रह्म चतुर्भिर्दशभिस्तथा।**
**एतच्चतुर्विंशतितिकं गणं प्राधानिकं विदुः।।**
**महाभूतानि पञ्चैव भूरापोऽग्निमरून्नभः।**
**तन्मात्राणि च तावन्ति गन्धादीनि मतानि मे।।**
**इन्द्रि-ाणि दश श्रोत्रं त्वादृग्रसननासिकाः।**
**वाक्करौ चरणं मेढ्रं पा-ुर्दशाम उच्-ते।।**
**मनोबुद्धिरहङ्कारश्चित्तमित्-न्तरात्मकम्।**
**चतुर्धा लक्ष्-ते भेदो वृत्-ाा लक्षणरूप-ाा।।**
**एतावानेव सङ्ख्यातो ब्रह्मणः सगुणस्-ा हि।।**

-था सांख्-ाशास्त्रे सत्त्वरजस्तमसां साम्-ावस्था प्रकृतिः, महान्, अहङ्कारः, पञ्चतन्मात्राणि, पञ्चमहाभूतानि, एकादशेन्द्रि-ाणि तत्त्वानि प्रतिपादितानि सन्ति तथैव श्रीमद्भागवतेऽपि पञ्चविंशतितत्त्वानि प्रदर्शितानि सन्ति। तथा च अस्माभिः द्रष्टुं शक्-ते -त् –

**प्रकृतिर्बुद्ध्-ाहङ्कारो तन्मात्रैकादशेन्द्रि-ाम्।**
**भूतानि चेति सामान्-ां चतुर्विंशतिरेव च।।**

-था सांख्-ासूत्रे अथ त्रिविधदुःखात्-न्तनिवृत्तिरत्-न्तपुरुषार्थः इत्-नेन सूत्रेण -था मोक्षस्-ा स्वरूपं प्रतिपादितं तथैव भागवतेऽपि दृश्-ते -त्–

**प्रकृतिस्थोऽपि पुरुषो नाज्-ते प्राकृतैर्गुणैः।**
**अविकारदकर्तृत्वान्निर्गुणत्वाज्जलार्कवत्।।**

इति श्लोकादारभ्-ा त्रिंशच्छोकं -ावन्मोक्षस्-ा सम्-ाग् विवेचनं कृतमस्ति। भागवतस्-ा चतुर्थस्कन्धेऽपि नारदोक्तमोक्षकथनं सांख्-ाशास्त्रानुसारमेव तद्यथा –

**-था नभस्-भ्रतमः प्रकाशा**
**भवन्ति भूपा न भवन्त्-ानुक्रमात्।**
**एवं परे ब्रह्मणि शक्त-ास्त्वमू**
**रजस्तमः सत्त्वमिति प्रवाहः।।**

एवमेव दशमस्कन्धेऽपि सांख्-ादर्शनमनुसृत्-ैव तत्त्वोपदेशः कृतो विद्यते। तद्यथा –

**एतदन्तः समाम्ना-ो -ोगः सांख्-ां मनीषिणाम्।**

**त्-ागस्तपो दमः सत्-ं समुद्रान्ता इवापगाः।।**

भागवतस्-ा एकादशस्कन्धे बद्ध-मुक्त-ोर्विष-ो सांख्-मतानुसारमेव वर्णनं कृतं विद्यते। -ाथा सांख्-ो प्रकृति-पुरुष-ोर्विवेकेन मोक्षप्राप्तिः कथिता तथैव भागवतस्-ैकादशस्कन्धे भगवता श्रीकृष्णेन स्वभृत्-मुद्धवं प्रति सृष्टिप्रक्रि-ाा, प्रल-प्रकारवर्णनपुरःसरं मोक्षस्वरूपं चोपवर्णितम्-

**अथ ते संप्रवक्ष्-ाामि सांख्-ं पूर्वैर्विनिश्चितम्।**
**-ाद् विज्ञा-ा पुमान् सद्यो जह्याद्वैकल्पिकं भ्रमम्।।**
**तमो रजः सत्त्वमिति प्रकृतेरभवन् गुणाः।**
**म-ाा प्रक्षोभ्-माणा-ााः पुरुषानुमतेन च।।**
**एष सांख्-विधिः प्रोक्तः संश-ग्रन्थिभेदनः।**
**प्रतिलोमानुलोमभ्-ां परावरदृशा म-ाा।।**

-ाथा सांख्-सूत्रे दृश्-ते -

**न नित्-शुद्धबुद्ध मुक्तस्वभावस्-ा तद्योगस्तद्योगादृते।।**

-ाथा सांख्-सूत्रे उक्तमस्ति तथैव भागवतेऽपि कथितमस्ति तद्यथा -

**बद्धो मुक्त इति व्-ाख्-ाा गुणतो मे न वस्तुतः।**
**गुणस्-ा मा-ामूलत्वान्न मे मोक्षो न बन्धनम्।।**
**शोकमोहौ सुखं दुःखं देहोत्पत्तिश्च मा-ा-ाा।**
**स्वाप्नोऽ-मात्मनः ख्-ातिः संसृतिर्न तु वास्तवी।।**

सांख्-दर्शनानुसारं श्रीमद्भागवतेऽपि तत्त्वानां वर्णनं द्वादशस्कन्धे सप्तमाध्-ाा-े दशमश्लोकादारभ्-ा विंशतिश्लोकं प-र्न्तं विस्तारपूर्वं कृतमस्ति ।

-ाथा सांख्-ा प्रकृति-पुरुष-ोर्विवेकेन मुक्तिः कथिता तथैव भागवतेऽपि त-ोर्विवेकेन मोक्षप्राप्तिः प्रदर्शिताऽस्ति। तद्यथा -

**मुक्तभोगा परित्-क्ता दृष्टदोषा च नित्-शः।**
**नेश्वरस्-ाशुभं धत्ते स्वे महिम्नि स्थितस्-ा च।।**

-ाथा च सांख्-शास्त्रे प्रकृतेः सर्गकारणत्वं स्वीक्रि-ते तथैव भागवतेऽपि तदेव प्रोक्तं दृश्-ते। तद्यथा

**का-ीकारणकर्तृत्वे कारणं प्रकृतिं विदुः।**
**भोक्तृत्वे सुखदुःखानां पुरुषं प्रकृतेः परम्।।**

उपसंहारः -

किं बहुना, श्रीमद्भागवतपुराणमहापुराणं तु पूर्णरूपेण सांख्-स्-ा निदर्शनमिति वक्तुं शक्-ते। न कोऽपि सांख्-विष-को विष-ो -ाद् भागवते न दृश्-ते। अस्-ा पुराणस्-ा एकादशस्कन्धे तु सांख्-मेव प्रा-ो निरूपितम्। एवमेव तृती-स्कन्धे कपिल-देवहूति इत्-न-ोः संवादे सांख्-स्-ैव प्राधान्-ेन वर्णनमस्ति। अतः सांख्-दर्शनदृष्ट्-ाा भागवतस्-ा महत्त्वमनिर्वचनी-मेवेति।

शोधार्थी - अद्वैतवेदान्तविभागः
केन्द्री-संस्कृतविश्वविद्याल-ाः, श्रीसदाशिवपरिसरः, पुरी



# नाथसम्प्रदाये योग:

सस्मितामहापात्र:

प्राचीनकालादेव योगस्य विविधा: परम्परा: सम्प्रदाया: च दृश्यन्ते। सम्प्रदायानां संस्थापकोऽपि वर्त्तन्ते। परन्तु हिन्दुधर्मस्य संस्थापकाभावात् हिन्दुधर्म:सनातनधर्म: इति कथ्यते। नाथसम्प्रदायस्योत्पत्ति: प्रमुखतया हिन्दुधर्मसम्प्रदयात् आगत:। हिन्दूनां चत्वार: सम्प्रदाया: भवन्ति। यथा-

१.वैदिकसम्प्रदाय:

२.वैष्णवसम्प्रदाय:

३.शैवसम्प्रदाय:

४.स्मार्तसम्प्रदाय:

एतेषु सम्प्रदायेषु शैवसम्प्रदायस्य शाक्त:, नाथ: इति भागद्वयं वर्त्तते।

**नाथशब्दस्यार्थ:**

नाथशब्द: "नाथृह्ल धातो: "अह्ल प्रत्यते निष्पद्यते। सिद्धसिद्धान्तपद्धतौ "नाथृह्लधातो: चत्वार: अर्थ: वर्त्तन्ते। यथा- याचक:,उपतापक:, आशीर्वाददाता, ईश्वर: इति। गोरक्षसिद्धान्तसंग्रहे नाथशब्दस्यार्थ: इत्थमस्ति-

**नकारोनादरूपं थकार: स्थाप्यते सदा।**
**भुवनत्रयमेवैक: श्रीगोरक्षनमोऽस्तुते।।**[१]

'न' शब्दस्यार्थ: अनादिरूप:, 'थ' कारस्यार्थ: भूवनत्रयस्य स्थापनम्। अत: नाथशब्दस्यार्थ: अनादिधर्म: अस्ति य: भूवनत्रयस्थिते: कारणं वर्त्तते। गोरक्षसिद्धान्तसंग्रहस्य शक्तिसंगमतन्त्रे नाथ शब्दस्यार्थ: नाथब्रह्मेति लिखितमस्ति।

**श्रीमोक्षदानदक्षत्वान्नाथ (द) ब्रह्मानुबोधनात्।**
**स्थागिताज्ञानविभवाच्छ्रीनाथइति गीयते।।**[२]

नाथशब्द: शिवस्य प्रतीकमस्ति। अयं शिव: शक्तियुक्त: अपि भवति। 'ना' शब्द: पुरुषवाचक:'थ' इति शब्दस्यार्थ: शक्ति:। प्रसङ्गेस्मिन् तन्त्रशास्त्रे उच्यते-

**नकार: शिव इत्युक्ते थकार: शक्तिरुच्यते।**[३]

एवं प्रकारेण शिवशक्त्यो: अभेदोस्ति। महेश्वरोऽपि स्वयं शक्त्या विना किमपि कर्तुं न शक्नोति। श्रीगोरक्षनाथेन सिद्धसिद्धान्तपुस्तके उक्तमस्ति-

**शिवोऽपि शक्तिरहित: कर्तुं शक्तो न किंचन।।**[४]

**नाथसम्प्रदायस्य उत्पत्ति:**

भारतीयपरम्परायां नाथसम्प्रदायस्य महत्वपूर्णस्थानं वर्तते। नानाग्रन्थेषु नाथसिद्धानां विषय: वर्णितमस्ति। सम्प्रदायस्यास्य नाथरूपेण भगवतशिवं मन्यते। यमादिनाथमित्युच्यते। शिवादनन्तरं नाथसिद्धानां नाथसम्प्रदायस्य दीर्घपरम्परा अभवत्। अस्य सम्प्रदायस्य शिवस्य मानसपुत्रत्वेन नाथसिद्धान् ज्ञायते। एतानपि शिवस्य वंशजत्वेन ज्ञायते। सम्प्रदायेस्मिन् हठयोगस्य प्राध्यान्यता दृश्यते। नाथसम्प्रदायस्य संस्थापक: मत्सेन्द्रनाथ:। भारतवर्षे नाथसम्प्रदाय: इतस्तत: अवस्थायामासीत् परन्तु १००८ संवत्सरे मत्सेन्द्रनाथस्य शिष्य: श्रीगोरक्षनाथ: एकीकरणं कृतवान्। अस्माकं देशे नाथसम्प्रदायसिद्धान् सन्यासी- योगी- उपाध्याय- योगी- उपाध्याय- गिरी- पुरी- बाबा- नाथ- अवधूत- कौल- गौस्वामी- गोसाई नाम्ना ज्ञायते। गोरक्षनाथ: सम्प्रदायस्य प्रमुखरूपे परिगण्यते।

**नाथसम्प्रदाये योगस्य महत्त्वम्**

नाथसम्प्रदाये योगसाधनाया: परमोद्देश्य: पिण्डब्रह्माण्डयो: समरसज्ञानमिति। पिण्डपदेन शरीरशब्दस्यावगम्यते। अत:शरीरेब्रह्माण्डस्य साक्षात्कार: योगमार्गेण एवभवति इति एते विश्वसन्ति। योगेन पिण्डब्रह्माण्डयो: मध्ये भेदसमाप्तं भूत्वा परमपदस्य प्राप्ति: भवति। शरीरेस्मिन् शिवशक्ति: विद्यमानास्ति, योगसाधनेन शक्तिशिवो: मेलनं भवति। नाथसम्प्रदाये योगसाधनस्य सोपानक्रम: वर्तते। ते यथा- कानफटा, औघड:, दरसनी, अवधूतेति।

**नाथसम्प्रदायस्य विकाशक्रम:**

नाथसम्प्रदायस्य प्रथापरम्परा हिन्दु- जैन- बौद्धादिधर्मेषु प्रचलमासीत्। नाथशब्दस्यार्थ: भवति स्वामी। शैवानां कृते नाथशब्दस्यार्थ: शिवेति। अस्य परम्परायां भगवन्तं शङ्करम् अग्रे नीतवान्। शङ्करस्य शिष्य: वृहस्पति- विशालाक्ष- शुक्र- सहस्राक्ष- महेन्द्र- प्राचेतस- मनु- भरद्वाज- अगस्तीमुनी- गोरशिरसमुनि- नन्दि- कार्तिक- भैरवनाथादिभि: शिष्यै: अस्या: परम्पराया: अग्रेप्रचलनं कृतम्।

भगवत: शङ्करस्यानन्तरं अस्या: परम्पराया: प्रसारणं भगवन् दत्तात्रेय: कृतवान्:। भगवान् दत्तात्रय: शिववैष्णवपरम्परयो: समन्वयार्थं कार्यमकोरत्। महाराष्ट्रे नाथपरम्पराया: विकासस्य श्रेय: दत्तात्रेय: अस्ति। अत्रैव दत्तात्रेयमादिगुरुत्वेन ज्ञायते।

दत्तात्रेयानन्तरं मत्सेन्द्रनाथ: अस्य सम्प्रदायस्य विकासाय प्रमुखभूमिकां गृह्णते। मत्सेन्द्रनाथस्य गुरु: दत्तात्रेय: वर्तते। स: नाथसम्प्रदायस्य संस्थापकत्वेनापि ज्ञायते। वंगाल- नेपाल- असम- तिब्बत- वर्मादिदेशेषु दत्तात्रेयस्य पूजनं क्रियते।

मत्सेन्द्रनाथस्यानन्तरं गुरुगोरक्षनाथस्य आविर्भाव: अभवत्। यं नाथसम्प्रदायस्य प्रमुखगुरुरूपेण परीगण्यते। तेन इतस्तत: नाथसम्प्रदाय: एकिकृत: कृत:। एतदतिरिच्य नाथसाधुषु भर्तुहिनाथ- नागानाथ- चर्पटनाथ- रेणवनाथ- कनिफनाथ- जांलधरनाथ- कृष्णपाद- बालकगहिनीनाथयोगी- गंगादेव- रामदेव- सांईनाथादय: अन्यतमा: वर्तन्ते।

**नाथयोगे साधकानां भेदा:**

**कानफटायोगी: (नाथयोगी)**

गुरुगोरक्षनाथस्य अनुचरान् कानफटायोगीरित्युच्यते। कानफटाकथनस्याभिप्राय: अस्ति– दिक्षासमये शिष्या: छुरीकया कर्णछेदनं कृत्वा कुण्डलं मुद्रा वा धारयन्ति। य: साधक: कर्णछेदनं करोति अपि तु कुण्डलधारणं न करोति तान् गोरक्षनाथमार्गे सन्देहस्पद: वर्तते।[५]एते षडाङ्गयोगसाधनां कृतवन्त:। हठयोगस्यापि साधनं कुर्वन्ति। इतोपि कुण्डलिनीशाक्तिमाध्यमेन शिवेन सह संयोग: भवति। येन तेषां मोक्ष: भवति।

**औघोडयोगी: (अकानफटा)**

औघोडयोगीजना: अपि गुरुगोरक्षनाथस्य अनुगामिन: सन्ति। साधक: सांसारिकबन्धनं त्यक्त्वा योगीसम्प्रदाये प्राविशत्। परन्तु एते साधका: दीक्षासमये कर्णछेदनं न कुर्वन्ति पुन: कुण्डलमपि न धारयन्ति। इति हेतो: तेषां सामान्यऔघडीयोगी: अकनफटायोगी: वा उच्यते।

**दरशनयोगी:**

गोरक्षनाथानुसारं य: सांसारिकबन्धनं पुर्णरूपे त्यक्त्वा योगसाधने निरन्तराग्रसरं भूत्वा लक्षसिद्धप्राप्ताय दृढसंकल्पं करोति तं दर्शनयोगी: उच्यते। एतान् कुण्डलमपि उच्यते। दरशनयोगी: कर्णछेदनं कृत्वा स्फटिकं, धातु:, दंतनिर्मितंवाकुण्डलं धारयति। अयं कुण्डलं पवित्री: इति उच्यते। इदमपि उच्यते यत् दरशनयोगी: ब्रह्मसाक्षात्कार: कुर्वन्ति। अत: तस्मिन् समये दरशनयोगी पुज्याष्पद: आसीत्।

**अवधूतयोगी:**

य: सर्वान् त्यक्त्वा शिवस्य स्वरूपे स्वयं समर्पयति तमवधूतयोगीरुच्यते। अत्रसर्वान् इति उक्ते प्रकृतिविकारशरीरस्य,

इन्द्रियस्य, चित्तस्य, अनात्मस्वरूपविषयप्रपञ्चादिमलानाम् अवधूननं कृत्वा परमपिताशिवस्य स्वरूपे एकाकारं भवति तं अवधूतयोगीरुच्यते। प्रसङ्गेऽस्मिन् गोरक्षनाथेनसिद्धसिद्धान्तपद्धतिपुस्तके उक्तमस्ति-

**अथकोऽवधूतयोगीनामेत्यपिक्षायामाह।**

**यः सर्वान्प्रकृतिविकारानवधुनोतीत्यवधूतयोगी:।**[६]

**अवधूतः भोगी- त्यागी- नग्नदिगाम्बर- योगिराज- गुरुरादिस्वरूपेषु प्रतिष्ठितं भूत्वा जीवनं धारयति।**[७]

महर्षिपतञ्जलिनाऽपि योगसुत्रे चत्वारः योगसाधकानां नामानि वर्णितानि। यथा- योगारूढः, युञ्जानः, आरुरुक्षः, सिद्धयोगी: चेति।

**नाथयोगस्य प्रमुखसिद्धान्तः**

संसारे नाथयोगः योगजगति स्वस्य विशिष्टपरिचयः निर्मायति। यद्यपि लोके नानायोगपद्धतयः प्रचलिताः आसन्, तथापि एषा नाथयोगपद्धतिः अतुलनीयास्ति। नाथयोगस्य विशेषतानाथशब्देन निहितमस्ति। नाथशब्दः शिवस्य पर्यायरस्ति। अपि तु हठयोगस्य वाचकः वर्तते। अन्येषु योगसाधनेषु अयं क्लिष्टमस्ति। नाथयोगस्य काश्चन प्रमुखाः सिद्धान्ताः वर्तते ते यथा- पिण्डब्रह्माण्डज्ञानं, शिवशक्तिरभेदकथनं, सद्गुरुस्वरूपावधूतस्य स्वरूपं, गुरुवादः, अष्टाङ्गयोगः, षडाङ्गयोगः, हठयोगस्य वैशिष्टं, शिवाद्यवाद- द्वैताद्वैतविवर्जितादि इति।

योगपरम्परायां नाथसम्प्रदायस्य महत्वमद्वितीयः अस्ति। नानाग्रन्थेषु अपि नाथयोगविषये वर्णितमस्ति। यत् सिद्धपुरुषः ज्ञातुं शक्यते न तु साधारणपुरुषः। अद्यापि नाथकेन्द्रे योगस्य दीक्षायाः प्रदानं प्रचलति। नाथयोगीनः अपि योगस्य प्रचारप्रसाराय अनेकाः मठाः, मन्दिराणि, आश्रमाः समग्रे देशे स्थापनं कृतवन्तः। एताः नाथयोगकेन्द्राणि अद्यापि दृश्यन्ते।

शारिरीकमानसीकसंयमेन सह भक्तिः पुजार्चनापि नाथसम्प्रदाये दरीदृश्यते। नाथयोगीनः श्रद्धापुर्वकं अस्माकं देशस्य नानास्थाने अनेकाः शिवमन्दिराणि, कालिमन्दिराणि च निर्मितवन्तः। इतोपि सम्प्रदायेस्मिन् गुरुभक्तेः विशेषता दृश्यते। गुरुः सर्वोपरि विद्यते। एते विश्वसन्ति यदि गुरुः प्रसन्नः तर्हि योगसाधनं सम्यकतया भवितुं शक्यते। परन्तु कर्मोपासनायाः महत्वं न दृश्यते। एवं प्रकारेण योगस्य महत्ती परम्परा तथा सम्प्रदायःरूपेण नाथसम्प्रदायः परिगण्यते।

**पादटीप्पणी:**

१.गो.सि.सं.– पृ.२६

२. गो.सि.सं.– पृ.२६

३. तन्त्रशास्त्रम्

४. सि.सि.प.- पृ.१५

५. ना.स.– पृ.९

६. सि.सि.प.- ६.१

७. क्वचिद्भोगी क्वचित्त्यागी क्वचिन्नग्नेदिगम्बरः।
क्वचिद्राजाक्वाचाचारि सोऽवधूतोऽधीयते। सि.सि.प- ६.११

**सन्दर्भग्रन्थसूची**

१.गोरक्षसिद्धान्तसंग्रहः

२.तन्त्रशास्त्रम्

३.नाथसम्प्रदायः

४.सिद्धसिद्धान्तपद्धत्तिः

५.नाथसम्प्रदाय में योग

६. पातञ्जलयोग एवं नाथयोग

शोधच्छात्रा, सांख्ययोगविभागः
श्रीसदाशीवपरिसरःपुरी



# न्यायवैशेषिकदर्शनविमर्शः

शक्तिप्रसादत्रिपाठी,

अस्मिन् संसारे नैके प्राणिनो जीवन्ति। तेषु मनुष्याः एव स्वकीयोद्देश्यं धर्मेण साधयन्ति। अन्ये सर्वे प्राणिनो जीवनं कथमपि यापयन्ति। ते तु न जानन्ति यज्जीवनस्य फलं लक्षञ्च किमिति ? तस्मात् तयोर्बोधाय दर्शनमुत्पन्नमिति। दृश्यतेऽनेनेति करण- व्युत्पत्या दृशिप्रेक्षणे धातोः ल्युट् प्रत्यये कृते दर्शन-शब्दो निष्पद्यते । तत्र किं दर्शनमिति भूयोऽपि जिज्ञासायां सत्यां आत्मा वाऽरे द्रष्टव्यः[१] - इति मन्त्रानुसारेण सर्वे वैदिकाः दार्शनिकाः आत्मानमुद्दिश्य तस्यानुसन्धानं तत्वज्ञानाय कृतवन्तः।

भारतीयदर्शनानि स्थूलरुपेण द्विधा विभज्यन्ते- अस्तिकदर्शनानि, नास्तिक-दर्शनानि च। नास्तिकाः वेदनिन्दकाः इति मनुवचनानुसारं यानि दर्शनानि वेदानां प्रमाण्यमङ्गिकुर्वन्ति तानि अस्तिक दर्शनानि कथ्यन्ते। अतः चार्वाकाः जैनाः बौद्धाः वेदानां प्रामाण्यं न स्वीकुर्वन्ति, अत एव एते नास्तिकदर्शनानि रूपेण परिगण्यन्ते। एवमेव प्रकारेण वैशेषिक-साङ्ख्य -योग- मीमांसा-वेदान्ताख्यानि षडदर्शनानि आस्तिकदर्शनानि अभिधीयन्ते।

सर्वेषु आस्तिक-दर्शनेषु सर्वत्र सामान्यतया अनुबन्धचतुष्टयमस्ति, तत्र तत्वबुभुत्सुरधिकारी,मुक्तिरेव प्रयोजनम्, जीवब्रह्मपञ्चानां सम्यक् ज्ञानमेव विषयः प्रतिपाद्यप्रतिपादकभावस्तु सम्बन्धः। विषयेऽस्मिन् मनुना सुष्ठूक्तम्-

**वेदोऽखिलं धर्ममूलं स्मृतिशीले च तद्विदाम्।**
**आचारश्चैव साधूनामात्मनस्तुष्टिरेव च।।**[२]

अत्रत्यविदुषामयं परिस्फुटो विचारः यन्मानवः पुरुषार्थमयजीवनं साधयेत्। धर्मार्थकाममोक्षाः पुरुषार्थाः चत्वारः। धर्मादिप्रतिपादका ग्रन्था धर्मशास्त्रे मनुस्मृत्यादयः। अर्थशास्त्रे विष्णुगुप्तचाणक्यस्यार्थशास्त्रम्, कामशास्त्रे वात्सायनस्य कामसूत्रम्, मोक्षशास्त्रे उपनिषदः, भगवद्गीता, ब्रह्मसूत्राणि च सन्ति। उक्तं च-

**धर्ममूलः सदैवार्थः कामोऽर्थफलमुच्यते ।**
**मूलमेतत् त्रिवर्गस्य निवृतिर्मोक्ष उच्यते।।**[३]

वादानुक्तमतानि परलोकसिद्धान्तसमन्वितानि च आस्तिकदर्शनानि षट् संख्यकानि। षड्दर्शनपरम्परायां न्यायदर्शनं प्रमुखम्। महर्षिगौतमः न्यायस्यादि प्रणेता। न्यायदर्शने प्रमाणप्रमेयादिषोड़शपदार्थानां चित्रणं वर्तते। नैयायिकास्तु प्रमाणचतुष्टयं मन्यन्ते। निःश्रेयसं मुक्तिरेव प्रयोजमिति तच्छात्रौ। दर्शनस्यास्य मान्यता यत् दुःखत्रयपाशबद्धो जीवात्मा प्रमाणप्रमेयादि षोड़शपदार्थानां तत्वज्ञानात् मोक्षं प्राप्नोति।

दर्शनेऽस्मिन् प्रमाणानां विवेचनं विशेषतया विहितम्। तत्र प्रत्यक्षानुमानोपमानशब्दा इत्येतानि चत्वारि प्रमाणानि स्वीकृतानि। प्रमाणैरर्थपरीक्षणं न्यायः इति व्याहरता भाष्यकारेण वात्सायनेन न्यायनये प्रमाण महात्म्यमङ्गिकृतम्।

तत्र आत्मा तु द्विविधो जीवात्मा परमात्मा चेति। प्रतिशरीरभेदेन जीवात्मा तु नाना परन्तु परमात्मा एक एव। जीवात्मनो योगायतनं शरीरमुच्यते। ज्ञानसाधनानि करणानीन्द्रियाणि इति।

अर्थस्तु द्रव्य गुणादय, इर्षाद्वेषमिथ्याज्ञानानि दोषास्तन्ति। अतिन्द्रिय मनः अणुनि चेति। अर्थज्ञानं बुद्धिरुच्यते। प्रवृतिस्तु धर्माधर्मयागादयः सन्ति। पीड़ातापादीनि दुःखानि सन्ति। अपवर्गस्तु मोक्ष इत्युच्यते।

रूपादिरहितत्वात् नैयायिकाः ईश्वरं तु अतिन्द्रियं मन्यन्ते। ईश्वरः प्रत्यक्षेण न सिध्यति किन्त्वनुमानेन यथा कर्तुरभावे कार्यस्याभावात् तथा जगद्रूपकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। विषयेऽस्मिन् श्रुतिप्रामाण्यमपि वर्तते-

**एको देवः सर्वभूतेषु गढः सर्वव्यापी सर्वभूतान्तरात्मा।**
**कर्माध्यक्षः सर्वत्रुताधिवासी साक्षी चेता केवलो निर्गुणश्च**[४]**।।**

इदं जगत् सर्वज्ञेन जीवानां कर्मफलभोगाय परमाणुभिः विरचितम्। परमाणूनां संयोगः विप्रयोगश्च ईश्वरेच्छाया

भवति। अतः ईश्वरः जगत् प्रति निमित्तकारणमस्ति न्यायमते। अनया दृष्ट्या एवं वक्तुं शक्यते यत् न्यायदर्शनं द्वैतवादी चास्ति।

वैशेषिकदर्शनकारस्तु तत्र भवान् महर्षिः कणादः। न्यायवैशेषिकयोः सिद्धान्ते महदन्तरं नास्ति। न्यायदर्शनापेक्षया अत्र विशेषनामकः पदार्थः कल्पितः। येन नित्येषु पदार्थेषु परमाणुषु च भिन्नतायाः सिद्धिर्भवतीति। पदार्थस्य ज्ञेयत्वाभिधेयत्वलक्षणमस्ति। द्रव्यगुणकर्मादयः वैशेषिकानां मते सप्तपदार्थाः। एषु पदार्थेषु जगत् सर्वं समाविष्टमस्ति। अनेकेषु विषयेषु न्यायवैशेषिकयोः साम्यमस्ति। आत्मनः विषये यथा यस्मिन् समवायसम्बन्धेन ज्ञानमस्ति स आत्मा। स्वात्मातु प्रत्यक्षः परमात्मा अनुमानेन ज्ञायते। क्षेत्रज्ञस्तु सर्वजिवस्तु ईश्वरः। प्रमाणे प्रत्यक्षानुमाने स्तः। शब्दस्तु अनुमानान्तः उपमानं तु शद्बान्तर्गतमिति। पृथिवीजलतेजवाव्याकाशकालादिगात्ममनांसि इति नवद्रव्याणि। एतेषां सप्तपदार्थानां नवद्रव्याणां तत्त्वज्ञानमेव मोक्षसाधनम्। यतोऽभ्युदयनिःश्रेयसिद्धिः स धर्मः इति धर्ममूलेनैव तत्त्वज्ञानं सम्पद्यते। तत्त्वज्ञानं तु पदार्थानां साधर्म्यवैधर्म्यज्ञानेन भवति।

एवमास्तिकदर्शने विवेचनगम्भीर्येण, जीवनोन्नायकत्वेन, दुःखत्रयविनाशपूर्वकब्रह्मसाक्षात्कारणत्वेन समेषामपि तृप्तिरागच्छति ।

**सन्दर्भग्रन्थाः**


१. शर्मा चन्द्रधर, भारतीय दर्शन, मोतिलाल वनारस, वाराणासि, २०१०

२. मिश्र पङ्कज कुमार, सर्वदर्शनसंग्रह एवं शंकरदर्शन, परिमल पब्लिकेशन् दिल्ली, २०१६.

३. वर्मा वेदप्रकाश, धर्मदर्शन कि मूलसमस्या एँ, दिल्ली विश्वविद्यालय, २००३

४.डाँ मिश्रः हृदय नारायण, धर्मदर्शन परिचय, अमरमुद्रालय, प्रयागराज, २००९.

५.मिश्र केशवः, तर्कभाषा, ड़ि आर् भण्डारकरः, निर्णयसारप्रेस मुम्बाइ, १९३७।


**पदटीका-**

१. वृहदारण्यक उपनिषद- २.४.५

२. मनुस्मृति- २/६

३ म. भा.भा. द पृष्ट-५२

४.श्वेताश्वेतरुपनिषद- ६/११३


शोधछात्रः, सर्वदर्शनविभागः,

श्रीसदाशिवपरिसरः,पुरी




## मोक्षस्वरूपम्


**सीताकान्तमिश्रः**


यदि नाम दुःखं न स्यात् जगति, तर्हि तदपघातार्थं न कोऽपि प्रयतेत। अत एवोक्तं सांख्यशास्त्रे दुःखत्रयाभिघातादि्जज्ञासा तदपघातकेहेतौ[१]" इति । जागतिकदुःखजाले निगढितचरणाःस्वकर्मसन्ततेः उपशमनार्थं मातृजठरमसकृदाश्रितामोक्षमार्गान्विषणे बम्भ्रम्यमाणा जीवाःसततं शास्त्रविषयमाश्रयन्ते। एतच्चोक्तं षड्दर्शनव्याख्याकारेण वाचस्पतिमिश्रेण - एवं हि शास्त्रविषयो न जिज्ञास्येत यदि दुःखं नाम जगति न स्यात्, सद्वा न जिहासितम्, जिहासितं वा अशक्यसमुच्छेदम्, अशक्यसमुच्छेदता च द्वेधा दुःखस्य नित्यत्वात् तदुच्छेदोपायापरिज्ञानाद्वा। शक्यसमुच्छेदत्वेऽपि च शास्त्रविषयस्य ज्ञानस्यानुपायभूतत्वाद्वा, सुकरस्योपायान्तरस्य सद्भावाद्वा[२]।" एतदेव भारतीयदर्शनशास्त्रस्य चरमं लक्ष्यम्।

तथा ह्यतीतानागतवर्त्तमानदुःखेष्वतीतदुःखमधिकृत्य न कापि चित्तोदेति। गतेन प्रवृत्तिः इति नियमात्। साम्प्रतिकं च यद्दुःखं तत्तु कथमपिमर्षणीयं भवति, परं तु भाविदुःखं यावच्छक्यं परिहर्त्तुमिच्छति जीवः। तस्य च परिहारार्थमवश्यमेव

प्रयत्नः करणीयः। अत एवोक्तं हेयं दुःखमनागतमिति[३]। परन्त्वेतदपि अनुत्पन्नस्य शत्रोर्वधाय शस्त्रोत्क्षेपणवदसमञ्जसमिति चेन्न, अनागतं यद्यपि दुःखं तथापि तस्य कारणं तु विद्यत एव। तस्य तु विनाशे बीजनाशे अङ्कुरस्येव दुःखस्यानुदयात्। दुःखस्य कारणं तावदविद्या इति सर्वत्र शास्त्रकाराः उद्घोषयन्ति[४]। तस्या अविद्यायाः विनाश एवात्यन्तिकदुःखनिवृत्तिः निरतिशयसुखप्राप्तिश्च। निरतिशयसुखं च सुखस्य पराकाष्ठा, तथादुःखनिवृत्तेः आत्यन्तिकत्वं च समानाधिकरणदुःखप्रागभावासमानकालीनत्वमिति वैशेषिकसूत्रोपस्कारकारः। अतस्तादृशीमवस्थां प्राप्तवतोजन्तोर्न किंचिदप्यन्यदभिलषणीयं भवति। इयमेवावस्थाविशेषःमोक्षः। यश्च परमपुरुषार्थतया शास्त्रेषु प्रथते। अत एव तस्य दुःखनिवृत्तिरूपकस्य मोक्षतत्त्वस्य प्रतिपादनमेव भारतीयदर्शनशास्त्राणां चरममुद्देश्यमित्यत्र नास्तिकापि विचिकित्सा संख्यावतां मनस्सु।[५]

**रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां,**
**तृणामेको गम्यस्त्वमसि पयसामर्णव इव।[६]**

इति कविकुलशेखरस्य कालिदासस्य भणिताच्च यद्यपि चरमोद्दिष्टःमोक्ष इत्यत्र न विवादः, तथापि मोक्षस्वरूपविषये तदुपायविषये च दार्शनिकानां मध्ये बहुधा विप्रतिपत्तयः दरीदृश्यन्ते। तत्र चरमदुःखनिवृत्तिरेवपरमपुरुषार्थ इति कैश्चिदुच्यते। अन्ये केचनदुःखनिवृत्तिपूर्वकसुखप्राप्तिरेवेति। भारतीयदर्शनपरम्परायां दुःखनिवृत्तिरेवमोक्ष इति ये तावद् वदन्ति तेषु नैयायिकाः मुख्याः। तथा च सूत्रम् - तदत्यन्तविमोक्षोऽपवर्गः[७]। तदिति तत्पदेन दुःखमेव परामृश्यते। एतच्चोक्तं - निवृत्तेरात्यन्तिकत्वं नाम निवर्त्यसजातीयस्य पुनस्तत्रानुत्पाद इति। तथा च उपायसूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गःइति।[८] मोक्षावस्थायामात्मनि न कोऽपि विशेषगुणाः भवन्ति, ये तावदात्मनः बुद्ध्यादयो विशेषगुणाःसन्ति तेषां प्रध्वसाभाव एव मोक्षः। धर्माधर्मयोरभावान्न तदा दुःखं सुखमपि सम्भवतः। लोकेऽप्येतद् दृश्यते यद् यदा वयं रोगाक्रान्ताःभवामस्तदा अस्वास्थ्यमनुभवामः, पुनश्च रोगापगमे स्वास्थ्यमनुभवामः। तस्माद्रोगानन्तरम् अनुभूतिस्तु रोगात्प्रागेव याऽऽसीत् सा तथैवातो न केऽप्यत्र मुह्यमानाःभवन्ति। तत्र सुखानुभवस्तावदेतावदेव भवति यदहं रोगमुक्तःसञ्जात इति । प्रत्युतैतेन केवलं निषेधस्यैव भावना सत्तारूपेण गृह्यते। तथा चात्मनि दुःखनिवृत्तिरेव मोक्ष इति ।अत एवैतेषाम् इतरशास्त्रैः साकं इदमेव वैमत्यं यन्मुक्तावस्थायामपि आत्मनि दुःखमिव सुखस्यापि सुतरामभावो जायते। एतदुररीकृत्य नैषधकारेणोक्तम् -

**मुक्तये यः शिलात्वाय शास्त्रमूचेसचेतसाम् ।**
**गोतमं तमवेक्ष्यैव यथा वित्थतथैवसः।।[९]**

तदेव मोक्षस्य दुःखनिवृत्तित्वमिति मन्यमानाः वैशेषिकाः सांख्याश्च। अपरे यथा सर्वेऽपि वेदान्तिनो जैनाः बौद्धाश्च दुःखनिवृत्तिपूर्वकचरमसुखप्राप्तिरित्यामनन्ति। प्रसङ्गेऽस्मिन् स्वस्वरूपावस्थानमेव मोक्षप्राप्तिरिति अद्वैतवेदान्तिनः सांख्या अपि आमनन्ति। तत्र सांख्यानां मते प्रकृतिपुरुषान्यत्वख्यात्या प्रकृत्युपरमे पुरुषस्य स्वरूपेणावस्थानं मुक्तिरिति सांख्याख्यातेऽपि पक्षे दुःखोच्छेदोऽस्त्येव यच्च -तदाद्रष्टुःस्वरूपेऽवस्थानम्।[१०]" एतदेव सांख्यशास्त्रे कैवल्यं विवेक ख्यातिरिति नामभ्यां प्रथते। कैवल्यं नाम केवलस्य भावोऽर्थात्सत्त्वरजस्तमो-गुणात्मिकया प्रकृत्या साकं तस्य पुरुषस्यानभिसम्बन्धः। प्रकृतिपुरुषयोः पृथग् ज्ञानमेव विवेकख्यातिरिति। बन्धरूपस्य दुःखस्य निवृत्तिरेवपरमपुरुषार्थ इत्येतदर्थं प्रयत्नः करणीयो न च निरतिशयसुखप्राप्तिविषये। अत एवोक्तं यत् दुःखत्रयाभिघाताज्जिज्ञासा तदपघातकेहेतौ"[११] इत्यादिः।

एवं चावैदिकदर्शनेषु सुदूरदर्शिनः बौद्धसम्प्रदायान्तर्गताः माध्यमिकाः आत्मोच्छेद एव मोक्षः" इति प्रतिपादयन्ति। कामनायाः सुखदुःखोत्पादकत्वे तदनुसारं फलभोगार्थमात्मनः पुनर्जन्मग्रहणम् एवमनादिकालादारभ्य संसारे सुखदुःखभोगः। तदुच्छेदे तु सुखदुःखयोरात्यन्तिकाभाव एव निर्वाणमिति विज्ञानवादिनः प्रत्यवतिष्ठन्ते एतदेवोरीकृत्य परमकारुणिकेन भगवताबुद्धेन चत्वारि आर्यसत्यानि क्रमशो दुःखंदुःखहेतुः दुःखनिरोधः दुःखनिरोधोपाय इत्याख्यानि उद्भावितानि।

जैना अपि देहावरणमुक्तिर्मुक्तिरित्यामनन्ति। ऋते ज्ञानान्नमुक्तिरिति तेषां राद्धान्तः। तस्माज्ज्ञानोदयेन देहावरणस्य क्षयादात्मनः दुःखादिभ्यो निवृत्त्यनन्तरं स्वरूपप्रतिष्ठा संजायते। सैवावस्था एतेषां मते परमपुरुषार्थप्राप्तिरिति।

स्वातन्त्र्यं मोक्ष इति लोकायतिका:। सर्वदर्शनसंग्रहकारेणाप्येतन्मतं प्रत्यपादितम्। तच्च यथा पारतन्त्र्यं बन्ध:, स्वातन्त्र्यं मोक्ष इति, चार्वाकपक्षेऽपि स्वातन्त्र्यं दु:खनिवृत्तिश्चेदविवाद:।“[१२]तादृश: स्वातन्त्र्यस्य जगत्यसम्भवान् मरणमेव दु:खनिवृत्ते: कारणं भवति। अतोमरणमेव मोक्ष इति व्राहस्पतदर्शनस्याभिमतम् । परन्तूमरणं न कस्याप्यभिप्रेतं भवतीति कृत्वा तत्पुरुषार्थत्वेननैतै: परिगण्यते। यद्वा भवत्वन्ततो गत्वा एतेऽपि पारतन्त्र्यरूपस्य दु:खस्य निवृत्तिरेव मोक्ष इत्यङ्गीकुर्वन्ति।

काम्यवर्जनपुर:सरं नित्यनैमित्तिककर्माचरन्तोजना:मुमुक्षवो भवन्ति। काम्यानुष्ठानेन सुखदु:खभोगापत्ति:, तस्मादुभाभ्यां सुखदु:खभ्यां धर्माधर्माभ्यां वाविरतिरेव मोक्ष इति मीमांसका:। एतच्चोक्तं प्रपञ्चसम्बन्धविलयो मोक्ष“[१३] । एवं चैते नैयायिकानामिवात्मन: सुखदु:खराहित्येन स्वतन्त्रावस्थितिर्मोक्ष इत्यामनन्ति। परन्त्वेतत् सम्प्रदायान्तर्गता: केचन यथा भट्टसर्वज्ञादयो निरतिशयसुखाभिव्यक्तिरेव मोक्ष इति कथयन्ति। एवं चैतेमीमांसकादु:खनिवृत्तिपुर:सरमात्मन: सातिशयसुखस्वरूपेऽवस्थानं मुक्तिरिति प्रवदन्ति।

तदेवं पूर्वोक्तेपु सम्प्रदायेषु केचनदु:खनिवृत्तिरेव मोक्ष:, दु:खनिवृत्तिद्वारेण नित्यनिरतिशयसुखलाभो मोक्ष इत्यपि केचन प्रस्तुवन्ति। अतो मोक्षार्थं किञ्चिद्द्वारमपेक्षते, यद् येनद्वारेणैव मुक्तिरासाद्येत इति कृत्वा नैवतत् साक्षादधिगन्तुं शक्यते - इत्येतत् स्फुटतया प्रतीयते नैयायिकानां प्रमाणादिपदार्थविचारप्रकरणे। परन्तु भारतीयदर्शनशास्त्रे वेदान्तिनस्तावद् अपरोक्षानुभूतिरेव मोक्ष इति उद्घोषयन्ति। आत्मन: स्वरूपानुभवातिरिक्तं मोक्षवस्तुनान्यत्किञ्चिदस्तीति कृत्वा यत्न: नापेक्ष्यते इत्यद्वैतिन:। परन्तु आवरणविक्षेपशक्त्यात्मिकाया अविद्याया: क्षयार्थमेव प्रयत्न: करणीय:। तस्मादात्मन: स्वरूपसत्ताया उपलब्धिरेव मुक्तिरितिनिष्कर्ष:। एतेन च ज्ञायते यद् अन्यसम्प्रदायवन्नैतेषां मुक्तिर्नाम किञ्चन वत्स्वन्तरमस्ति, यत्तु लभ्यं साध्यं वा स्यादिति। अत्रापि अद्वैतवादिनं विहायान्ये विशिष्टाद्वैत - शुद्धाद्वैत - द्वैताद्वैत - द्वैतमार्गानुसारिणश्च विप्रतिपद्यन्ते। एतेषां मते मुक्तिस्तु परमपुरुषार्थत्वात् सर्वेषां काम्या भवत्येव। तदपि मोक्षसुखं भगवतोऽनुकम्पया अधिगन्तुं शक्यते। अतो भक्तिरेव तत्रासाधारणं कारणं भवति । अत एवोक्तं मध्वाचार्येण - मुक्तिर्नैजसुखानुभूतिरमला भक्तिश्च तत्साधनम्।

अतो निष्कामभक्तिरेव मोक्षस्य द्वारमिति तदर्थमेव सर्वान्त:करणै: यत्न: करणीय:। एतच्चोक्तं परमभक्तेन वैष्णवाचार्येण श्रीचैतन्यमहाप्रभुणा -

**न धनं न जनं न सुन्दरीं कवितां वा जगदीश क मये।**
**मम जन्मनि जन्मनीश्वरे भवताद्भक्तिरहैतुकी त्वयि।।**[१४]

**सन्दर्भग्रन्थसूची**

| | | |
|---|---|---|
| भारतीयदर्शनम् | सर्वदर्शनसंग्रह: | सांख्यकारिका |
| सांख्यतत्त्वकौमुदी | पातञ्जलयोगदर्शनम् | न्यायदर्शनम् |


**पदटीका-**

1. सां.का. १
2. सां.त.कौ.पृ. ११
3. पा.यो.द. २/१६
4. तस्य हेतुरविद्या - पा.यो.द. -२/२४)
5. सर्वेषां मोक्षवादिनामपवर्गदशायामात्यन्तिकदु:खनिवृत्तिरस्तीत्य-स्यार्थस्य सर्वतन्त्रसिद्धान्तसिद्धतया घण्टापथत्वात् । (स.द.सं.पृ - ४१२)
6. शि.म.स्तो.श्लो. - ७
7. न्या.द. – १/१/२२
8. न्या.द.अ.१/१/२
9. नै.च - १७/७४
10. पा.यो.द - १/३
11. सां.का.-१
12. स.द.सं.पृ. ४१७
13. भा.द -पृ. ३३२
14. चै.च

शोधच्छात्र:
सांख्ययोगविभाग:, श्रीसदाशिवपरिसर:,पुरी



# आधुनिककाले धर्मस्य परिपालनपरम्परा

सोनालिसाहु:

धर्मार्थकाममोक्षेषु चतुर्षु पुरुषार्थेषु ,सामान्येन व्यपदेशा भवन्ति इति न्यायेन धर्मो भवति आद्य: पुरुषार्थ: मुख्यपुरुषार्थश्च । तस्यैव धर्मस्य पालनाय वर्जनाय आचरणाय लाभाय आस्तिका: जना: नितरां सुतरां प्रपरां च प्रयततेतराम् । धर्मस्य लक्षणं यथा-

**वेद: स्मृति: सदाचार: स्वस्य च प्रियमात्मन: ।**
**एतच्चतुर्विधं प्राहु: साक्षाद्धर्मस्य लक्षणम् ।।**[१]
**धृति: क्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रह: ।**
**धीर्विद्या सत्यमक्रोधो दशकं धर्मलक्षणम् ।।**[२]
**देशे काल उपायेन द्रव्यं श्रद्धासमन्वितम्।**
**पात्रे प्रदीयते यत्तत्सकलं धर्मलक्षणम् ।।**[३]
**धारणाद्धर्मइत्याहु: धर्मो धारयते प्रजा: ।**
**यत्स्याद्धारणसंयुक्त: सधर्म इति निश्चय: ।।**[४]

धार्मिकभावनया जीवनयापनं परलौकिकं फलं प्रददाति इति आस्तिकानां जनानां विश्वास: । तेनैव जीवनेन धर्मोपायेन अर्थलाभ: धार्मिकोपायेन कामसिद्धिं चिन्तयति । सर्वान्ते मोक्षलाभाय धर्म: एव सहायको भवति नान्य:। यमेव परिस्थिति: सर्वकालिका वर्त्तते । उग्रे आधुनिकवादे कलिकलङ्किते जगति धर्मस्य चर्चा, धर्मस्य शिक्षा, धर्मस्य धारणम्, उपहासाय संज्ञातम् । तथापि केचन एवं भूता: धर्मधारका:, सात्त्विका:, शास्त्रज्ञा:, वेदविद: विद्यन्ते येषां तपस्यया, दानेन, यज्ञेन, पुण्येन, सत्यवचनशीलेन च जगदिदं तिष्ठति विभर्ति च ।

एकोनोविंशशताब्द्या: यदा नास्तिकजनानां बाहुल्यं प्रकटितं प्राणिहिंसनं, परद्रव्यलुण्ठनं, परस्त्रीगमनादिकं प्रावल्येन मनीषिभि: धर्मधारकै: अवलोकितं तदा एवं भूता: दयानन्दसरस्वती, रामकृष्णपरमहंस:, ईश्वरचन्द्रविद्यासागरप्रभृतय: समाजस्य तथा धर्मस्य सुरक्षानिमित्तं स्वानि स्वानि मतानि पदक्षेपाश्च गृहीतवन्त: । तेषाम् उन्नतचिन्तनेन उन्नतलेखनेन समाजे हिंसाद्वेष:, लुण्ठनं, परस्त्री-अपरहरणादिव्यापाराणां किञ्चित् लोप: संजात: । समाजस्य संरक्षणनिमित्तं तदनन्तरकाले अनेके जननायका: राजाराममोहनराय:, मदनमोहनमालवीय:, के.एन्. मुनिस्, महात्मागान्धि:, पण्डितगोपवन्धुदास:, स्वामिविवेकान्दप्रभृतय: समाजसंरक्षणनिमित्तं दु:खदारिद्र लुण्ठनादिविषये लोकानां जनमानषेषु संस्कारान् प्रतिपादितवन्त: । तदानींन्तनकाले नारीशिक्षाया: अग्रगतिनिमित्तं सुमहानप्रयास: विहित: । यदि समाज: सुशिक्षितो भवति, तेन कुप्रथाया:,कुसंस्कारस्य, दारिद्रस्य,दु:खस्य, दासत्वस्य ध्वंसो भविष्यति इति विचारा: समागता: । किं बहुना स एव प्रयास: अद्यापि सर्वान् प्रेरयति। अद्यापि युगे जना: अन्नाभावेन वुभुक्षया जीवनं विसर्जयन्ति । अर्थाभावेन उच्चशिक्षां नैवलभन्ते । स्वकीयं भवनं, शुद्धजलं, गमनागमनमार्गम् अद्यापि सुदुस्तरं वर्त्तते एवमेव कष्टायां स्थितौ धर्म: कुत्रचित् लुक्कायित: प्रतिभाति । येषां जनानां परिवार: दुर्वल: तत्रशिक्षा दूरङ्गता दृश्यते । ग्रामाञ्चलेषु दुर्गमेषु कदाचित् विद्यालय: वर्त्तते तत्र शिक्षका: न सन्ति, शिक्षका: न गच्छन्ति, कदाचित् विद्यालयस्य भवनं न प्राप्यते । अन्नाभाव:, वस्त्राभाव:, धनाभाव: सर्वोपरि जराजिर्णतारोगेषु पीड्यमानाावस्था अतिशयं व्यथयति । तस्मिन् स्थले धर्मस्य शास्त्राणां च तथा दुर्लभा प्रतिभाति ।यत्र जीवनं दुर्विसह तत्र देवार्चनं यागादि अनुष्ठानं, अध्ययनं, अध्यापनं, धर्मार्जनं तु कियद् दूरे वर्त्तते । तत् प्रतिपादयितुं न शक्यते ।

यद्यपि वैदिककालादारभ्य अद्य यावत् दृश्यमानेषु सर्वत्र शास्त्रनिचयेषु धर्मपालनाय धर्मरक्षणाय धर्मानुष्ठानाय चोदना: लभ्यन्ते तथापि तत्र प्रवृत्तेरभावात् प्रारब्धसंस्काराणां राहित्य कारणात् सङ्गदोषाद् वा अप्रवृत्ता: जना: प्रमत्ता:

दिग्भ्रष्टा: भूत्वा समाजेषु लाङ्गुलविषाणारहिता: मानवजाते: किंशुका: राराज्यमाना भवन्ति। यत्नेपि कृते यदिवा सिद्ध्यति तत्र दोष तस्यैव भवति। प्रयत्नशीलस्य जनस्यन तु समाजस्य शास्त्रस्य अध्यापकस्य पित्रोर्वा । आधुनिकसमाजे जना: धर्ममतिक्रम्य अर्थोपरि निर्भरशीला: भवन्ति । तन्मतानुसारं सर्वमपि प्राप्तव्यम् वस्तु अर्थद्वारेण संभवति। अर्थोहि एक एव पुरुषार्थ: तेन सर्वं सिद्ध्यति । जनानां अयं विश्वास: । आधुनिके वस्तुवादेऽस्मिन् जगति विलासमय जीवनाय अर्थ एव सहायको भवति । तस्मात् यान- वाहन- भव्यावास अलङ्कारवस्त्रादीनि सर्वाणि वस्तुनि अर्थोपरि विराजितानि सन्ति । अत: आधुनिकयुगे अर्थोपार्जनाय जना: किं कर्म किं वा अकर्मेति अविचिन्त्य येन केनपि उपायेन अर्थोपार्जनं कृत्वा स्वाभिलाषान् पूरयितुं प्रयत्नमाना: दृश्यन्ते । तत्र चौर्यं भवतु साहसं वा भवतु असत्यं भवतु पापं वा भवतु विचार: न जायते । एतेन कर्मणा धर्महानि: भवति इति इत्यपि शङ्का नैव जागर्ति । यथा मोहग्रस्त: जन: तद्वद् एव वस्तुकांक्षया जर्जरित: मनुष्य: न धर्मं पश्यति न वा पापं पश्यति केवलं उपभोगाय मार्गमनुसरति ।

एतादृशीं परिस्थितिं दृष्ट्वा ये केचन समाजसंस्कारका: अग्रपंक्तौ समागच्छन्ति तत्र माध्यममद्वारेणैव जनान् स्वपक्षम् आनयितु चेष्टन्ते । तत्र कदाचित् योगद्वारा भवतु कदाचित् प्रवचनद्वारा भवतु यथा- योगशास्त्रविद: रामदेवमहोदय: अथवा स्वर्गियजीवनपद्धति आविष्कर्तु: श्री श्री रविशङ्करमहोदयानां चतुर्धामस्तु विद्यमानानां जगद्गुरूणां शङ्कराचार्यप्रभृतीनां प्रभावेण भवतु अथवा रामकृष्णमिशनद्वारैव भवतु अथवा पण्डिचेरीस्थितस्य श्रीमाअरविन्दानुष्ठानेन भवतु अथवा शिखसंप्रदायानां गुरुद्वारमाध्यमेन, मुसलिम्जनानां दर्घामाध्यमेन, जैनजनानां उपासनामाध्यमेन मानवताधर्मरक्षणाय प्रयासा: दृश्यन्ते । तथापि मनुष्या: मोहगर्ते निपातिता: भूत्वा मुख्यश्रोतं परित्यज्य धर्ममार्गं प्रति नायान्ति इति कृत्वा मनसि मे महान् सन्ताप: एतत् तु युगधर्म: इति युगस्यास्य कले: प्रभाव इति प्रतिपादयितुं शक्यते । मनुना उक्तं यत्-

**धर्मो एव हतो हन्ति धर्मो रक्षति रक्षित: ।**
**तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ।।**[५]

एवमेव विधिना आधुनिककाले धर्मप्रचारकाणां धर्मसंरक्षकानां माध्यमेन कथंचित् धर्मा: सुरक्षितो वर्त्तते । यतो हि अयं धर्म: सनातनरूप: । तस्य क्षय: न कदाचिदपि संभवेत् । विशेषत: समाजे ब्राह्मणा: पौरहित्यकर्ममाध्यमेन यागयज्ञादि अनुष्ठानं विधाय जनानां मनसि धर्मभावं सृजन्ति । तेषां ब्राह्मणानां साक्षात् संबन्ध: नागरिकेषु विद्यते। तान् प्रबोधयित्वा यज्ञयागादि कर्मसु प्रवृत्तिं जनयित्वा कर्मकाण्डं कुर्वन्ति स च धर्मस्य अंशविशेष: एव ।

कर्मकाण्डसंवन्धे विवाहसंस्कार: एव भवतु उपनयनसंस्कार: वा भवतु शिवार्चनं वा दुर्गादेव्या: नवरात्रं भारतीयसमाजे धर्मभावं यथा प्रदर्शयति तथा जना: अपि व्रतोपवासादिकं पालयित्वा फलं लभन्ते । महाराष्ट्रे गणेशोत्सवस्य एतादृशप्रभाव: तत्र सनातनहिन्दुधर्मस्य अक्षुर्णातां प्रदर्शयति । वङ्गभूभागे भगवत्या: कालिकाया: तथा दुर्गाया: पूजनं ऐक्यभावं प्रदर्शयति । गुजराटप्रदेशे नवरात्रकाले दाण्डीयाप्रदर्शनद्वारा देव्या: आराधनं धर्मभावं प्रकटयति तथैव दक्षिणे ब्रह्मोत्सव: रामेश्वरधाम्नि तिरुपतिमन्दिरे केरलप्रान्ते पद्मनाभमन्दिरे महान्तोत्सवा: आवर्षं परिपालिता भवन्ति ।

एतेन विज्ञातो भवति आधुनिककाले अपि धर्मस्य यथा संरक्षणं, यथा सुरक्षा, यथा परिपालनं समाजेषु अवलोक्यते आस्तिकानां मनोबलं सवर्द्धितं भवति । जना: धर्मभावनया चतुर्धामतीर्थाटनं द्वादशज्योतिर्लिङ्गानां दर्शनपूर्वकमभिषेक:, शक्तिपीठानां पूजार्चनमपि श्रद्धया भिया च परिपालयन्ति ।

**पादटिप्पणी-**

१-म.स्मृ- २/१२
२-म.स्मृ- ६/१२
३-या.स्मृ- १/६ पृ-८
४- म.भा.कर्ण.प- ४९/५०
५-म.स्मृ- ८/१५

शोधच्छात्रा, , धर्मशास्त्रविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:,पुरी ।



# शास्त्रान्तरेषु शान्तिशिक्षा

श्रीकृष्णदास:

**सारांश:**

विश्वस्य प्रथमग्रन्थ: वर्तते वेद:। वेदेषु शान्तिशिक्षा अनौपचारिकरूपेण आसीत्, न तु वर्तमानवत् औपचारिकी। वेदेषु विश्वबन्धुत्वभावना, एकता, समानाधिकारादिविषयाणां विश्लेषणेन शान्तिशिक्षाया: ज्ञानं वर्धते। सर्वेषु शान्तिस्थापनाय-यजुर्वेदे शान्तिमन्त्रा: वर्तन्ते। श्रीकृष्ण: संयमितात्मा- स्थिरबुद्धि-सुकर्मेत्यादिषु विषयेषु अर्जुनाय उपदेशान् ददौ। इन्द्रियनिग्रहेण प्रशान्तचित्तस्य अधिकारी भवितुमर्हीति इति भगवता उक्तम्। तेनाऽपि उक्तं यत् - सम्पूर्णभक्तिभावनाभि: एकाग्र: भूत्वा ईश्वरस्य शरणं गच्छ। भगवत: प्रसादादेव शान्ति: लभते। योगशास्त्रेऽपि शान्त्याधारितसूत्राणि वर्तन्ते। योगेन चित्तवृत्तीनां निरोध: भवति, येन मानसिकशान्ति: जायते। जैनदर्शनमपि शान्त्याधारितं दर्शनं वर्तते। जैनदर्शनस्य मूलसिद्धान्त: वर्तते अहिंसा। अस्य दर्शनस्य तीर्थङ्करा: जगति शान्तिस्थापनाय उपदेशान् ददु:। दर्शनस्याऽस्य द्वितीयमूलसिद्धान्त: वर्तते कर्म। कर्म इत्युक्ते सु-कर्मन तु कु-कर्म, यत् मनसि शान्तिस्थापनाय करणीयम्। मानवेषु शान्तिस्थापनाय गौतमबुद्धप्रणिते बौद्धदर्शनेऽपि बहव: मार्गा: चर्चिता:। तस्य मतानुसारं मानवा: तदा शान्तिमयजीवनं यापयितुं शक्नुवन्ति यदा ते क्रोधादिनकारात्मकभावना: त्यक्तुं समर्था: भवन्ति। भगवान् बुद्ध: दु:खदूरीकरणाय तथा शान्तिस्थापनाय मानवेभ्य: आर्यसत्यचतुष्टयम्, अष्टाङ्गमार्ग:, दशपरमिता:, पञ्चशीलादिशिक्षा: प्रतिपादितवान्।

**प्रस्तावना**

सम्प्रति विश्वस्य बहूनि क्षेत्राणि संघर्षमयानि वर्तन्ते। इमे संघर्षा: प्रान्तीय- राष्ट्रिय - अन्ताराष्ट्रिय —जाति-धर्माद्याधारेण एव जायन्ते। एतासां समस्यानां मूलकारणं वर्तते मानसिकास्वास्थ्यमिति, यत् मानसिकशान्ते: अभावेनैव जायते। अत: संघर्षं युद्धादीन् दुरीकर्तुं मानसिकशान्ति: आवश्यकी। मानसिकशान्ति: आध्यात्मिकचिन्ताया: विकासेन तथा अशान्तिमयजीवनस्य फलज्ञानेन स्थापयितुं शक्यते। सामाजिकशान्ति: सार्वजनिकीमानसिकस्थति: न तु वैयक्तिकी। अत: सर्वेषां मनसि शान्ति: स्यात्। एतदर्थं शिक्षकप्रशिक्षणपाठ्यक्रमे शान्तिशिक्षा नाम्ना नवीनविषय: संयोजित:।

यद्यपि सम्प्रति शान्तिशिक्षा आधुनिकपाठ्यविषयरूपेण प्रशिक्षणपाठ्यक्रमे नियोजिता तथापि शान्तिशिक्षा अनौपचारिकतया अस्माकंशास्त्रेषु प्राचीनकालादेव वर्तते। भारतीयशास्त्रेषु शान्तिविषये बहव: चर्चा: सन्ति। मानवेषु शान्तिमूल्यविकासाय वेदशास्त्रेषु, गीतायां ,बौद्धदर्शने, योगशास्त्रे जैनदर्शने च बहूपदेशा: वर्तन्ते।

**किं नाम शान्ति:**

शान्ति: नाम केवलं युद्धाभाव: नास्ति, इयं काचित् मानसिकावस्था, यस्यां व्यक्ति: स्वस्थ: सुखी चिन्तारहित: सन् जीवनं यापयति। अत: कस्यचित् मनुष्यस्य सामाजिकजीवनं विविधचिन्ता-तन्यता-संघर्षरहितञ्चैत्तस्य शान्ति: अस्तीति वक्तुं शक्यते। उक्तञ्च श्रीमद्भगवद्गीतायाम्-

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**

**न चाभावयत: शान्तिरशान्तस्य कुत: सुखम्।।गीता, २-६६**

यस्य मानवस्य मनेन्द्रियाणि संयमितानि सन्ति, तादृशस्य मानवस्य बुद्धि:निश्चयात्मिका न भवति। स:सुख-धन-सम्पत्त्यादिभौतिकभोगानेव इच्छति। एवं तस्य अन्त:करणं विविधाभि: कामनाभि: परिपूर्णं भवति। अत: तस्य बुद्धि: निश्चयात्मिका नसिद्ध्यति। अनिश्चयात्मिका बुद्धि: व्यवसायात्मिका न भवति। व्यवसायात्मिकबुद्धे: अभावेन तस्य मनसि कर्तव्यपरायणताया: भावना न जायते। कर्तव्यपरायणताया: अभावे स: शान्तिं न प्राप्नोति। शान्तिरहितमानव: कदापिसुखं न प्राप्नोतीति।

**शान्तिशिक्षा**

शान्तिशिक्षा एका प्रक्रिया यया मानवेषु ज्ञानस्य, कौशलानां व्यवहारस्य च विकास: जायते। शान्तिशिक्षयामनसि शान्तिं स्थापयितुं शक्यते, येन समाजे, देशे तथा समग्रविश्वे शान्ति: विराजते। शान्तिशिक्षा स्वयं राष्ट्रशान्ते: एका अवधारणा। शान्तिशिक्षाया: प्रकृति:, मूल्यं तथा अवधारणा सर्वम् अस्यां सम्मिलितं वर्तते। येन विभिन्नदेशस्य शान्तिशिक्षाया: स्वरूपं पृथक् पृथक् वर्तते। परन्तु सर्वत्र उद्देश्यम् एकमेव वर्तते–छात्रेषु शान्तिविषयकमूल्यसंवर्धनमिति।

शान्तिशिक्षा केवलम् एका औपचारिकीशिक्षा न, अपितु एकं सुदृढसाधनं यस्य फलस्वरूपेण युववर्गं शान्तिं प्रति जागरयितुं शक्यते। संयुक्तराष्ट्रस्य अमेरिकाया:UNESCO इत्यस्य संविधानस्य २६ तमधारायां स्पष्टत: उल्लिखितं वर्तते यत् -शिक्षाया: उद्देश्यं मानवव्यक्तित्वस्य सर्वाङ्गीणविकास: तथा समग्रराष्ट्र - जाति - धर्म -संस्थासु प्रेम - सहिष्णुता - परस्परमैत्री भावनानामुत्पादनम्। अत: संयुक्तराष्ट्रोऽपि शान्तिशिक्षां समर्थयति। संयुक्तराष्ट्रेण एवम् उक्तं यत् -अनिवार्यरूपेण छात्रेभ्य: शान्तिविषयं पाठयेत्, यस्य फलस्वरूपेण प्रत्येकं छात्रेण शान्ते: महत्त्वं तथा अशान्ते: युद्धस्य च दुष्परिणाम: अवगन्तुं शक्यते।

**वेदेषु शान्तिशिक्षा**

इष्टप्राप्त्यनिष्टपरिहारयो: अलौकिकं साधनं यो वेदयति स: वेद:। विद्यन्ते धर्मादय: पुरुषार्था यैस्ते वेदा: इति अभिहित: । धर्मार्थकाममोक्षादिविषया: वेदे सन्ति। एते मानवजीवने शान्तिं प्रदातुं सहायं कुर्वन्ति। वेद: सदा सर्वदा धर्ममूल:। धर्ममाध्यमेन शान्ति: विराजते । विविधै: यज्ञमाध्यमै: आहुतिप्रदानेन अपि शान्ति: प्रतिष्ठिता भवति । लोककल्याणार्थं ऋक्संहिताया: अग्निसूक्ते वर्णितमस्ति–

**यदङ्ग दाशुषेत्वमग्ने यद्भद्रं करिष्यसि । तवेत्तत्सत्यमङ्गिर:। ऋक् -१.१.६।**

उक्तञ्च बृहदारण्यकोपनिषदि-

**सर्वे भवन्तु सुखिन: सर्वेसन्तु निरामया:।**
**सर्वे भद्राणि पश्यन्तु माकश्चिद्दु: खभाग् भवेत्।। बृ. उ.-१.४.१४**

वेदेषु शान्तिशिक्षा अनौपचारिकी आसीत् न तु वर्तमान इव औपचारिकी।अर्थात् शान्तिशिक्षानिमित्तं पृथक् पाठ्यविषय: नासीत् परन्तु मानवीयमूल्यरूपेण वेदेषु सर्वत्र शान्तिशिक्षा विद्यते। यथा-

**१.एकताभावना**-वेदेषु एकताभावनया शान्तिशिक्षाया: व्यवस्था आसीत् । यथा- मनुष्या: समाना: एकताभावनया बद्धा: भवन्ति चेत् हिंसाया: तथा अशान्त्या: उत्पत्ति: नभवति। एतस्य प्रमाणं ऋग्वेदे वर्तते, यत् -

**संगच्छध्वं संवदध्वं संवो मनांसि जानताम् ।**
**देवाभागं यथा पूर्वे संजानाना उपासते ।। (ऋक् १०.१९१.२)**

**२. विश्वबन्धुत्वभावना**-वैदिकीसंस्कृति: लोकेषु विश्वबन्धुत्वभावनां प्रसारयति, सार्वभौमिकीं सार्वलौकिकीं चोन्नतिं प्रदर्शयति। यदि लोकेषु विश्वबन्धुत्वभावना जागरयति तर्हि शान्ति: स्वत: एव आगच्छति। अर्थात् विश्वबन्धुत्वभावनया समत्वभावनया वा वेदे शान्तिस्थापनस्य उपदेश: प्रदत्त:-

**मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे ।**
**मित्रस्य चक्षुषा समीक्षामहे ।। (यजु.३६.१८)**

**३. समानाधिकार**:-जगति सर्वेषां कृते समानाधिकारा: भवेयु:। समानाधिकारा: न सन्ति चेत् अशान्ति: जायते। तत्र न कश्चन ज्येष्ठ: न वा कनिष्ठ:, सर्वेऽप्यत्र भ्रातर:। समानता शान्ते: उत्पत्तौ सहायतां करोति। वर्तमानसमये भारतदे शे धर्म-शिक्षा-संस्कृत्यादिषु सर्वस्तरेषु समानाधिकारा: भवेयु:। यथा-

**अज्येष्ठासो अकनिष्ठास एते ।**
**सम्भ्रातसोवावृध: सौभगाय ।।(ऋक् ५/६०/५)**

**४. सत्यभाषणम्-** यदि मानवा: सर्वदा सत्यभाषणं कुर्वन्ति तर्हि कोऽपि कस्मैचिदपि न क्रुध्यति, श्रद्धाशील: भवति येन शान्ति: निरन्तरं भवेत्। तदर्थं शतपथब्राह्मणे उक्तम् - **इदमहमनृतात् सत्यमुपैमि** इति। अर्थात् मिथ्यात: सत्यं प्राप्नोमि इति।

**५. मनसि वाण्यां कर्मणि च मधुरता-**मनसि, वाण्यां, कर्मणि च मधुरता भवेत्। मनसि सच्चिन्तनं वाण्यां सततं मधुरवचनं भाषणञ्च भवेत् तथा साधूक्तकर्माणि कर्तव्यानि। यद्येवमाचरति तर्हि जीवने अशान्त्या: उत्पत्ति: न भविष्यति। विशेषत:मन: यदि पवित्रं स्यात् तर्हि अहिंसाया: उपक्रम: न भवति । उक्तञ्च अथर्ववेदे -

**जिह्वाया अग्रे मधु मे जिह्वामूले मधूलकम्।**
**मम देह क्रतवसोमम चित्तमुपायसि ।। अथर्व-१.३४.२**

यदि मनुष्यो दृढेच्छाशक्त्या एकवारं दृढसंकल्पं करोति यत् मया कदापि कटुवचनं न वदनीयं तर्हि मनुष्येषु कदापि हिंसाया: उद्रेक: न भविष्यति।

**श्रीमद्भगवद्गीतायां शान्ति:**

श्रीमद्भगवद्गीतायां शान्ति: इति विषये लघु चर्चा वर्तते। भगवान् श्रीकृष्ण: अर्जुनं युद्धाय प्रेरयितुं बहुविधोपदेशान् दत्तवान्। तत्र शान्ति: कथं प्राप्तव्यमिति उपायानपि वदति। तत्रोक्तम्-

**नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना।**
**न चाभावयत: शान्तिरशान्तस्य कुत: सुखम्।। (गीता २.६६)**

अर्थात् यस्य इन्द्रियाणि वशे सन्ति, यस्य आत्मा संयमिता भवति तस्य चित्तं प्रसन्नं भवति। एतादृशस्य प्रसन्नचित्तपुरुषस्य बुद्धि: शीघ्रमेव एकत्रावतिष्ठति। यस्य बुद्धि: अयुक्ता नास्ति, पुनश्च यस्य इच्छाशक्ति: दृढा अस्ति तस्मिन् शान्तिरस्ति, किञ्च यस्य समीपे शान्ति: वर्तते तत्र सुखमप्यस्ति।

सुखप्राप्तये शान्तिरावश्यकी, शान्त्यर्थं निश्चयात्मिका बुद्धि: स्यात् । निश्चयात्मिका बुद्धि: प्रसन्नचित्तेन भवति। प्रसन्नचित्तं दशेन्द्रियाणां नियन्त्रणेन भवति, अर्थात् इन्द्रियाणां निग्रहेणैव सुखप्राप्ति: भवति इत्यभिप्राय:। अग्रे स्थितप्रज्ञ: एव शान्तिमाप्नोति इति विषये कथितमस्ति -

**आपूर्यमाणमचलप्रतिष्ठं समुद्रमाप: प्रविशन्ति यद्वत्।**
**तद्वत्कामा यं प्रविशन्ति सर्वे स शान्तिमाप्नोति न कामकामी।। (गीता २.७०)**

समूहे नानाविधजलं तत्रापि महानदी । वृष्टितडागादिजलं समुद्रे प्रतिदिनं पूर्यते तथापि समुद्रम् अचलं प्रतिष्ठति। तथैव स्थितप्रज्ञ: समुद्रवत् अस्ति। तस्य पुरत: नानाविधा: इच्छा:, इन्द्रियभोगजन्यसुखादय: सन्ति चेदपि इन्द्रियाणि मनश्च स्वीयाधीने वर्तन्ते। अत: स: स्थितप्रज्ञ:शान्तिमाप्नोति।

य: मनुष्य: सर्वविधकामान् वर्जयित्वा ममताहंकाररहित: भूत्वा विचरति स एव शान्तिमाप्नोति। अर्थात् मनस: निग्रहणं तथा कामक्रोधादिशत्रुभ्य: वियुक्त: भवति तदानीमेव शान्तिमाप्नोति। यथोक्तम् –

**विहाय कामान्य: सर्वान्पुमांश्चरति नि:स्पृह:।**
**निर्ममोनिरहंकार: स शान्तिमधिगच्छति।। (गीता २.७१)**

**योगे शान्तिशिक्षा**

महर्षिपतञ्जलि: योगदर्शनस्य प्रणेता। मनुष्य: कथं स्वचित्तस्य नियन्त्रणं कृत्वा अन्तिमं लक्ष्यम् अर्थात् मोक्षं प्राप्नोति इति प्रतिपाद्यविषय:। तदर्थम् अष्टाङ्गयोगमार्ग: प्रतिपादित:। अनेन अष्टाङ्गयोगेन शारीरिक-मानसिक-आत्मिकशान्तिर्जायते। उक्तञ्च पतञ्जलिना -

**योगश्चित्तवृत्तिनिरोध:।:योगसूत्रम् (१/२)।**

**जैनदर्शने शान्तिशिक्षा**

भारतीयप्राचीनदर्शनमेकं वर्तते जैनदर्शनम्। अत्र तीर्थाङ्कराणां शान्तिविषये बहव उपदेशाः समुपलभ्यन्ते। अस्य दर्शनस्य मूलोद्देश्यं वर्तते शान्तिमयजीवनयापनेन निर्वाणप्राप्तिरिति। अस्य दर्शनानुसारम् अहिंसा-सत्यं-तपश्च धर्मस्य मूलम्।

मनुष्याणां सुखमयजीवनाय तथा दुःखदूरीकरणाय महावीरः शान्तिधारां प्रत्यपादयत्। विघ्ननाशाय मनुष्यजीवने आनन्द-धन-यशादिवर्द्धयितुं तथा सम्पूर्ण विश्वेशान्तिं स्थापयितुं शान्तिधारायाः अनुपालनं क्रियते स्म अस्मिन् दर्शने। अस्य दर्शनस्य मूलमन्त्रं वर्तते अहिंसा, यया मनसि शान्तिः स्थापयितुं शक्यते। कैवल्यप्राप्तये त्रिरत्नस्य अनुपालनं करणीयम्। तानि त्रिरत्नानि १. सम्यक्दर्शनम्, २. सम्यक्ज्ञानम्, ३. सम्यक्चरित्रम्।

**बौद्धदर्शने शान्तिशिक्षा**

भगवान् बुद्धः जगतः श्रेष्ठनीतिसम्मतधर्मस्य प्रवर्तकः आसीत्। तस्य प्रधानलक्ष्यम् आसीत् मनुष्यस्य दुःखानां निराकरणम्। सः शान्तिनिमित्तं सर्वदा उपदेशान् दत्तवान्। भगवान् बुद्धः तपस्यया आर्यसत्यस्य ज्ञानम् अर्जितवान्। चत्वारि आर्यसत्यानि वर्तन्ते - १.दुःखम् २. दुःखसमुदायः ३. दुःखनिरोधः ४. दुःखनिरोधमार्गश्चेति। अस्य दुःखस्य दूरीकरणाय बुद्धदेवेन एकः मार्गः दर्शितः, यत् अष्टाङ्गमार्गः नाम्ना परिचितः। ते तथा– १. सम्यग्दृष्टिः २. सम्यक्संकल्पः ३. सम्यक्वाक् ४. सम्यक्कर्मान्तः ५. सम्यक्आजीवः ६. सम्यक्व्यायामः ७. सम्यक्स्मृतिः ८. सम्यक्समाधिः। एतस्य अष्टाङ्गमार्गस्य ज्ञानार्जनेन कैवल्यं प्राप्यते। बौद्धदर्शने भगवताबुद्धेन यानि उपदेशानि मानवेभ्यः प्रोक्तानि तानि शान्तिनिमित्तमेव। बौद्धधर्मावलम्बिनाम् अनाडम्बरपूर्णजीवनयापनं मनसि शान्तिस्थापनस्य मूलमन्त्रमिति।

**निष्कर्षः**

सम्प्रति यद्यपि शान्तिशिक्षानाम्ना कश्चन आधुनिकविषयः शिक्षाशास्त्रपाठ्यक्रमे वर्तते, परन्तु अस्य विषयस्य अध्ययनं प्राचीनकालात् अस्माकं शास्त्रेषु वर्तते। इदानीम् औपचारिकरूपेण अयं विषयः वर्तते, परन्तुतदानीम् अनौपचारिकरूपेण आसीत्। शान्तिः एका मानसिकानुभूतिः। केवलं युद्धाभावः शान्तिः इति न। शान्तिः एका एतादृशी मानसिकी स्थितिः यत्र भयस्य, आतङ्कस्य च अभावः वर्तते।

मानसिकशान्तिः आध्यात्मिकविषयेण सह अत्यन्तं सम्बन्धिता। आध्यात्मिकचिन्तां विना मनसि शान्तिं स्थापयितुं नैव शक्यते। यद्यपि वर्तमाने समग्रविश्वे शान्तिं स्थापयितुम् आधुनिकपद्धतीनाम् अवलम्बनं क्रियते, तथापि आध्यात्मिकचिन्तां विना, आध्यात्मिकबुद्धेः विकासं विना मनः कदापि शान्तिमयं भवितुं नार्हति। शान्तिमयमनसः अभावेन समग्रविश्वःकदापि शान्तिमयः भवितुं नार्हति। अतः मनसि शान्तिं स्थापयितुं प्राच्यदर्शनानां, शास्त्राणाञ्च अध्ययनम् आवश्यकम्।

**सन्दर्भग्रन्थसूची**


- रवीन्द्रकुमारः, किरणलताडंगवाल-ाः, (२०१७-१८), मूल्य एवंशान्ति-शिक्षा, अग्रवालपब्लिकेशन्स, आगरा।
- मगरे ,सुनिता; धिंग्रा, राखीगिरीराज(२०११), शान्तिशिक्षा, टर्गेटपब्लिकेशन्सप्रा. लि, मुम्बई।
- शर्मा, राजकुमारी; दुबे , एस्के ., वरौलिया , अनीता(२०१५), शान्तिशिक्षाएवंसतत्विकास, राधाप्रकाशनमन्दिर(प्रा. लि), आगरा।
- वेद कथाङ्क(हिन्दी) गीताप्रेस, गोरखपुर, षष्ठंपुनर्मुद्रनम्
- वैदिकवाङ्मयस्यतिहासः, डा. जगदीशचन्द्रमिश्र, २००९ फार्माके . एल एम् प्राइवेट् लमिटेड्, कोलकाता
- मानवाधिकाररोपेतमूल्यशिक्षा, डा. लक्ष्मीधरपाण्डा, २०१२
- श्रीमद्भागवद्गीता, गीताप्रेस, गोरखपुर।
- योगदर्शनम्– गीताप्रेस, गोरखपुर।
- गुप्ता, एम. पीएवंअलकागुप्ता(२०१६), शिक्षाकेदार्शनिक परिप्रेक्ष्य, इलाहाबादः, सारदापुस्तकभवन।

- पाण्डेय, डॉ. , केपी (२०११) , शिक्षाकेदार्शनिकएवंसामाजिकआधार, वाराणसी: विश्वविद्यालय प्रकाशन।
- गुप्ता, एस. पीएवंअलकागुप्ता (२०१५), उदीयमान भारतीय समाज में शिक्षक , इलाहाबाद:, सारदापुस्तकभवन।
- Arulsamy, S.(2013), Peach and Value Education , Neelkamal publications Pvt. Ltd, Hydrabad.
- Charls, Kiruba and Selvi, Arul.(2013), Peach and Value Education, Neelkamal Publications Pvt. Ltd, Hydrabad.



शोधच्छात्र:, शिक्षाशास्त्रविभाग:

केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:,पुरी ।




# वैदिकनारीणां महत्त्वं वैशिष्ट्यं च

सुदीपवाजर्जी

वेद: भारतीयसंस्कृते: निधिरस्ति। अस्माकं संस्कृति: अस्मदीयचिन्तनम् अस्माकीनां भावना अस्मदीयं दर्शनं सर्वं किमपि वेदानुगतं वेदमूलमस्ति। तदुक्तं सा प्रथमा संस्कृति: विश्ववारा इति। अस्या एव संस्कृते: महत्त्वं वैशिष्ट्यं च परिशील्य पाश्चात्या: अपि जनता: चकितचकिता: सन्त: अस्यैव अनुकरणेन आत्मानं नियोजयन्तो वर्तन्ते। सत्यं तु इदं-

**एतद्देशप्रसूतस्य सकाशादग्रजन्मन:।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवा:।।[1]**

अस्य देशस्य संस्कृति: विश्वऽस्मिन् विश्वे सर्वप्रसिद्धिं लभते इत्यत्र नास्ति संशिति:। यथा अस्य देशस्य संस्कृति: सर्वोत्तमऽस्ति तथा चास्या: संस्कृते: संरक्षका: अपि। वैदिकऋषय: एव अस्या: संस्कृते: नियामका: अवर्तन्त। यथा अनुपप्लुतचेतस: ऋषयस्तथा वैदिक्यो नार्य्य: ऋषिका: अपि संस्कृते: अस्या: प्रतिमूर्तयो भवन्ति। प्रकरणेऽस्मिन् वैदिकनारीणां महत्त्वं वैशिष्ट्यं च स्थालीपुलाकन्यायेन नामग्राहं कामांचन परिचिति: दीयते। गार्गी, अदिति:, अपला, अनसूया, याज्ञवल्क्यी, मैत्रेयी, विश्ववारा, लोपा, धोपा इत्यादय:।

**गार्गी** सुविशालवैदिकसाहित्ये संहितासु, ब्राह्मणेषु, उपनिषत्सु च नैका: विदुष्य नार्यो नाम अस्माभि: परिदृश्यन्ते। तासु गार्गी एका प्रज्ञाशालिनी तपस्विनी विदुषी च नारी वैदिकसाहित्ये वर्तते। सा वचक्रूरस्य कन्या आसीत्। वैदिकयुगे यशस्विनीसु विदुषीषु अन्यतमा आसीत्।

बृहदारण्यके ग्रन्थे (३-६ एवं ३-८) ब्रह्मवादिनी गार्गीयाज्ञवल्क्ययो: प्रवर्तमाना: वादविवाद: लिपिवद्धं वर्तते। परन्तु तत्र कस्यापि जयपराजयविषये किमपि वर्णितं नैव दृश्यते। दार्शनिकविवादे तौ उभयौ समानपारदर्शिनौ आस्ताम्। **मैत्रेयी-**याज्ञवल्क्येन सह तस्य पत्न्या: मैत्रेय्या: या महती आध्यात्मिकप्रश्नोत्तरभावना बभूव, असौ उपनिषद् ग्रन्थे लिपिवद्धा वर्तते(२-४)। अस्य मुने: मैत्रेयी कात्यायनी च नामभ्यां द्वे स्त्रीयौ आस्ताम् । तयो: मैत्रेयी आध्यात्मिकभावापन्ना आसीत्। एतदर्थं सा ब्रह्मवादिनी इति उच्यते। अन्या च कात्यायनी गृहकर्मनिपुणासीत् । याज्ञवल्क्य: प्रवज्याकाम: पार्थिवद्रव्यादीनि विभज्य यदा द्वाभ्यां स्त्रीभ्यां दातुमिच्छति स्म, तदा मैत्रेयी तमपृच्छत् यत्-"यदि अयं संसार: धनेन परिपूर्णा भवेत्, तर्हि अहम् अमृतत्वं लाभं कर्त्तुं शक्नोमि वा?२ स: (याज्ञवल्क्य:) अवदत्-"वित्तेन अमृतत्वं नासाऽस्ति।[3] वचनमिदं श्रुत्वा मैत्रेयी अवदत्-"येनाऽहं नामृता रूपां किमहं तेन कुर्याम्।[4]

मैत्रेय्याः अनया अविस्मरणीयया उल्लेखयोग्यया च उक्त्या युगान्तरस्य साधवः सत्यसन्ध्यानिऋषयश्च चकितचकिता अभवन्।

विण्टरनिज् तथा अन्ये पाश्चात्यविद्वांसः प्राचीनभारतवर्षस्य अस्याः नार्य्या आध्यात्मिकानुसन्धित्सा प्राशंसुः।

**अपाला**-प्राचीनकाले नारी वेदाद्याविशारदा आवीत् इत्यस्य कश्चित् दृष्टान्तः भगवती अपालादेवी। इयं वेदमन्त्राणां रचयित्री आसीत्। एषा विद्याज्ञानवती अतितरप्रतिभाशालिनीविदुषी महर्षे अत्रेः सुपुत्री अस्ति। अत्रेः आश्रमे अध्यापनं प्राचलत् तदा स्वपितुः मुखान्निःसृताः सर्वाः श्रुतीः कण्ठस्थीकृतवती इति अस्याः महद् वैशिष्ट्यं वर्तते।

**विश्ववारा**-वैदिकसंस्कृतौ विश्ववारा काचित् विश्वप्रधाना महिला आसीत्। या ब्रह्मवादिनी तपश्चर्यायाः मेधाविनी आसीत्। ब्रह्ममानसः पुत्रस्य महर्षेः अत्रिदेवस्य इयं स्वनामधन्या कन्या वर्तते।

**अदितिः**-अदिति ऋग्वेदस्य मातृदेवी स्वरूपा अस्ति। यस्याः कृते ऋग्वेदे द्वाद्वश मन्त्राः पठिताः सन्ति। इयं सर्व्वे मित्रवरुणार्यमाणरूद्रादितियेन्द्रादीनां देवानामपि माता भवति। अस्याः अदितिरेव इन्द्रादित्यौ शक्तिं प्राप्तवन्तौ। अस्याः अपि मातृत्वम् अथर्ववेदे वाजसनेयीसंहितायाञ्च पुटंकितमस्ति। एवं प्रकारेण अस्याः स्वाभाविकं सत्त्वं शिशूनामुपरि इति ऋग्वैदिकऋषयः आहुः।

**शिक्षा**:-वैदिकयुगे बालिकानां कृते उपनयनसंस्कारोऽपि आसीत्। सन्ध्यावन्दनस्य प्रार्थनायाः च अधिकारो नारीणां कृते आसीत्। रामायणात् ज्ञायते यन्माता कौशल्या रामराज्याभिषेके श्रीरामचन्द्रस्य शुभकामनां कृत्वा यज्ञं कृतवती आसीत्। यथा-

"सा क्षोभवसनां दृष्ट्वा नित्यं व्रतपरायणा।
अग्निं जुहोति स्म तदा मन्त्रविद्विजयेषिण।।[५]

पुनश्च यदा सीतादेवी वाटिकायामासीत् तदा सा सन्ध्यावन्दनां कृतवती आसीत्। यथा-

"सन्ध्याकालमनाः श्यामा ध्रुवमेस्यति जानकी।
नदीं चेमां शुभजलां सन्ध्यार्थं परवर्णिनी।।"[६]

वैदिककाले नार्य्यो यज्ञेषु भागो नीतवन्तः आसन्। ता यज्ञं ग्रन्थपाठं च सम्यक् रूपेण सम्पादयन्ति स्म। यज्ञकार्ये तदानीं पतिना सह पत्नी अपि अपेक्षिता आसीत्। पत्न्याः उपस्थितिः तत्र अनिवार्या आसीत्। नार्य्यः अपि तदा ब्रह्मचर्यव्रतमाचरन्ति स्म। उक्तं य अथर्ववेदे- "ब्रह्मचर्येण कन्या युवानं विन्दते पतिम्।"[७] वैदिककाले नार्य्यः स्वगृहे स्थित्वा पठनं पाठनं च अकुर्वन्। काश्चन नार्य्यः गुरुकुले स्थित्वाऽपि अध्ययनं कृतवन्तः आसन् । तदानीं बाल्यविवाहव्यवस्थासीत्। बालिकानां कृते विवाहकालः षोडशे वर्षे अभवत्। तदानीं बालिकाः प्रकारद्वयम् आसन्। तद्यथा-सद्यवधू, ब्रह्मवादिनी इति। सद्यवधू-बालिकाः सम्यक्तया विद्याभ्यासमकुर्वन्। तासां कृते वैदिकमन्त्रस्य मानं यज्ञस्य ज्ञानं, व्यतीतं गीतनृत्यादीनां ज्ञानमपि दीयते स्म। ब्रह्मवादिनीनां विवाहः उचितसमये नाभवत्। तासां विवाहः शिक्षासमाप्त्यनन्तरमेव अभवत्। काश्चन ब्रह्मवादिन्यो नार्य्यः आजीवनमविवाहिताः अभवन्। रामायणाज्ज्ञायते यद् राज्ञः कुशध्वजस्य कन्या स्वजीवने विवाहं न कृतवती स्म।

वैदिकयुगे उत्तमपरिवारस्य बालिकानां कृते नृत्यं गीतम् इत्यादीनां च विषयाणां ज्ञानं दीयते स्म। निम्नपरिवारस्य बालिकानां कृते चित्रकला-साहित्य-वस्त्रवय-पुष्पमालानिर्माणकालेत्यादीनाञ्च ज्ञानं प्रदीयते स्म। तदा काश्चन नार्य्यः प्रसिद्धाः कवियित्र्यः अपि आसन्। तासु कानि नामानि भवन्ति-रेवा-शोह-माधवी-अनुलक्ष्मी-पाहयी-वद्धवही-विजयङ्का चेति। काश्चन नार्य्यः गणितादिषु शास्त्रेषु अपि प्रवीणाः आसन्। तासु लीलावती भवति अन्यतमा। अनेन ज्ञायते यत् तदानीं एतादृशी नारीशिक्षा प्रचलिता आसीत्।

**पादटिप्पण्यः**

१.मनु.सं.(२/२०)
२.वृहदा.उप.
३.वृहदा.उप.
४.वृहदा.उप.

५.रामा.(ल.का.) ६.रामा.(सु.का.)
७.अ.वेद:

**सन्दर्भ ग्रन्था:**
१.संस्कृत वाङ्मय का बृहत् इतिहास - बलदेव उपाध्याय।
२.संस्कृत साहित्य का समीक्षात्मक इतिहास – कपिलदेव द्विवेदी।
३.वैदिक साहित्य और संस्कृत - बलदेव उपाध्याय।
४.वैदिक साहित्येर इतिहास - देवकुमार दास।

शोधच्छात्र::, शिक्षाशास्त्रविभाग:
श्रीसदाशिवपरिसर:,पुरी



# सांख्ययोगदर्शनयो: व्यक्तित्वसंलक्षणानि

सुप्रियघोष:

"दु:खत्रयाभिघाताज् जिज्ञासा 'तदपघातके" हेतौ ।
दृष्टे साऽपार्था" चेन्नै"कान्ताऽत्यन्ततोऽभावात्।।"[1]

क्लेशबहुलत्वेनातिभयङ्करेऽस्मिन् संसारात्मकदुस्तरसागरे निमज्जमानानां हिंस्रजीवतुल्यानां सपरिवारादिभिश्चचर्व्यमानानां दयमानानां नानार्थानि नानानरकयन्त्रणाभोगेन च दंदह्यमानानां मनुष्याणां तत्सकलदु:खात्यन्तिकनिवृत्तिकाभिर्मनुष्यैरात्मतत्वज्ञानलाभाय चेष्टितव्यम् । ऋते ज्ञानान्नमुक्ति: इति श्रुतिभिरात्मतत्त्वज्ञानलाभस्यैव तत्सकलक्लेशनिवृत्तौ हेतुत्वेन प्रतिपादितत्वात् आत्मतत्त्वज्ञानमन्तरेण मुक्ति: नैव भवतीति तत्श्रुत्यभिप्राय: । नश्वरेऽस्मिन् संसारे आबद्धानि-पतितानानां जनानामुद्धाराय हितैषिण: सर्वज्ञत्वेन त्रिकालदर्शिन: महर्षय: कर्मकाण्डप्रतिपादकानि परमतत्त्वज्ञानप्रतिपादकानि च कल्पसूत्राणि चापरस्यां दिशि दर्शनशास्त्राणि रचयामासु: । येषामालोचनया जीव: संसारबन्धनान्मुच्यते । भारतीयदर्शनं मुख्यत: द्विविधं भवति, यथा -आस्तिकदर्शनं नास्तिकदर्शनञ्च ।

१) **आस्तिकदर्शनम् -** यानि दर्शनानि वेदस्य प्रामाणिकतां स्वीकुर्वन्ति, तानि भवन्ति आस्तिकदर्शनानि । यथा- सांख्य-योग-न्याय-वैशेषिक-मीमांसा-वेदान्तदर्शनम् ।

२) **नास्तिकदर्शनम् -** यानि दर्शनानि वेदस्य प्रामाणिकतां न स्वीकुर्वन्ति, तानि भवन्ति नास्तिकदर्शनानि । यथा- चार्वाक-बौद्ध-जैनदर्शनम् ।

**भारतीयदर्शनस्य महत्त्वम् -**

भारतीयदर्शनस्य महत्त्वं वैशिष्ट्यं च सर्वत्रोपलभ्यते । तत्त्वसमीक्षणमेव जीवनस्य परमुद्देश्यम् । यस्य राष्ट्रस्य तत्त्वसमीक्षणं गम्भीरं तस्य राष्ट्रस्य संस्कृति: सभ्यता चेतिहासे महत्त्वपूर्णस्थानमलङ्करोति। भारतीयदर्शनं स्वतन्त्ररूपेण विश्वेऽस्मिन् स्वगौरवं प्रतिपादयति । भारतस्य आचारे व्यवहारे शासने संस्कृतौ च दर्शनस्य प्रतिफलनमुपलभ्यते । तत्र धर्मदर्शनयो: य: अविच्छिन्नसम्बन्ध: परिलक्ष्यते अन्यत्र तन्नास्ति । अस्माकं धर्म: दर्शनञ्च अङ्गाङ्गित्वेन सम्बन्धितम्। एकं विना अपरमसम्पूर्णम्, यतो हि भारतीयधर्मदर्शनौ आध्यात्मिकतत्त्वपरिवेष्टितौ भवत: । यथा विचार: तथा आचार:। आचारं विना दर्शनं निरर्थकम् । दार्शनिकचिन्तनं विहाय धर्मोऽपि अप्रतिष्ठित: । धार्मिकताया: निर्माणार्थं दर्शनं भित्तिप्रस्तरात्मकम् । दर्शनेन हीन: धर्म: विद्वद्भि: न गृह्यते । दु:खस्यात्यन्तिकनिवृत्तेरुपाय: दर्शनशास्त्रे एव विद्यते । धर्म:

दर्शनस्योपयोगविभाग: ।आत्मदर्शनं भवति दर्शनशास्त्रस्य परमं चरमं च लक्ष्यम् ।सांख्यतत्त्वकौमुद्यां मनीषिभि: परमधर्मत्वेन आत्मदर्शनमेवाभिहितम् । यथा -

**"पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य ।**
**पंगबन्धवदुभयोरपि संयोगस्तत्कृत: सर्ग: ।।**[२]

"नास्ति सांख्यसमं ज्ञानं , नास्ति योगसमं बलम् सांख्यायन्ते व्युत्पाद्यन्ते प्रकृत्यादि पञ्चविंशति पदार्था: अत्रेति सांख्यम् । सांख्यं नाम सम्यकज्ञानम् ।ज्ञानस्यैव मुक्तेर्मुलत्वात्" ज्ञानान्मुक्ति: इति।

**"प्रकृते: सुकुमारतरं न किञ्चिदस्तीति मे मतिर्भवति।**
**या दृष्टास्मीति पुनर्न दर्शनमुपैति पुरुषस्य।।**[३]

ज्ञानस्य कार्यं भवति मानवव्यवहारस्य परिवर्तनम् । एतत् ज्ञानं मानव: शिक्षा माध्यमेन प्राप्नोति । मनुष्ये अनेका: मूलप्रवृत्तय: भवन्ति । यासां परिमार्जनेन तेषामभिव्यक्ते: प्रक्रियायां संशोधनं भवति । ज्ञानं व्यवहारसम्पादने महत्त्वपूर्णसाधनं भवति । एवं च मानवानां व्यवहारान् अध्ययति य: स: भवति मनोविज्ञानम् ।

"मनस: विज्ञानं मनोविज्ञानम् "(The Science of Mind) इति परिभाषा केचन विद्वांस: अङ्गीकृता। अन्त: परीक्षणपद्धत्या मनस: स्वरुपं ज्ञातुं शक्यते इति तेषामाशय: । शिक्षासम्बन्धीयमनोविज्ञानम् शैक्षिकमनोविज्ञानम् । शैक्षिकमनोविज्ञाने यथा मनस: विषये विस्तृतवर्णनमस्ति दर्शनशास्त्रस्यान्तर्गत: सांख्ययोगेऽपि मनस: विषये सूक्ष्मातिसूक्ष्म आलोचनामस्ति। यथा- पतञ्जले: योगदर्शने उक्तमस्ति यत् –"चित्तं नाम अन्तकरणं मनो वा । अर्थात् मन: भवति अन्तरीन्द्रियम्। वयं ज्ञातवन्त: यत् मानवानां मध्ये एकादशेन्द्रियाणि सन्ति , तानि यथा - पञ्च ज्ञानेन्द्रियाणि ( चक्षु-कर्ण-नासिका-जीह्वा-त्वक्), पञ्च कर्मेन्द्रियाणि ( वाक्-पाणि-पाद-पायु:-उपस्थ) एवम् अन्त:करण मन:। एतेषु ज्ञानेन्द्रियाणां कर्मेन्द्रियाणां च मनोऽधिष्ठाता एव ।ज्ञानकर्मरुभयो: साधकमिन्द्रियं मन: ।सर्वेन्द्रिय: प्रवत्तकत्त्वादेव तस्य ।सांख्यतत्त्वकौमुदी ग्रन्थे उल्लेखमस्ति ।

**"उभयात्मकमत्र मन: सङ्कल्पकमिन्द्रियं च साधर्म्यात्।**
**गुणपरिणामविशेषान्नानात्वं वाह्यभेदाश्च। ।**[४]

अर्थादिन्द्रियेषु मन: एव श्रेष्ठम् । मनो विना कस्यापि इन्द्रियस्य यत् किमपि कर्म कर्तृत्व असम्भवात्। मनसोऽशेष संस्कारत्वेन सकलेन्द्रियविनाशेऽपि पूर्वानुभूत संस्काराणां विद्यमानतया तत् विषयान् स्मरति जीव: । संकल्पोऽस्ति मनसोऽसाधारणधर्म: ।समीचीना: विशेषा वा कल्पना च संकल्प: इति ।मन एव मनुष्याणां कारणम् बन्धमोक्षयौ:।अनेन ज्ञायते यत् सर्वेषु दर्शनेषु मनोवैज्ञानिकतत्त्वानि सन्ति एव ।तत्र प्रामुख्येन -

**सांख्यशास्त्रे शैक्षिकमनोवैज्ञानिकतत्त्वानि**

मनस: उपरि मानवस्य व्यक्तित्वं निर्भरति । "सत्वरजस्तमसांसाम्यावस्था प्रकृति:- इति सांख्यदर्शनानुसारं प्रकृत्या: स्वरूपलक्षणं वर्णनावसरे कृतम् ।महर्षिकपिलमुनिना सत्व-रज:-तम:गुणानां वर्णनं कृतम् ।इदं संस्कृतदर्शनशास्त्रे त्रिगुण नाम्ना अभिधीयते । येषां तत्त्वग्रहणपूर्वक मनोवैज्ञानिका: मानवव्यक्तित्वं निर्माणं कृतवन्त: ।

१) **सत्त्वगुणानुसारं मानवव्यक्तित्वम् -** सत्त्वगुणयुक्तजना: आत्मविश्वासयुक्ता:, उत्तमव्यवहारपूर्णा: , समाजकल्याणे अग्रेसरन्ति , वृद्धाजनानां साहाय्यं कुर्वन्ति, पितरै सेवां कुर्वन्ति, मोक्षप्राप्त्यर्थ निश्चितमार्गं गच्छन्ति , ईश्वरे भक्तिं कुर्वन्ति , गतिशीलसंघटनयुक्ता:, शीलगुणसम्पन्ना: , चरित्रवन्त: भवन्ति । यथा मनोविज्ञानशास्त्रे W.H.Sheldonमहोदयस्य मतानुसारं Mesomorphy प्रकृतियुक्तजनानां वैशिष्ट्यं भवति ।एते आनन्दप्रिय:, प्रभुत्ववादी, उत्साहयुक्त:, उद्देश्यकेन्द्रित: च वैशिष्ट्यं धारयन्ति ।

२) **रजगुणयुक्तजना: -** ये जना: चञ्चलतापूर्णा:, अहंकारी, उत्तेजकस्वभावा:, उत्तमकार्य कर्त्तु नैव इच्छन्ति ।तेषु जनेषु रजगुणसम्पन्नव्यक्तित्वं परिलक्ष्यन्ते । यथा मनोविज्ञानशास्त्रे W.H.Sheldon महोदय: एतेषां Ectomorphy रूपेण स्वीकरोति ।एते शान्त:, एकाकी, स्वल्पनिद्रा, प्रमोदप्रिय: च गुणयुक्ता: भवन्ति ।

३) **तमोगुणयुक्तजना:** - एते जना: तामसिक भोजनप्रिया, मन्दचिन्ताग्रस्ता, काम-क्रोध-लोभ-मोहयुक्ता:भवन्ति , ऋणं कृत्वा जीवननिर्वाहं कुर्वन्ति , काममाध्यमेन मोक्षप्राप्तुं इच्छन्ति , उग्रव्यवहार:, परपीड़नम्, मन्दितमतय:, अज्ञानपूर्णा: भवन्ति । मनोविज्ञानशास्त्रे W.H.Sheldon महोदय: एतेषां Endomorphy स्वीकरोति । एते भोजनप्रिय:, तन्द्रालु:, क्रोधशील: च वैशिष्ट्यं धारयन्ति ।

**योगशास्त्रे शैक्षिकमनोवैज्ञानिकतत्त्वानि** -अपि च येनापि बुद्धिमता मनीषिणा: मनस्तत्त्वं विचिन्तेन या प्रतिभा प्रकटिता तन्मूले योगविद्या एव विभासते । अनेन माध्यमेन मानवमन: कथं एकाग्रचित्तं भवति इति ज्ञायते । अनेन मानवानां मानसिक चिन्तनशक्ते: विकास: जायते । केवलं न तु मानसिकचिन्तनम् , अपि तु स्नायुमण्डलस्य विकास:, ध्यानं , स्मरणं , कल्पना, अनुभूति:, संवेग:, प्रेरणा, चेतना, बुद्धिम्, व्यक्तित्वं , संकल्पनां प्राप्नोति। यानि मनोविज्ञानवेत्तार: मनोविज्ञानं विद्ययाध्यायन्ति ।

**राजयोगमनोविज्ञानश्च** -पतञ्जलिना प्रणीत:योगशास्त्रस्य प्रथमे एव उक्तमस्ति यत् " **योगश्चित्तवृत्ति: निरोध:**[५]।अनेन स्पष्टं प्रतीयते यत् योगेन चित्तस्य मनस: वा नियन्त्रणं भवति । योगशास्त्रे यतो हि अष्टाङ्गयोगा: सन्ति , तन्मध्ये राजयोग भवति एक: शाखायोग:। राजयोगस्य चरमं लक्ष्यं भवति ध्यानं समाधिश्च। एते मनसा सह निविड़भावेन सम्बन्धयुक्ता: । आधुनिका: मनोवैज्ञानिका: भारतवर्षस्य प्राचीनमनोविज्ञानं योगसूत्रस्य तत्त्वमधीत्य चमत्कृत: भवति । योगसूत्रे पतञ्जलि: योगानुशासनमिति वदति । चित्तं मानसं वा आधारीकृत्य साधनाया: अयं मार्गं मानसं दृढीकरोति स्थिरिकरोति च । प्राचीना: भारतीया: दार्शनिका:, मस्तिष्केन नियन्त्रितस्य तर्कवितर्कस्य श्रुतेरतिरिक्तस्य मानसिकशक्ते: उपलब्धिं कृत्वा मनोविज्ञानशास्त्रं प्रणयनार्थं समुद्यता अभवन् ।

**"तत्र स्थितौ यत्नोऽभ्यास:**[६]।

मनस: शक्तिम् अभिवर्धयन् श्रेष्ठत्वं प्रतिपादनं अस्यैबलक्ष्यम् । सां खसमं ज्ञानं नास्ति । नास्ति योगा समं रव्यलम् । वलमिदं मानवस्य मानसिकबलम्। योगसाधनाया अनुभूयते ।

पातञ्जलयोग: सर्वसाधारणानां मानसिकशान्ते: अभिवृद्धये अमोघौषधिस्वरूपं सर्वाधुनिकं मनोविज्ञानं चेति हेतो: यस्मिन् काश्मिंश्चित् पाश्चात्य विश्वविद्यालयं एवंविध योग: अध्यापयितव्य: । यथार्थत: पातञ्जलयोगस्य मूल्यबोध: सम्प्रति अपि विज्ञानयुगे विद्यते । न केवलं पाश्चात्यदेशस्य कृते अपि तु विश्वस्य कृते अस्य प्रयोजनीयता सर्वै: स्वीकार्या: । येन माध्यमेन न तु मानवानां शारीरिकविकास: जायते, अपि तु सामाजिक-नैतिक-मानसिक-संवेगात्मकविकासोऽपि जायते। यानि तु शैक्षिकमनोविज्ञानस्य अभिवृद्धि: विकासे अन्तर्भवन्ति।

**निष्कर्ष:-** निष्कर्षरूपेण वक्तुं शक्नोमि यत् - सांख्ययोगे यानि यानि शैक्षिकमनोवैज्ञानिकतत्त्वानि सन्ति तानि तु छात्राणां, अध्यापकानां च सर्वेषामपि मानवानां कृते अत्यन्तावश्यकतापूर्णं भवति। प्रात्यहिकजीवने दैनन्दिनजीवने च दार्शनिकविचाराणामनुकरणेन मानवा: मुक्ते: अन्तिममार्गं द्रष्टुं शक्नुवन्ति । आधुनिककाले लोकेऽस्मिन् उत्तमव्यक्तित्वस्य यानि लक्षणानि भवन्ति तानि तु वहु लघुस्तरीय भवन्ति । केवलं मानवस्य बाह्याकृतिं दृष्ट्वा अधुना व्यक्ते: व्यक्तित्वस्य विचारं क्रियते । परं भारतीयप्राचीनपरम्परायां मानवव्यक्तित्वनिर्धारणस्य ये सूचका: आसन् ते बहु प्रामाणिकम् आसन् । भारतीयशास्त्रीयगुणयुक्तव्यक्तित्वमेव सर्वत्र राजते इति वास्तविकमिति । अत्र बाह्याभ्यन्तरगुणान् अभिलक्ष्यैव व्यक्ते: व्यक्तित्वस्य निरूपणं क्रियते ।

**सन्दर्भग्रन्थसूची**


१) आत्मानुशासनम् - गुणभद्रस्वामी, जैन रिलिजियस ग्रन्थ सीरिज नं. २,ज्ञानचन्द्र जैन धर्म पुस्तकालय,पुरानी अनारकली,लाहौर, वि.सं.१९५४।

२) उत्तराध्यायन सूत्र - टीका. फुलचन्द्र जी म. श्रमण, सम्पा.तिलकधर शास्त्री, आ.श्री आत्माराम जैन प्रकाशन समिति, लुधियाना,वि.सं.२०३९।

३) सर्वार्थसिद्धि- आचार्य पुज्यपाद, सम्पा. फूलचन्द्रशास्त्री,बारतीयज्ञानपीठ,लोदौ रोड, सन- १९९९।

४) ड. मिश्रः लोकमान्यः, आधुनिकशिक्षामनोविज्ञानम्, मृगाक्षीप्रकाशनम्, २०११ ।
५) ड. मेटे जयन्त, ड.देव रुमा, घोष. विजयलक्ष्मी, 1) Learning and Teaching,Rita Book æ Agency,ISBN 978-93-84472-27-6
६) दे.कमलकृष्ण,भाट.सुभाषचन्द्रः,1) Education of Learning, Aheli Publishers, ISBN 81-89169-26-2,201 ।
७) ड.देवनाथ.देवव्रत,Special Childhood Education, Rita Book Agency, Oct 2010।
८) ड. सरकार. विजन, 1)Childhood and Growing Up, Aheli Publishers, ISBN 81-89169-16-5, 2017 ।
९) Outline of Educational Philosophy and its Principles, Dr. Mihir kr. Chattopadhyaya, Rita Book Agency,july,217-18, kolkata.
१०) डॉ. मुसालागाँउकर. शास्त्री गजानना, सांख्यतत्त्वकौमुदी, चौखम्वा संस्कृत संस्थान, गोपाल मन्दिर लेन, वाराणसी ।

**पदटीका-**

[1]सांख्यतत्त्वकौमुदी १
[2]सांख्यतत्त्वकौमुदी २१
[3]सांख्यतत्त्वकौमुदी ६१
[4]सांख्यतत्त्वकौमुदी २७
[5]योगदर्शनम् २
[6]योगदर्शनम् १३

शोधच्छात्रः, शिक्षाशास्त्रविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी



# अभिज्ञाशाकुन्तलनाटके सामाजिकव्यवहाराः

**श्रीमान् चिन्तामणिकालो**

**भूमिका-**

**दु:खार्त्तानां श्रमार्त्तानां शोकार्त्तानां तपस्विनाम्।**
**विनोदजननं लोके नाट्यमेतद्भविष्यति।। इति।।**

(नाट्यशास्त्रम्- 1)

अत्र उपरि श्लोके ज्ञायते यत् समाजे दु:खेषु उद्विग्नानां, श्रमेषु श्रान्तानां, शोकसंविग्नमानसां, तपस्विनाञ्च विनोदाय नाटकेन प्रयोजनं भवति। नाटकमाध्यमेन समाजस्य सर्वे सामाजिकाः आनन्दम् अनुभवन्ति इति विदुषाम् आशयः। तस्मात् नाट्यकारैः समाजस्य मनोरञ्जनाय अनेकानि नाटकानि काले काले लिखितानि वर्त्तन्ते। एतेषु नाटकेषु समाजस्य सर्वाः घटनाः प्रतिबिम्बिताः भवन्ति। समाजस्य वास्तविकं चित्रम् उपस्थापयति नाटकम्।

सर्वेषु कविषु नाट्यकारेषु महाकविः कालिदासः श्रेष्ठः भवति इति वयं जानीमः। असौ महाकविः स्वकृतिषु स्वाभाविकतया लोकव्यवहाराणां वर्णनं करोति। सहृदयहृदयसम्पन्नः सामाजिकः विदग्धः सन् तत् नाट्यरसम् आस्वादयति। इदानीमपि तत्तुल्यकवेः अभावः दृश्यते। तदुक्तम्-

**पुरा कवीनां गणनाप्रसङ्गे कनिष्ठिकाधिष्ठितकालिदासः।**
**अद्यापि तत्तुल्यकवेरभावादनामिका सार्थवती बभूवः।। इति।।**

अभिज्ञानशाकुन्तले सर्वान् सामाजिकव्यवहारान् कालिदासः तथैव वर्णयति यथा लोकः वदति। लोकाचाराः लोकव्यवहाराश्च आदर्शरूपेण प्रस्तुताः। तान् वयमत्र विवेचयामः।

**सामाजिकव्यवहारः-**

मानावानां समूहः समाजः इत्यभिधीयते। सत्यं, शान्तिः, दया, क्षमा, प्रेम, श्रद्धा, विश्वासः, सहयोगः, भ्रातृत्वभावना इत्यादिषु मानवीयगुणेषु युक्ताः मानवाः यत्र विलसन्ति सः समाजः। समाजे सर्वे सामाजिकाः सर्वान् सामाजिकनियमान्, सिद्धान्तान्, उपदेशान्, आदर्शान् च परिपाल्य जीवनं यापयन्ति, समाजस्य विकासाय योगदानमपि प्रयच्छन्ति। अभिज्ञानशाकुन्तलेऽपि महाकविः कालिदासः प्रेम, श्रद्धा, उपदेशः, सौख्यं, वर्णाश्रमधर्मानुसारं सामाजिकानां कर्त्तव्यानि इत्यादीन् व्यवहारान् वर्णयति। मानवेषु सुखदुःखानाम् अनुभवरूपाः संवेगाः अपि शाकुन्तले भूरिशः दृश्यन्ते। केषाञ्चन व्यवहाराणाम् उपस्थापनं कुर्मः। तत्र-

**मानवीयसंवेगाः-**

मानवीयसंवेगान् महाकविः कालिदासः शाकुन्तले वर्णयति। समाजे लोके च हर्षशोकादयः मानवीयसंवेगाः भवन्ति। शकुन्तलायाः पतिगृहगमनकाले पितुः कण्वस्य पीडया संवेगान् वर्णयति कविः। यथा-

**यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,**
**कण्ठः स्तम्भितवाष्पवृत्तिकलुषश्चिन्ताजडं दर्शनम्।**
**वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः,**
**पीड्यन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्न वै।।** इति।। (अ. शा. 4.6)

**अतिथिसत्कारः-**

अतिथिसत्कारः सर्वेषां गृहस्थजनानां परमो यज्ञः भवति। भारतीयसंस्कृतौ श्रेष्ठः लोकाचारोऽयं प्रवर्त्तते। गृहं प्रति आगतानां सत्कारः अवश्यमेव कर्त्तव्यः। अन्याथा महती हानिः उपजायते। अतिथेः दुर्वाससः समुचितसत्कारस्य अभावेन अन्यमनस्का शकुन्तला अभिशप्ता जाता। तथाहि नेपथ्ये दुर्वासामुखेन कविः वदति-

**आः अतिथिपरिभाविनि !**

**विचिन्तयति यमनन्यमनसा**
**तपोधनं वेत्सि न मामुपस्थितम्।**
**स्मरिष्यति त्वां न स बोधितोऽपि सन्**
**कथां प्रमत्तः प्रथमं कृतामिव।। इति।।** (अ. शा. 4.1)

**मुनिवचने श्रद्धा-**

वीतरागभयक्रोधाः मुनयः समाजे सर्वदा सम्मानिताः भवन्ति इति शाकुन्तले स्फुटं ज्ञायते। मृगम् अनुसरन् राजा दुष्यन्तः यदा आश्रमसमीपं गच्छति तदानीं वैखानसः वदति-

**आश्रममृगोऽयं न हन्तव्यः न हन्तव्यः इति।** (अ. शा. अङ्क 1)

तदानीमेव मुनिवचनं श्रुत्वा मृगं हन्तुम् उद्यतः राजा दुष्यन्तः साक्षात् शरम् अपसारयति। यतो हि समाजे तपस्विनां वचनम् अनतिक्रमणीयं भवति।

**स्त्रीप्रसाधनम्-**

स्त्रियः सदासर्वदा सौन्दर्याभिवृद्धये विविधानि वस्तूनि अर्थात् पत्रं पुष्पं, तैलं, चन्दनम् इत्यादीनि स्वीकृत्य प्रसाधनं कुर्वन्ति। भर्तृगृहगमनकाले स्त्रियः अलङ्कारान् धारयन्ति। शकुन्तलायाः पतिगृहगमनकाले कालिदासः वर्णयति सख्योः अनसूयाप्रियम्बदयोः मुखाभ्याम्-

**सख्यौ- अनुपयुक्तभूषणोऽयं जनः। चित्रकर्मपरिचयेनाङ्गेषु ते आभरणं विनियोगं कुर्मः इति।।** (अ. शा.- 4 अङ्कः)

किञ्च अभिज्ञानशाकुन्तलनाटकस्य प्रारम्भेपि नटीमुखेन कविः वदति एतस्मिन् विषये यत्-

अवतंसयन्ति दयमानाः प्रमदाः शिरिषकुसुमानि। इति (अ. शा.- 1.4)

**उपदेशाः-**

गुरुजनानाम् उपदेशपरिपालनम् अस्माकं भारतीया संस्कृतिः लोकाचारश्च वर्त्तते। कालिदासस्य अभिज्ञानशाकुन्तलेऽपि उपदेशाः बहवो दृश्यन्ते। शकुन्तलायाः पतिगृहगमनकाले यथा-

काश्यपः- **वत्से ! त्वमिदानीमनुशासनीयासि।**

**शुश्रुषस्व गुरून् कुरु प्रियसखिवृत्तिं सपत्नीजने,**
**भर्त्तुर्विप्रकृतापि रोषणतया मा स्म प्रतीपं गमः।**
**भूयिष्ठं भव दक्षिणा परिजने भाग्येष्वनुत्सेकिनी,**
**यान्त्येव गृहिणीपदं युवतयो वामाः कुलस्याधयः।।** इति।। (अ. शा. 4.6)

**वर्णाश्रमधर्माः-**

भारतीयपरम्परा वर्णाश्रमधर्ममनुसरति। स्वधर्मे निधनं श्रेयः परधर्मो भयावहः इत्यनेन न्यायेन मानवाः स्वेषु धर्मेषु अभिरताः भवन्ति। शाकुन्तले धीवरस्य वचनात् एतत् स्पष्टम् अवगम्यते। तथाहि-

**सहजं किल यद्विनिन्दितं न खलु तत्कर्म विवर्जनीयम्।**
**पशुमारणकर्मदारुणोऽनुकम्पामृदुरेव श्रोत्रियः ।।** इति।। (अ.शा. 6.1)

**पितृपिण्डदानपरम्परा-**

अस्माकं परम्परायां पितृपिण्ड-श्राद्ध-तर्पणादीनां महत्त्वं बहु दृश्यते। पुत्रः पितरं नरकात् त्रायते। पुत्रं विना पितरः जलादीनां वस्तूनाम् अभावे अतृप्ताः भवन्ति। इयं परम्परा न केवलं सामान्यजनेषु अपितु राजकुलेष्वपि दृश्यते। यथोक्तं राज्ञा दुष्यन्तेन-

**अहो ! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः। कुतः-**

**अस्मात्परं वत यथाश्रुतिसंभृतानि**
**को नः कुले निवपनानि नियच्छतीति।**
**नूनं प्रसूतिविकलेन मया प्रसिक्तं**
**धौताम्बुशेषमुदकं पितरः पिवन्ति।।** इति।।

(अ.शा. 6.25)

**प्रेम-**

अभिज्ञानशाकुन्तले कालिदासः प्रेम्णः जीवन्तचित्रम् उपस्थापयति। लोकव्यवहारे न केवलं मानवेषु अपितु पशुष्वपि प्रेमभावः अवलोक्यते। विशेषरूपेण समाजे प्रयप्रिययोः प्रेम अद्वितीयं वर्त्तते। युवा, युवती, ऋषिः, अप्सरा, पिता, पुत्रः, तपस्वी इत्येते सर्वे प्रेम्णा वशीभूताः भवन्ति। दुष्यन्तशकुन्तलयोः प्रेम वर्णयन् कथयति कविः-

**चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,**
**रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः।**
**करं व्याधुन्वत्याः पिवसि रतिसर्वस्वमधरं,**
**वयं तत्त्वान्वेषान्मधुकर हतास्त्वं खलु कृती।।** इति।।

(अ.शा. 1.23 )

एवं प्रकारेण अन्येऽपि बहवो सामाजिकव्यवहाराः अभिज्ञानशाकुन्तलनाटकस्य पदे पदे परिदृश्यते। अत्र केवलं दिङ्मात्रम् उदाहृतम्।

सन्दर्भग्रन्थसूची-
१. पण्डित केदारनाथ, नाट्यशास्त्रम्, भारतीय विद्या प्रकाशन, दिल्ली, १९९८।
२. शतपथी प्रो. हरेकृष्ण, अभिज्ञानशाकुन्तलम्, विनोद पुस्तक भण्डार, कटक।
३. शर्मा प्रो. रजनी, पाण्डेय डॉ. सत्यप्रकाश, शिक्षा एवं भारतीय समाज, शिक्षा प्रकाशन, जयपुर, २००६
४. पारीक प्रो. मथुरेश्वर, शर्मा प्रो. (श्रीमती) रजनी, उदीयमान भारतीय समाज और शिक्षा, शिक्षा प्रकाशन, जयपुर, २००६

संस्कृतप्राध्यापकः
सर्वकारीयमहाविद्यालयः, सुन्दरगडम्



# साहित्यविद्यावधूकाव्यपुरुषयोः विवाहः भ्रमणञ्च -

कृष्णकान्तमिश्रः

काव्यपुरुषस्य विवाहप्रसङ्गः अवतारयन् राजशेखर आह- कदाचित् ब्रह्मर्षिवृन्दारकयोः वेदविषयके कलहे प्रवृत्ते चातुर्यप्रवीणः स्वयम्भूः तामिमां सरस्वतीं माध्यस्थ्यं सम्पादयितुं सन्दिष्टवान्। आाकर्णितसमाचारः सः काव्यपुरुषोऽपि ब्रह्मलोकगमनरतां मातरं सरस्वतीम् अनुवव्राज। माता तम् आश्वासयन्ती जगाद, पुत्र! ब्रह्मणा अननुमतस्य ते ब्रह्मलोकयात्रा ते निःश्रेयसाय इति अभिदधाना सहसा आवर्तयत्। आत्मना च गन्तु प्रववृत्ते। ततः स काव्यपुरुषः निश्चक्रामः।

अस्य काव्यपुरुषस्य प्रियं मित्रं कुमारः कार्तिकेयः साक्रन्दं रुदन् गौर्यामात्रा अभ्यधीयत् - तात! तुष्णीम् आस्व। साहसं निषेधामिति निगदन्ती समचिन्तयत्। प्रायः प्राणभृतां प्रेमाणामन्तरेण न बन्धनमस्ति। तदेतस्य वशीकरणं कामपि स्त्रियं सृजामि इति विचिन्तयन्ती साहित्य विद्यावधूम् उत्पादयत् आदिदेश चैनामेष ते रुषाधर्मपत्युः पुरः प्रतिष्ठते तदनुवर्तस्वैनं निवर्तय च।

तदनन्तरं सा भवानी काव्यविद्यास्नातकान् आदिदेश- भो काव्यविद्यास्नातकाः मुनयः! भवन्तः अपि एतयोः काव्यपुरुष– साहित्यविद्यावध्वोः चरितंस्तुद्धम्। एतद्धि वः काव्यसर्वस्वं भविष्यतीति अभिधाय भगवती भवानी जोषमासिष्ट। ते मुनयोऽपि तथानुगन्तुं निवर्तयितुं स्तोतुं च अवतस्थिरे।

रुष्टः काव्यपुरुषो यत्र यत्र बभ्राम, तत्र तत्र तं प्रसादयितुं साहित्यविद्यावधूः काव्यविद्यास्नातकाश्च अनुजग्मुः। ते सर्वप्रथमं प्राचीमाशिश्रियुः यथा च ग्रन्थकारः - अथ ते सर्वप्रथमं प्राचीं दिशमाश्रितवान् तं काव्यपुरुषम्। यत्र अङ्ग-बङ्ग-सुह्म-ब्रह्म-पुण्ड्राद्याः जनपदाः प्रमुखाः। तत्र तं काव्यपुरुषं वशीकर्तुं कामयमाना उमापुत्री साहित्यविद्या-वधूः यं नेपथ्यं स्वेच्छया स्वीचकार स वेशः तद्दिग्भवाभिः नारीभिः अनुकृतः। सा तादृग्वेषानुकरणप्रवृत्तिः औड्रमागधीनाम्ना प्रसिद्धा जाता। यथा चोक्तम्

**अङ्ग-बङ्ग-कलिङ्गाश्च बत्साश्चैवौड्रमागधीः।**
**अन्येऽपि देशाः प्राच्यां ये पुराणे सम्प्रकीर्तिताः।।**

तेषु प्रयुज्यते त्वेषा प्रवृत्तिश्चौड्रमागधी।

ताम् औड्रमागधीप्रविर्त्तिं मुनयो ननुवुः। मुनिस्तुतिं वर्णयन् आह ग्रन्थकारः -

**आर्दार्द्रचन्दन-कुचार्पित-सूत्रहारः,**
**सीमन्तचुम्बिसिचयः स्फुटवाहुमूलः।**
**दूर्वाप्रकाण्डरुचिरास्वगुरूपभोगाद्,**
**गौडाङ्गनासु चिरमेष चकारस्तुवेषः।।**

सान्द्रमलयज-विलेपन-धवलित-स्तनमण्डल-कलित-मुक्तमाल: शिरोऽग्रभागस्पर्शिसिचय दृश्यमानभजयुगलमूल: दुर्वाङ्कुरसमस्यामासु बङ्गप्रदेशललनासु अयं पूर्व उक्त: वेश: बहुकालं शोभताम् इति स्तुते: आशय:।
संक्षेपेण ललनावेशं वर्णयित्वा क्रमप्राप्तं पुरुषवेषं वर्णयति राजशेखर: स्वेच्छया यथा वेषादिभिरलंकृ त: स सरस्वती-सुत: आसीत् स एव वेषोनुकृत: तत्रत्यै: पुरुषै:। सा प्रवृत्ति: अपि पूर्वनाम्नैव प्रसिद्धा औड्रमागधी इति।

एषा साहित्यविद्यावधू: यदपरं नृत्यवादादिकं चक्रे सा भारती वृत्ति:। तामपि भारती वृत्ति ते मुनय: पूर्ववत् तुष्टुवु: यत्स्वरूपं शास्त्रकारै: प्रतिपादितमस्ति-

**या वाक्प्रधानापुरुषप्रयोज्या,**
**स्त्रीवर्जिता संस्कृतवाक्यप्रयुक्ता।**
**स्वनामधेयैर्भूतै: प्रयुक्ता,**
**सा भारतीनामभवेत्तु वृत्ति:।।**

तथाविधवेशया साहित्यविद्यावध्वाऽपि यदा स: काव्यपुरुष: वशं न आनीत:,तदा तया अभिधाप्रधानानि वाक्यानि प्रोक्तानि। तान्येव च गौडीया वृत्तिरिति लोके ख्यातानि तामपि वृत्तिं मुनयोऽभितुष्टुवु:।
रुष्ट: काव्यपुरुषो यदा एतावता अपि सन्तुष्टो न वभूब पाञ्चालान् च जगाम तदा साहित्यविद्यावधू: अपि काव्यविद्या स्नातकै: सह तमनुजगाम। यदाह राजशेखर: - ततश्च स पाञ्चालान् प्रत्युच्चचाल। यत्र पाञ्चाल-शूरसेन-हस्तिनापुर-काश्मीर बाहीक-बाह्यिक-बाह्यवेद्यादया जनपदा: विश्रुता:। तत्र च उमापुत्री साहित्यविद्यावधू: काव्यपुरुषसमाकर्षणाय यं वेशम् असेविष्ट स तत्रत्याभि: स्त्रीभि: अन्वक्रियते। सा पाञ्चालमध्यमा प्रवृत्ति:। यथोक्तम् -

**पाञ्चाला: शौरसेनाश्च काश्मीरा हस्तीनापुरा:।**
**हिमवत्संश्रिता ये तु गङ्गायाश्चोत्तरां दिशम्।।**
**ये श्रिता वै जनपदा: तेषु पाञ्चालमध्यमा।**
**तामपि ते काव्यविद्यास्नातका: मुनयेभितुष्टवु: -**
**ताटङ्क-बल्गन-तरङ्गित-गण्डलेख-**
**मानाभिलम्बिदरदोलिततार-हारम्।**
**आश्रोणिगुल्फपरिमण्डलितान्तरीयं,**
**वेषं नमस्यत महोदय-सुन्दरीणाम्।।**

कर्णभूषणदोलेयिततरलीकृतकपोलमानाभिस्वल्पदोलितशुभ्रहारम् आश्रोणीगुल्फपरिमण्डितोत्तरीयं कान्यकुब्जरमणीनां वेषं प्रणमत। इति श्लोकाशय:। अन्तरीयपरिभाषा शास्त्रसमागता चेयम् -

**नाभौ धृतं च यद्वस्त्रमाच्छादयति जानुनी।**
**अन्तरीयं प्रसस्तं तदाच्छन्नमुभयोस्तयो:।।**

तथाविधवेषमाहात्मेन प्रागुदासीनोऽपि काव्यपुरुषो यद् वेषं दधौ तदेव तद्वास्तव्या अनुचक्रु:। सा प्रवृत्ति: पाञ्चाले प्रथिता। तत्र साहित्यविद्यावधू: यत् इशत् नृत्य-गीत-वाद्य-विलासादिकं दर्शयाम्भूव सा सात्त्वतीवृत्ति:। यथोक्तम् -

या सात्त्वतेनेह गुणेन युक्ता न्यायेन वृत्तेनसचन्विता च।
हर्षोत्कटा संवृतशोकभावा सा सात्त्वतीनामभवेत्तु वृत्ति:।।

आविद्धगतिमत्वात् सा च आरभटी। यथा चोक्तम्-

**चित्राणि युक्तानि च यत्र नित्यं तां तादृशीमारभटीं वदति।**

तां वृत्तिं ते मुनयोरपि तुष्टुवु:। तथाविधनेपथ्याऽपि तया तद्वेशवंशवदीकृत: काव्यपुरुष: इषदसमासम् अल्पानुप्रासिकं लाक्षणिकं वाक्यं जगाद। सा पाञ्चालीरीति:। तां ते काव्यविद्यास्नातका मुनय: तुष्टुवु:।

उत्तरदिग्भ्रमणानन्तरं स: काव्यपुरुष: अवन्तिनाम्ना प्रसिद्धान् जगाम, यत्र अवन्ति-विदिशा-सौराष्ट्र-मालवा-भृगुकच्छ-

प्रभृतयो जनपदा: प्रसिद्धा,यथा चोक्तम् -

आवन्तिका वैदेशिका सौराष्ट्रा मालवास्तथा।
कुर्वन्त्यावन्तिकीमेते प्रवृत्तिं नित्यमेव तु।।

तत्र सा साहित्यविद्यावधुम् यथाविधं नेपत्थं स्वीचकार काव्यपुरुषाकर्षणाय तथाविधमेवानुकृतं तत्रत्याभि: रमणीभि:। यथाविधञ्च नेपत्थं दधार काव्यपुरुष: तथाविधम् अनुकृतं तत्रत्यै: जनै: किञ्चित् अनुरक्त:। सा प्रवृत्ति: आवन्ति नाम्ना ज्ञायते। सा च प्रवृत्ति: पाञ्चालमध्यमाया: दाक्षिणात्यायाश्च प्रवृत्ते: मध्ये वर्तते। अत: अन्तरालवर्तित्वात् सात्वती-कौशिक्यौ तत्रावन्तीषु द्वे वृत्ती व्यवहृयते। यथोक्तम् -

**सात्त्वतीं कौशिकीं चैव वृत्तिमेषांसमाश्रित:।**
**भवेत्प्रयोगे नान्यत्र सर्वै: कार्य: प्रयोक्तृभि:।।**

तथा च उत्तरप्रदेशीयाया: सात्त्वत्या दाक्षिणात्यश्च कौशिक्या वृत्ते: परस्परं संमिश्रितत्त्वात् चरितेषु जल्पितेषु च मिश्रणं दरीदृश्यते। अत एव केचन उत्तरदाक्षिणात्ययो: पाञ्चालीवैदर्भीरीत्यो: अन्तरवर्तिनि इति लाटीति कथयन्ति। तथाहि- लाटी तु रीतिवैदर्भीपाञ्चाल्योरन्तरे स्थिता।
अथ ते मुनय: तामपि तुष्टुवु: -

**पाञ्चेलनेपथ्यविधिर्नराणां स्त्रीणां पुनर्नन्दतु दाक्षिणात्य:।**
**यज्जल्पितं यच्चरितादिकं तदन्योन्यसम्भिन्नमवन्तिदेशे।।**

नराणां पाञ्चालदेशोद्भववेशरचनाप्रकार: स्त्रीणां दक्षिणदिग्भव: नेपथ्यविधि: प्रीतिप्रदो भवतु। अत्र अवन्तिदेशे यत् चरितादिकं व्यवहारादिकं भाषितं च वर्तते, तत्सर्वम् अन्योन्यसम्मिश्रम्। अत एव उत्कृष्टत्वात् पाञ्चालपुरुषाणां दक्षिणे नारीणां च वेशविन्यासादिकम् आकर्षकं भवतीति भाव:।

पश्चिमाशाभ्रमणोत्तोरं काव्यपुरुष: दक्षिणाशामाश्रितवान्। यत्र सन्ति मलय-मेकल-पाल-कलिङ्गादयो जनपदा: प्रसिद्धा:। सा उमासुता साहित्यविद्यावधू: काव्यपुरुषाकर्षणाय यं वेषं यथेष्टमसेविष्ट स तत्रत्याभि: स्त्रीभिरन्वक्रियत, सा दाक्षिणात्या वृत्ति:। तां वृत्तिं मुनय: प्रशंसयन्तिस्म, यथा -

आमूलतो वलितकुन्तलचारुचूडश्चूर्णालकप्रचयलाञ्छितभालभाग:।
कक्षानिवेशनिबिडीकृतनीविरेषवेषश्चिरं जयति केरलकामिनीनाम्।।

आमूलत: मूलादेव, वलितै: भुग्नै:, कुन्तलै: केशै:, चारु सुन्दरा, चूड़ाकेशवेशो यस्मिन् स वलितकुन्तलचारुचूड:, चूर्णं पटवासकयोग: तेन सम्पृक्ता अलका चूर्णालका: कुञ्चितकेशा: तेषां प्रचयगण:, तेन लाञ्छित: शोभित: भालभाग: ललाटफलक: यत्र स: चूर्णालकप्रचयलाञ्छित-भालभाग:, कक्षाकटितवसनं, तस्या: निवेशेन निविडिकृताघनीकृता नीवि: जघनवसनग्रन्थि: यत्रासौ कक्षानिवेशनिविडीकृतानीवि: एष: अयं पुरो धृतं केरलकामिनीनां केरलप्रदेशवास्तव्यललनानां चिरं बहुकालं जयति सर्वोत्कर्षेण वर्तते। जयति इति अनेन केरलललनावेषस्य सर्वोत्कृष्टता काव्यपुरुषस्यातिविशिष्टानुरक्तिश्च ध्वन्यते।

साहित्यविद्यावधूमालोक्याकृष्टचेता: सारस्वतेय: य: वस्त्रादिग्रहणमकरोत् तस्यानुकरणं तत्रत्या: मानवा: विदधु:, सा उमासुता साहित्यविद्यावधूरपि यद् विचित्रं नृत्यं गीतं वाद्यं विलासादिकं च दर्शयामास सा कौशिकी वृत्ति: कथ्यते। यथा चोक्तम्-

**य श्लक्ष्णनेपथ्यविशेषचित्रा स्त्रीसंयुता वै बहुनृत्यगीता।**
**कामोपभोगप्रभवोपचारा तां कौशिकीं वृत्तिमुदाहरन्ति।।**

तां वृत्तिं मुनय: प्रशशंसु:। तया साहित्यविद्यावध्वा अत्यर्थमनुरक्तीकृत: स: काव्यपुरुष: स्थानानुप्रासवदसमासं योगवृत्तिगर्भम् अभिधामूलकं व्यञ्जनामिश्रं च वाक्यं जगाद सा वैदर्भीरीतिरुच्यते। तां वृत्तिं ते मुनय: प्रशशंसु:।

**सन्दर्भितग्रन्थसूची**

१) जयकृष्णदासहरिदास - काव्यमीमांशा - चौखाम्बासंस्कृतसिरिज, बनारससिटि १९९१
२) परासरसाधना - काव्यमीमांशा– डि.के. प्रिन्टवार्ल्ड प्र.लि. २०१३
३) दीक्षित हरिनारायण, टण्डनकिरण - भारतीय काव्यशास्त्रमीमांशा ।
४) शास्त्री उदयवीर - मीमांसादर्शनम् - सुबोधपाव्लिकेशन - २०१८
५) सिंह उदयभानु - काव्यमीमांशा - राधाकृष्णनप्रकाशन - २००८



शोधच्छात्र:, साहित्यविभाग:,

केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदासिवपरिसर:, पुरी ।




# अभेदान्वयविचार:


**रश्मिताजेना**


व्युत्पत्तिवादे प्रथमाकारके प्रथमत:अभेदान्वय: गदाधरेण विमृष्ट: । शाब्दबोधे एकपदार्थानुयोगिक: अपरपदार्थप्रतियोगिक:संसर्ग:आकाङ्क्षाभास्यैव । तथा च यत्पदे यत्पदविरहप्रयुक्तान्वयबोधजनकत्वाभावस्तद्पदे तद्पदवत्वमाकाङ्क्षा । अयञ्च संसर्ग:क्वचित्भेदलक्षण:क्वचिच्च अभेदलक्षण:इति भेदेन द्विविध: ।

महामहोपाध्यायश्रीगदाधरभट्टाचार्यविरचितन्यायव्याकरणविषयक:ग्रन्थ: व्युत्पत्तिवाद: ।अस्य ग्रन्थस्य मुख्यप्रतिपाद्यविषय: प्रत्ययार्थविचार: ।व्युत्पत्तिर्नाम शाब्दबोधाकाङ्क्षाज्ञानयो: कार्यकारणभाव: ,तदनुकूलव्यापारो वाद:इति। अत: व्युत्पत्ति:वदति इति व्युत्पत्तिवाद: ।

शब्दात् जायमान बोध:शाब्दबोध:इति । शाब्दबोधे पदज्ञानं करणं, पदार्थज्ञानं द्वारं भवति ,शाब्दबोध:फलरूप:। शक्तिधी:सहकारिणी इति कारिकावल्यां वर्णितम् ।

व्युत्पत्तिवादग्रन्थे अभेदान्वयप्रकरणे उक्तं यत् शाब्दबोधे चैकपदार्थेऽपरपदार्थस्य संसर्ग: संसर्गमर्यादया भासते । अस्य पङ्क्ते:शाब्दबोध:परिष्क्रियते ।शाब्दबोधे इत्यत्र सप्तम्या:निरूपितत्वमर्थ: । एकपदार्थे इत्यत्र सप्तम्या: अनुयोगित्वमर्थ: । संसर्गश्च सम्बन्ध: । संसर्गमर्यादा नाम आकाङ्क्षा । संसर्गमर्यादया इत्यत्र तृतीयाया: प्रयोज्यत्वमर्थ: । भासते इत्यत्र अंशद्वयं वर्तते । एक:धात्वर्थ: अपरश्च प्रत्ययार्थ: ।भासते इत्यत्र भास्धातो:विषयत्वमर्थ: , तिङ् प्रत्ययस्य आश्रयत्वमर्थ: । चकारो नाम वाक्यालङ्कार: । तथा च एकपदार्थानिष्ठानुयोगितानिरूपक: अपरपदार्थनिष्ठप्रतियोगितानिष्ठनिरूपक: अभेदादिसम्बन्ध: ।शाब्दबोधनिरूपिताकाङ्क्षाप्रयोज्यविषयताश्रय: इति शाब्दबोध: । एकपदार्थनुयोगिकतानिरूपक: ,अपरपदार्थनिष्ठप्रतियोगितानिरूपक: संसर्ग: शाब्दबोधनिरूपितप्रयोज्यतावती या विषयता तादृशविषयनिरूपितवान् भवतु इति ।

अभेदान्वयार्थं तत्र नियमद्वयं साधारणत:उपपन्नम् । तच्च स्वसमानविभक्तिकत्वम् , स्वाव्यवहितपूर्ववर्तित्वञ्चेति । तथा च अभेद:प्रातिपदिकार्थे स्वसमानविभक्तिकत्वेन स्वाव्यवहितपूर्ववर्तिना च पदेन उपस्थापितस्य पदार्थस्यैव संसर्गमर्यादया भासते ।

**नीलो घटो** -इत्यत्र स्वसमानविभक्तिकत्वनियमेन अभेदान्वय: सिद्ध: । विशेष्यवाचकघटपदोत्तरा सु विभक्ति:, विशेषणवाचकनीलपदोत्तरा अपि सु विभक्ति: । तथा च परस्परसमानविभक्तिकत्वम् । तथा च अभेदसम्बन्धावच्छिन्ननीलत्वावच्छिन्नप्रकारतानिरूपितघटत्वावच्छिन्नविशेष्यताकशाब्दबोध:

**नीलघटमानय** इत्यत्र समासस्थलीयविचार: । अत्र स्वाव्यवहितपूर्ववर्तिना इति नियमेन अभेदान्वय: । अत्र स्वं

घटपदं तदव्यवहितस्य व्यवधानरहितस्येत्यर्थः । नीलपदं विशेष्यवाचकघटपदस्य पूर्ववर्ती । अतःतत्र सुलभः ।

**नीलस्य घटः** इत्यत्र एतद् नियमद्वयं न संगच्छते । न च तत्र समानविभक्तिकत्वं, न वा स्वाव्यवहितपूर्ववर्तीत्वम् । यद्यपि अव्यवहितपूर्ववर्तित्वेन ङस्विभक्तिपदं विद्यते ,तथापि षठ्याः अयोग्यत्वात् नैव अभेदान्वयः । किञ्च विरूद्धविभक्तिमतपदार्थस्य अभेदान्वयः सर्वविज्ञजनानुभवसिद्धत्वात्।

नीला घटः इत्यत्र विशेष्यवाचकपदं घटपदं ,विशेषणवाचकनीलपदम् । नीलघटयोः अभेदान्वयः स्वसमानविभक्तिकत्वनियमेन जातः ।तत्रविशेष्यविशेषणवाचकपदोत्ररा विभक्तिः सु विभक्तिः । तेन च अभेदसंसर्गकनीलनिष्ठप्रकारतानिरूपितघटनिष्ठविशेष्यताकशाब्दबोधः स्पष्टः। संक्षेपतःनीलोभिन्नघटःइतिशाब्दबोधः ।

परन्तु स्तोकं पचति इत्यत्र तिङन्तप्रयोगे विशेष्यविशेषणवाचकपदयोः विरूद्धविभक्त्यन्तत्वेऽपि अभेदान्वयबोधः । पचति इति तिङ् विभक्त्यपेक्षया विरूद्धविभक्त्या द्वितीयया अवरूधेन स्तोकमिति पदेनोपस्थापितस्यापि स्तोकपदार्थस्य धात्वर्थीभूतपाकादौअभेदेन अन्वयः भवति । स्तोकाभिन्नपाकःइति । तथा च अभेदसम्बन्धावच्छिन्नस्तोकत्वावच्छिन्नप्रकारतानिरूपितपाकत्वावच्छिन्नविशेष्यताकशाब्दबोधः ।

स्तोकं पचति इत्यत्र क्रियाविशेषणत्वं स्पष्टम् । क्रियाविशेषणस्थले द्वितीयाविभक्तिः एव अनुशासनात्। तत्र क्रियाविशेषणानां क्लिवत्वं कर्मत्वञ्च इत्यनेन अनुशासनेन स्तोकपदार्थस्यार्थे कर्मत्वस्य उपचारःइति ।

विरूपोपस्थितयोरेव अभेदः -अभेदान्वयार्थे कः नियमविशेषःइति । नियमविशेषे जिज्ञासमानानांकिन विरूपोपस्थितयोः अभेदान्वयबोधः इति तेन उत्तरं विहितम् । विरूपोपस्थितयोः नाम परस्परभिन्नधर्माभ्यामुपस्थिततयोः पदार्थयोः इति भावः । शाब्दबोध्येएकंविशेष्यं,अपरञ्च विशेषणम्, यथा नीलो घटः । अत्र घटपदं विशेष्यवाचकपदं नीलपदं विशेषणवाचकपदम् । नीलत्वेन नीलपदार्थस्य उपस्थिति घटत्वेन घटपदार्थस्य उपस्थितिः । घटत्वं नीलत्वञ्च नैकं किन्तु भिन्नम् । अतःप्रकारतानीलनिष्ठा विशेष्यता घटनिष्ठा च । विशेष्यस्य नामान्तरं धर्मी इति । विशेषणस्य नामान्तरं प्रकार इति ।अतःविशेष्यतावच्छेदकं घटत्वं, प्रकारतावच्छेदकं नीलत्वम् । नीलत्वेन नीलपदार्थस्य ,घटत्वेन घटपदार्थस्य उपस्थितिः । अतः अभेदान्वयः । अयमेव नियमः अभेदान्वये मूलमन्त्ररूपः ।

शोधछात्रा
न्यायविभागः, केन्द्रीयसंस्कृतविश्वविद्यालयः
श्रीसदाशिवपरिसरः, पुरी, ओडिशा



## संस्कृतसाहित्-ो राष्ट्रभावना

**सम्प्रीतिघोषः**

**भूमिका–** राष्ट्रि-ाता; राष्ट्रहितानुकूलनिर्माणशालिता। राष्ट्रशब्दस्-ा तद्धितपदार्थस्-ा च -थावदगतिः स्-ाात् तदैव भवति राष्ट्रि-ाता। राष्ट्रं च राजते इति राष्ट्रमिति व्-ुत्पत्-ाा भ्वादिगणी-ा राजधातोः ष्ट्रन् प्रत्-ा-ाात् निष्पन्न भवति। तस्-ाार्थः भवति जनपदः, अथवा विस्तारेण वदति चेत्– सर्वत्र आनन्दम-ाजनसमूहः। जीवनार्थम् आवश्-ाकानां सर्वेषां वस्तूनां उत्पादनविक्र-ाानुकूलज्ञानवत्वं राष्ट्रस्-ा सर्वत्र शोभ-ामानत्वम्।

आङ्गलभाषा-ां राष्ट्री-ाता– It is a sentimental political concept directly related to the struggle for power, which respects the individuality of the states, recognises the varieties in low and Government, and segregates group from group on the basis of common core of

ideals and beliefs., C.D.Burng. अत्रापि बहुमतानि सन्ति, दर्शनं सन्ति।

उभयोर्मध्ये वस्तुत:, जननी जन्मभूमिश्च स्वर्गादपि गरी-ासी। विश्वमङ्गलकामना राष्ट्रमङ्गलकामना- कदापि परस्पर विरोधो न भवति। वैदिक-ुगं संस्कृतसाहितस्-ा उन्मेषपर्वम्। अन्-ेभ्-ा: सर्वेभ्-ा: भाषासाहितेभ्-ेव एतदसाहित्-ामपि पारिपाश्विकसमाजस्-ा दर्पणस्वरूपाणि। -ादि समाजदर्पणं वदति चेत् एतत् वक्तव्-ं, समाजस्-ा परिकल्पनं सम-ानुकूलं चिन्तनधारा राजधर्मस्वरूपं भौगलिकावस्थानं सर्व वारं वारं काव्-ेषु महाकाव्-ेषु सर्वपरि साहित्-ो प्रस्फुठिताभवत्। समाजव्-ावस्था-ा: मुख्-ास्तम्भ: राज्-ाव्-ावस्था। विभिन्न सम-ो विभिन्नकव-ा: तेभ्-ा: दर्शनस्-ा प्रकाशं काव्-ेषु कृतवन्त:। राष्ट्री-ाभावनाभरित: कविस्तानि समस्तानि तत्तानि उपश्-ोक-ाति -ानि तन्मते तस्-ा राष्ट्रस्-ा शोभाधा-ाकानि रक्षाकारीणि शोभादा-ाकानि गौरववर्धकानिच भवन्ति। विश्वस्-ा सर्वोत्तमं विशालार्णवतुल्-ासाहित्-ं संस्कृतसाहित्-ाम्। नाम्नेव अस्-ा: भाषा-ा: निर्मलत्वं, दोषराहित्-ञ्च अस्माकं हृद-ो मस्तिष्के च संसूच्-ाते। संस्कृते निहिता: विचारा: सत्पथप्रवर्तका: सन्मार्गप्रवर्तका सर्वोत्कृष्टं सर्वोत्कर्षदा-ाकाश्च तत्र निहितादर्श:सम-ो सम-ो अङ्गुलिनिर्देशेन उचितानुचितज्ञानं प्रदर्शनेन मनुष्-ाणां मानसचक्षुं उन्मेलितवान्। अनेन कारणेनैव संस्कृतभाषा भारतदेशस्-ा प्रतिष्ठा रूपेणाभिहितं केनचित् विदुषा- भारतस्-ा प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा।-ादि संस्कृतसाहित्-ो राष्ट्रभावना वर्णनी-ा तर्हि इदं साहित्-ाभाण्डारस्-ा आधोपान्तालोचनवश्-ाकम्। अत्र सर्वादौ काठिन्-ाता- अन्त: अत्र अनुपस्थित:। अनन्त: संस्कृतसाहित्-ं क्रमवर्धमान:। अधुना किञ्चिदालोचना आवश्-ाकी। सर्वादौ वैदिक-ुगस्-ा समीपे उपस्थिति: कर्तव्-ाम:, -ातो हि तत्र अस्माकं भारती-ासंस्कृते: प्राणभूता: प्रमाणभूताश्च वेदा: सन्ति,एवं च संस्कृतभाषा-ं प्राक्-पर्वम्।

वैदिकवाङ्म-ो राष्ट्रि-ाभावना-

संस्कृतभाषावाङ्म-ास्-ा श्रीगणेशं वैदिक-ुगस्-ााविर्भविण अभवत्। वेदो हि संस्कृतभाषा-ामूलम्। अस्माकं अतिप्राचीना चिन्तनधारा-ा: कोष: वेदा:। प्राचीन:-ऋषि-मुन-ा: वेदे मानवजीवनस्-ा भिन्नप-र्ा-ास्-ा प-र्ाप्तं मीमांसां प्रस्तुतं चक्रु:। तेषां दर्शन: मानवानां न केवलं सामाजिक- आर्थिक- धार्मिक- सांस्कृतिकपक्षानां मूल्-ाङ्कनं नाकुर्वत अपि तु स्वदेशभक्ति-स्वराष्ट्रप्रभावस्-ापि उन्मोचनं अकुर्वत।जन्मभूमि: मातास्वरूपा इति भावना सर्वादौ ऋग्वेदे व-ाम् प्राप्नुम:-

तन्नो वातो म-ाभु वातु भेषजं तन्माता पृथिवी तत् पिता द्यौ:।

तद्-ग्रावाण: सोमसुतो म-ोभुवस्तदश्विना श्रृणुतं धिष्ण्-ा -ुवम्।।(ऋग्वेद,१/८९/४)

फलस्वरूपं भारतवर्षस्-ा मध्-ो अजन्मत् सर्वप्रकारा: व-ं, अस्मासु रागात्मकसख्-ाता-ा: उन्मेषं भवति। द्यौर्मे पिता जनिता नाभिरत्र बन्धुर्मे माता पृथिवी मही-ाम्(ऋग्वेद,१/१६४/३३)। द्यौर्व: पिता पृथिवी माता सोमो भ्राताऽदिति: स्वसा(ऋग्वेद,१/१९१/६)। ऋग्वेदस्-ा दशममण्डले राष्ट्रहिता-ा ईश्वरस्-ा प्रार्थना क्रि-ाते -ात् हे ब्रह्मणस्पते, अस्मान् राष्ट्रहितार्थं सम्वर्द्ध-ा। तद्यथा-तेनास्मान् ब्रह्मणस्पतेऽभि राष्ट्रा-ा वर्धते।इति। अथर्ववेदस्-ा षष्ठकाण्डे चत्वारिंशत्तमसूक्ते राष्ट्रकल्-ाणभावना दृश्-ाते-

**अस्मै ग्रामा-ा प्रदिशश्चतस्र ऊर्जं सुभूतं स्वस्ति सविता न: कृणोतु।**

**अशान्त्विन्दो अभ-ा: न: कृणोन्त्वन्-ात्र राज्ञामनि -ातु मन्-ु:।।**

शत्रुरहिम इन्द्रो महां निर्भ-तां प्रदद्यात्। राजा कुप्-ेत शत्रुभ्-ा: न मह्यम्, प्रतिराष्ट्रमुभ-ाविधा: जना: भवन्ति। सदाचारिजना: स्वसद्गुणै: राष्ट्रं समुन्नतं कुर्वन्ति। तथा दुरचारिणो राष्ट्रस्-ा क्षतिं कुर्वन्ति। अथर्ववेदे एतादृशशत्रुभावना-ा: विनाशार्थं प्रार्थना अस्ति-सा नो भूत्तस्-ा भव्-ास्-ा प्र-ुरूं लोकं पृथिवी न: कृणातु।

वैदिकराष्ट्रवादस्-ा मूलतत्त्वज्ञानं -ादि मानवानां हृद-ो सन्ति तदाद्यत्वे राष्ट्रं नि:सन्देहत-ा साम्प्रदा-ाकतां छलनां पृथक्त्ववादं विस्मृत्-ा, विश्वबन्धुत्वभावनां स्मृत्वा सुखेन तिष्ठे-ु:। परन्तु कलि-ुगवाहका: मानवानां हृद-ो एतादृशि् चिन्तनं कुत्र ?शासका: अपि शासने लिप्ता: न तु शोधने।

**पुराणेषु राष्ट्रि-ाता-**

पुराण: अस्माकं पुरातनभारती-ासंस्कृतिं सभ्-ाता-ा: च कोषागारम्, लौकिक-पारलौकिकजीवनादर्शनस्-ा आदर्शम्,

भारती-शास्त्राणां सारसर्वस्वम्, वेदानां सारलीरूपम्, ज्ञानसर्वस्वम्, भक्ति एवं च वैराग-स्-ा मेलनम्, मानवजीवनस्-ा व्-ाख्-ानम्, वास्तविकभूगोलमानदण्डं, पुञ्जिकृतेहासम्, सामाजिक-धार्मिक-राजनैतिकविचाराणाम् अक्ष-ोत्सम्।

पुराणेषु राष्ट्रं प्रति अभिनिवेशस्-ा अभिव्-ञ्जना दृश्-ते। गरूडपुराणे उक्तम्- गा-न्ति देवाः किल गीतकानि धन्-ास्तु -े भारतभूमिभागे।

स्वर्गापवर्गफलार्जना-ा भवन्ति भू-ाः पुरुषाः सुरत्वात्।।

पुराणेषु -त् भारतसीमा-ाः निर्धारणं पवित्रत-ा विवेचनं कृतं तथा च अर्णव- नदी-अरण्य- सरोवर-रत्नाकराणां च -त् वर्णनं कृतं तत् सर्वं राष्ट्रि-भावना-ाः परिपोषकम्। राज्-रक्षाणार्थं स्थितराजवंशस्-ेतिहासं, तत्र उपस्थिताः मानवानां वर्णाश्रमप्रथाः राष्ट्रि-भावना-ाः प्रतीकस्वरूपम्। पद्मपुराणे ब्रह्माण्डवर्णनकाले मनु-पृथु-इक्ष्वाकु--ा-ाति-नहुष-सोम-गाधि-कुवेर-ऋषभदेव- दिलीपादि राजानां वर्णनं वृहद्-राष्ट्रचिन्तनस्-ा पाण्डुलिपि (पद्मपुराणम्,स्वर्गखण्डः, अध्-ा-ाः-६-९)। पुराणेषु मदालसासदृशमातृभिः पुत्राणां कृते राष्ट्ररक्षणस्-ा सुरक्षा-ाः च शिक्षा प्रदत्ता। राज्-ो प्रजा-ाः -ोगक्षेमा-ा सर्वविधोपा-ानाम् अपि चिन्तनं कृतम्- स्वतन्त्रश्च स्वतन्त्रेण स्वतन्त्रात्मवाप्-ते।

**रामा-णे राष्ट्रभावना-**

रामा-णे राष्ट्रभावनालोचनानुपूर्वे राजतन्त्रस्-ालोचना वश्-ककी। राज्ञः तन्त्रः , राजतन्त्रः। अत्र तन्त्रः शब्दस्-ार्थः शासनम् ( वामन शिवराम आप्ते, संस्कृत-हिन्दी कोशः)। वस्तुतः वंशपरम्पराक्रमेण अर्थात् पुत्रपौत्रादिक्रमेन प्रचलित-शासनव्-ावस्था।

रामा-णम्, रामराज्-म्। रामराज्-म् इति शब्दस्-ालोचना करोमि चेत् प्रथमपत्रस्-ा विष-ं वक्तव्-म्- सर्वत्र शोभ-माना: मानवाः,जीवनम्। रामा-णम्,तस्-ा ना-कं कथारूपा-नं च सर्वे विदितम्। परन्तु अत्रैव राजतन्त्रस्-ा जटिलता स्पष्टा-दशरथः कैके-िश्च विवाहे प्र-ुक्तः पणभन्धः तस्-ोदाहरणम्। चित्रकूटे राम-भरतस्-ा वार्तालापे एतत् प्रमाणमवस्थितम्।

**पुरा भ्रातः पिता नः स मातरं ते समुद्वहन्।**
**मातामहे समाश्रौषीद् राज्-शुल्क मनुत्तमम्।। (अ-ोध्-ाकाण्डे,सप्तोत्तरशततमः सर्गे,३)**

एतद्परम् कनिष्ठपुत्रस्-ा सिंहासनलभ-ार्थे कैके-िकृतः कूटनीतिः रामा-णे प्रदर्शितः राजतन्त्रस्-ा कृष्णचिह्नम्। परन्तु रामा-णे प्रदर्शितः राजतन्त्रः भक्ति आन्दोलनस्-ा प्रवाहे लुप्तोजातः।रामो विग्रहवान् धर्मः,रामो धर्मभृताम्बरेः एतस्-ार्थेऽपि अत्रोपस्थितराजधर्मस्-ोलोचनावश्-की। रामा-णस्-ा पूर्णालोचना अधुना असम्भवा परन्तु प्रश्न उदेति -त् रामराज्-स्-ा आवश्-कता की-तति इति ?

स्मृतिशास्त्राणि-

राजधर्मः राज्-परिचालना शासनप्रणालिः सर्वविधः अत्र सुस्पष्टरूपेण वर्णितः। एतेषां उपरि राज्-व्-वस्था अस्मिन सम-े अपि प्रचलति शैभ-मानराज्-म् इति शब्दं सर्वसम-े नक्षत्ररूपेण प्रज्वलति। 'राजधर्मान्प्रवक्षामि' उक्त्वा आचा-मिनुः राजानुचारणं दर्श -ितवन्तः।

**स राजा पुरुषो दण्डः स नेता शासिता च सः।**
**चतुर्णामाश्रमाणं च धर्मस्-ा प्रतिभूः स्मृतः।( मनु, ७/१७)**

किमर्थं दण्डम्, -दि राजाअलसो भूत्वा दण्डप्रण-ं न कु-ात्तदा शूले कृत्वा मत्स्-ानिव बलवन्तो दुर्बलानपक्ष-न्।

**सर्वो दण्डजितो लोको दुर्लभो हि शुचिर्नरः।**
**दण्डस्-ा हि भ-ात्सर्वं जगद्भोगा-ा कल्पते।। (मनु,७/२२)**

भगवनमनुप्रणीतःराजधर्म उत्कृष्टराष्ट्रगठने आवश्-कश्य। चन्द्रगुप्तत्वम् मौ-सम्राटरूपेण प्रतिष्ठाकर्ताः चाणक्-ः राजतन्त्रस्-ा कूटिलनीतीनां उद्भावकः। तस्-ा नीतीनां उपरि अस्माकम् अर्वाचीन राजनीतिः परिपुष्टः। सुशासकस्-ा इन्द्रि-ज-प्रसङ्गेण कौटिल्-ाचार्जेण अर्थशास्त्रे उक्तम्-

**सहा-साध्-ं राजत्-ं चक्रमेकं न वर्तते।**

कुर्वीत सचिवांस्तस्मात्तेषां च शृणु-ान्मतम्।। ( प्रथमाधिकरणम्, तृती-प्रकणम्, सप्तमोध्-ा-ः)

अमात्-नि-ोग-कृत्-ाकृत्-पक्षोपग्रह-मन्त्रसंरक्षण-राज्ञः आत्मरक्षणादि विष-ं राजधर्मस्-ा स्तम्भस्वरूपम्। राष्ट्रपरिचालना-ां शासनप्राधानस्-ा सन्दर्भे- शासनप्रधाना हि राजानः, तन्मूलत्वात् सन्धिविग्र-ोः। इति वाक्-म् अतीव महत्त्वपूर्णम्। राज्-शासनस्-ा प्रत्-क्षाभिज्ञतामाश्रित्-ा राज्ञां कृते शास्त्रमिदं रचितम्। एतदतिरिक्ता -ाज्ञवल्कस्मृति- शुक्रनीति राजधर्मस्-ा प्रकाशिकाः।

भासनाटकचक्रे वर्णितः राष्ट्रि-भावना-

सुदुरातीते -दा वैदिकसाहित्यस्-ा पश्चात् लौकिकसंस्कृति स्वपन्थां निर्णानं करोति तस्मिन्नेव सम-े भासनाट्यचक्र-ाविर्भवः। महाकविभासः स्वरूपकस्-ा माध्-मेन राष्ट्रस्-ा महिमा-गरिमा-म-र्यादा-ाः रक्षणार्थं राष्ट्रं राष्ट्रभक्तेरपदेशं दत्तवान्। राष्ट्रि-भावनापक्षे भासस्-ा चरित्रचित्रणं उत्कृष्टम्। प्रतिज्ञा-ौगन्धरा-णस्-ा तथा ट स्वप्नवासवदत्तस्-ा -ौगन्धरा-णः,रूमवान् एवं वासवदत्त-ाः स्थानं सर्वोपरि। -ौगन्धरा-णः स्वपत्-ुः वत्सराजउद-नस्-ा हितकरणार्थं सर्वदा प्र-त्नशीलः-

**नवं शरावं सलिलैः सुपूर्णं सुसंस्कृतं दर्भ कृतोत्तरी-म्।**
**तत्तस्-ा मा भून्नरकं स गच्छद् -ो भर्तृपिण्डस्-ा कृते न -ुद्धते।।**

भासस्-ा सर्वश्रेष्ठपात्रि वासवदत्ता राज्-रक्षणार्थं -ौगन्धरा-णकर्तृक निर्मितं पुनःराज्-प्राप्तिगुप्त-ौजन-ाः प्रमुखाधारभूत्वा आत्मनः मृत्-ुसंवादं प्रेषित्वा पतिवि-ोगं स्व-ं स्वीकृत्-ा दासीवृत्तिकृत्वा राष्ट्रं प्रति अलौकिकनिष्ठां दर्शि-तवती।

कालिदासी-ग्रन्थेषु राष्ट्रभावना-

कालिदासस्-ा नामोच्चारेण सह संस्कृतसाहितस्-ा सर्वौत्कृष्टरचनानां नामानि मनसि आगच्छन्ति। तस्-ा कृतिषु प्रकृतिवर्णना- प्रेमवर्णनादि आलोचना वारं वारं -ातम्। परन्तु तस्-ा राजनैतिकचिन्ताधारा अपि उत्कृष्टम्। महाकविकृत रघुवंशे मनु-दिलीप-रघु-अज-दशरथ-श्रीरामादीनाम् आदर्श वर्णनम्, -ेषाम् अनुकरणेन न केवलं भारती-राज्-व्-ावस्था अपि तु विश्वशानपद्धतिं प्रेरितं भवति। राष्ट्रि-ा आदर्शाभिव्-ाक्तिवर्णनेन सू-र्विंशी-ालोचना प्रशंसनी-ा- आसमुद्र-क्षितीशान्तमानाक-रथवर्त्मनाम्.....-थापराध-दण्डानां -थाकाल- प्रबोधिनाम्। त्-ागा-ा संभृतार्थानां सत्-ा-ा मितभाषिणाम्। -शसे विजिगीषूणां प्रजा-े गृहमेधिनाम्।.......वार्धक्-े मुनिवृतीनां -ोगेनान्ते तनुत्-जाम्। रघुणामन्व-ं वक्षे (रघुवंशम् १/५-९)। अत्र वर्णित राष्ट्रि-ा समृद्धि- राष्ट्रि-ा एकता- राष्ट्रि-ा गौरवम् उत्कृष्टराष्ट्रभावना-ाः प्रतीकम्।

शाकुन्तलस्-ा द्विती-ाङ्के दुष्-न्तस्-ा कृते प्र-ुक्तं राजर्षिः शब्दम्, एकः उत्तमराज्ञः चिह्नम्। षष्ठाङ्के अपुत्रकस्-ा सम्पत्त्यावण्टनविष-े राज्ञः मतादर्शः राष्ट्रपिताइति शब्दस्-ा श्रेष्ठविमर्शः-

**-ेन -ेन विषुज्-न्ते प्रजाः सिग्धेन बन्धुना।**
**स स पापादृते तासां दुष्यन्त इति घुष्-ताम्।। (अभिज्ञान-शाकुन्तलम्-६/२३)**

मृच्छकटिके राजसत्ता-

मृच्छकटिक-तत्कालीन-समाजस्-ा निकृष्टशासनसत्ता-ाः प्रकृष्टोदाहरणम्। उदण्डता- शोषणादि वर्णनेन शुद्रकः राजसत्ताजन्-सुखभोक्ता राज्ञः दर्शनं प्रदर्शितवान्। प्रतिना-करूपेण राजश्-ालकशकारस्-ा स्वेच्छाचारिता- क्षमता-ाः अपप्र-ोगम् स्त्रिजात्-ादि अवमानना सर्वं दृश्-ते। कलि-ुगस्-ा प्रतिच्छविरूपेण चित्रितं काव्-मेतत्।

भारवी-ा राष्ट्रभावना-

महाभारतस्-ोपजिव्-ं किराताज्र्जुनी-े कपटइतक्रीडा-ां हृतसर्वस्-ा वनवासिना -ुधिष्ठिरकर्तृक प्रेरितः वनेचरस्-ोक्तिः उत्तमराज्ञः परिचा-कः-.... न विव्-थे तस्-ा मनो न हि प्रि-ं प्रवुक्तमिच्छन्ति मृषा हितैषिणः( किराताज्र्जुनी-म,१/२)। निष्ठावानसेवकरूपेण वनेचरेण उक्तम्-

**क्रि-ासु -ुक्तैर्नृप चारचक्षुषो न वञ्चनी-ाः प्रभवो नुजीविभिः।**
**अतोर्हसि क्षन्तमसाधु साधु वा हितं मनोहारि च दुर्लभं वचः।।(पुर्व, ४)**

पुरस्कार-दण्डादिव्यवस्था प्रजाहितार्थम् आवश्यकम्। द्रोपदीकर्तृक वर्णित: कूटनीति: अपि राष्ट्रहिताय आवश्यकी।

एतादृशि बहुनि काव्यानि महाकाव्यानि उत्तमोनुत्तमं राजव्यवस्थाया: परिचायका:। एतत् तु अस्माकं उपरि यत् अस्माभि: किम् ग्रहणीयम्। श्रीमति इन्दिरागान्धिकृत:- आर्यभट्टउपग्रहस्य स्थापनम्, परमाणु परीक्षणम्, जोटनीरपेक्षनीति तथा विदेशनीती:, चतुर्दश:-कोषागाराणां राष्ट्रीयकरणं , वांलादेशस्यमुक्ति-युद्धे तस्या: भूमिका ताम् तस्मिनृसमयस्य श्रेष्ठराष्ट्रप्रधानरूपेण दर्शयते। परन्तु तस्या: हत्या तस्या: कार्यावलीं उपरि प्रश्नचिह्नं उत्थापयति।

वस्तुत:, वारं वारं राजसिंहासनं प्राप्य देशोन्नति सहित: राजशासकस्य स्वेच्छाचारिता प्रकाशे आगच्छति। ब्रिटिशशासनव्यावस्था वा प्रजातन्त्र सर्वत्र एकमेवचित्रम्। अधुना राजतन्त्रस्य समस्या: प्रजातन्त्रे अधिकमात्रायां प्रतिफलित:। याज्ञवल्ककृतव्यवहाराध्याये वर्णितशासनतन्त्रस्य किञ्चितापि यदि अधुना प्रयुक्तं तर्हि भारत: विश्वदरबारे श्रेष्ठासनम् अवश्यमेव प्राप्तुं शक्तोति।प्राक्कालात्मेव शासनार्थ शिक्षावश्यकम्। वंशानुक्तमेन प्रचलित तन्त्रेपि राजकुमारस्य राजशिक्षाया: प्रचलनमासीत्। महाभारते द्रोणाचार्यस्य भूमिका तस्या प्रमाणस्वरूपमा। मनुसंहितायाम्-

**त्रैविद्येभ्यस्त्रयीं विद्याद् दण्डनीतिञ्च शास्वतीम्।**
**आन्वीक्षिकीञ्चात्मविद्यां वार्तारम्भांश्च लोकत:।(मनुस्मृति-७/४३)**

इन्द्रियाणां विषयासक्तिवारणाय भूपति: राज्यशासनं कर्तुं शक्रोति। एतत्सर्वम् अधुना एव प्रयोज्यम्।

संस्कृत- साहित्य में राष्ट्रिय भावना- डा. हरिनारायण दीक्षित, पृ. २२, प्रकाशक- देववाणी-परिषद्, दिल्ली, १९९२।

ऋग्वेद संहिता भाग-१, गौतम राहुगण ऋषि, विश्वदेवा देवता,पृ.१२५, VEDhindi pdf rigved. Naveen Yadav, Jotram.com.

ऋग्वेद संहिता भाग-१, दीर्घतमा औचथ्य ऋषि, विश्वदेवा देवता, पृ.२४७,ॐम्प्हृ ॐगुन्. ॅनाह ॅ, व्र्दूस.म्दस.

ऋग्वेद संहिता भाग-१, अगस्त मैत्रावरुणि ऋषि, अप्तृण सूर्या देवता,पृ.२८८,ॐम्प्हृ ॐगुन्. ॅनाह ॅ,व्र्दूस.म्दस.

अथर्ववेद:(शौनकीय:)-विश्वबन्धुनासम्पादित:(२यो भाग:), पृ-६६१,विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,होशिआरपुरम्.१९६१।

अथर्ववेद:(शौनकीय:)-विश्वबन्धुनासम्पादित:(२यो भाग:), पृ-८४३,विश्वेश्वरानन्द-वैदिक-शोध-संस्थानम्,होशिआरपुरम्.१९६१।

गरुडपुराण-पुराण सेग्रह-३-ड. गौरीनाथ शास्त्री,पृ-३१०, नवपत्रप्रकाशन, कलकाता-७०००७३,१९८४।

श्रीमद्वाल्मीकि-रामायण(अयोध्याकाण्डम्)-चतुर्वेदी द्वारकाप्रसाद शर्मा, पृ-१०३१,रामनारायण लाल पब्लिशर और वुकसेलर, इलाहावाद,१९२७।

मनुसंहिता(सप्तमोऽध्याय:)-डा. अनिलचन्द्र वसु, पृ-८, संस्कृत वुक डिपो,कलिकाता-६, २००९।

मनुसंहिता(सप्तमोऽध्याय:)-डा. अनिलचन्द्र वसु, पृ-११, संस्कृत वुक डिपो,कलिकाता-६, २००९।

कौटिलीय अर्थशास्त्र- ड. अनिलचन्द्र वसु, पृ.- ७७, संस्कृत वुक डिपो, कोलकाता-६,२०११।

स्वप्नवासवदत्तम्- अध्यापक श्री यदुपति त्रिपाठी, पृ-२७२, वि.एन. पाब्लिकेशान्, कोलकाता,७३, २०१६।

रघुवंशम्(प्रथम: सर्ग:)-ड. देवकुमार दास, पृ.-४०, सदेश,१०१वि, विवेकानन्द रोड, कलकाता-६,२०१६।

अभिज्ञान-शकुन्तलम्- ड. अनिलचन्द्र वसु, पृ-४९६, संस्कृत वुक डिपो,कलिकाता-६,२०१०।

किरातार्ज्जुनीयम्(प्रथम: सर्ग:)- अनिलचन्द्र वसु, पृ.-७२, संस्कृत वुक डिपो, कलकाता-६,२००८।

किरातार्ज्जुनीयम्(प्रथम: सर्ग:)- अनिलचन्द्र वसु, पृ.-८१, संस्कृत वुक डिपो, कलकाता-६,२००८।

मनुसंहिता(सप्तमोऽध्याय:)-डा. अनिलचन्द्र वसु, पृ-२०, संस्कृत वुक डिपो,कलिकाता-६, २००९।

सन्दर्भग्रन्थसूची-

१. अभिज्ञानशकुन्तलम्-डा. वसु अनिल चन्द्र- संस्कृत वुक डिपो, कलिकाता,७००००६,२०१०।

२. किरातार्ज्जुनीयम्(प्रथम: सर्ग:),-डा. वसु अनिल चन्द्र- संस्कृत वुक डिपो,२८/१,विधान सरणी,

कलिकाता-७००००६-२००८।
३. कौटिली-ा अर्थशास्त्र-डा. वसु अनिल चन्द्र- संस्कृत वुक डिपो, २८/१, विधान सरणी, कलिकाता-७००००६-२०११।
४. रघुवंशम्(प्रथम: सर्ग:)-ड. दास देवकुमार-सदेश,१०१वि, विवेकानन्द रोड, कलकाता-७००००६,२०१६।
५. वाल्मीकि रामा-ाण मे नीतितत्व- श्रीमती गुप्ता -ागेन्द्री- अनुराधा प्रकाशन, मेरठ,२५०००२,१९९९।
६. वाल्मीकि रामा-ाण मे राजनीति-डा. चतुर्वेदी शिवदत्त- हंसा प्रकाशन, ज-ापुर, २०१०।
७. मनुसंहिता (सप्तमोध्-ाा-ा:)- डा. वसु अनिल चन्द्र- संस्कृत वुक डिपो,२८/१, विधान सरणी, कलिकाता-६,२००९।
८. महाभारतमे वर्णित राज्-ा के नीतितत्व- डा. नारंग मंजु- ईस्टर्न वुक लिंकर्स. दिल्ली,११०००७,२०१३।
९. -ाज्ञवल्क्-ास्मृति का व्-ाावहारिक एवं सौद्धांन्तिक पक्ष- आर. डि. पाण्डे-ा- सत्-ाम् पब्लिशिंग हाऊस- मोहन गार्डन, नई दिल्ली, ११००५९,२००७।
१०. श्रीमद्वाल्मीकि-रामा-ाण(अ-ाोध्-ााकाण्डम्)- चतुर्वेदी शर्मा द्वारकाप्रसाद- रामनारा-ाण लाल पब्लिशर और बुकसेलर,इलाहावाद, १९२७।
११. समाज दर्शन और राजनीति-डा. मौर्-ा श्-ाामवृक्ष:- सत्-ाम् पब्लिशिंग हाऊस- नई दिल्ली-११००५९, २००९।
१२. स्वप्नवासवदत्तम्-अध्-ाापक श्री त्रिपाठी -ादुपति- वि.एन. पाब्लिकेशन्, २/१ श्-ाामाचरण दे स्ट्रीट, कलकाता-७०००७३,२०१६।
१३. स्मृतिनिबन्धमाला-प्रो. त्रिपाठी श्रीपति- महावीर प्रेस, भेलूपुरा,वाराणसी- २०१५।
१४. संस्कृत साहित्-ा मे राष्ट्री-ा भावना- डा. दीक्षित हरिनारा-ाण:- देववाणी- परिषद्,- दिल्ली,११००५८- १९९२।

शोधच्छात्रा,साहित्-ाविभाग:
केन्द्रीयसंस्कृतविश्वविद्यालय:, श्रीसदाशिवपरिसर:,पुरी ।



# महाकविकालिदासकाव्येप्रकृतिवर्णनम्

सञ्जिवकुमारदाश:

### ❖ प्रस्तावना–

अतिविपुलं किलसंस्कृतवाङ्मयं चत्वारो वेदा:, षड्वेदाङ्गानि, पुराणानि, दर्शनानि, आयुर्वेद:,धनुर्वेद:, गान्धर्ववेद:, अर्थशास्त्रम्,कामशास्त्रमित्यादीनि सर्वाण्यपि शास्त्राणि संस्कृतवाङ्मये अन्तर्भूतानि। अस्य विपुलत्वं प्रमाणयन्ति। किञ्च, संस्कृतवाङ्मयगतं संस्कृतसाहित्यमपि विश्वसाहित्ये प्राचीनतमं विपुलतमं च। वेदा:, पुराणानि, उपनिषद:, रामायणमहाभारतादीनि महाकाव्यानि, गद्यकाव्यानि, रूपकाणि, चम्पूकाव्यानि, गीतिकाव्यानि, खण्डकाव्यानि, स्तोत्रकाव्यानि, प्रकीर्णकाव्यानि, मुक्तकानि च संस्कृतसाहित्ये गृहीतानि भवन्ति। अद्यापि बहुप्रकारै:संस्कृतेन विरच्यमानं साहित्यं संस्कृतसाहित्यस्य आयतिं वर्धयति। अत: संस्कृतसाहित्यस्य महत्त्वं सुतरां वरीवर्ति।

संस्कृतवाङ्मये साहित्यशास्त्रं सहृदयानां हृदयाऽऽह्लादकारकं वर्तते। अत: आह्लादप्राप्तुं कवय: मनीषिण: च साहित्यशास्त्रस्य रचनां कारयामासु:। सहितयोर्भाव इति साहित्यम्। साहित्यं भवति समाजस्य दर्पण: । पुन: साहित्यं समाजस्य हितसाधनं करोति । कवि: स्वीयनैसर्गिकप्रतिभया समाजे यत्किमपि भवतिन तत्सर्वं दृष्ट्वा अनुभवञ्च कृत्वा स्वकीयं काव्यं निर्मांति । साहित्यं नाम समाजतत्त्वम्। कविर्भवति समाजस्य पथप्रदर्शक: । समाजे जना: साहित्यं पठन्ति चेत्काव्यस्य प्रभावेण समाजस्य हितसाधनं भविष्यति, यथा सूर्यकिरणमाध्यमेन अन्धकार: दूरी भवति, तथैव काव्याध्ययनेन

समाजे विद्यमानानां कुसंस्काराणां अपसारणं भवन्ति ।

❖ **संस्कृतसाहित्यकारेषु कालिदासः-**

कविकुलगुरुकालिदासःनकेवलं संस्कृतसाहित्ये अथवा न केवलं भारते प्रसिद्धःअपितु विश्वसाहित्ये, समग्रे विश्वे चसहृदयानां हृदयं कविश्रेष्ठरूपेण अधिरोहति। यद्यपि संस्कृतसाहित्ये भारवि-माघ-श्रीहर्ष-रत्नाकर-भवभूतिसदृशाः कवयः स्वस्वकाव्यवैशिष्ट्यद्वाराप्रथन्ते, तथापि कालिदासः तेषु अग्रगण्यः वर्तते। कालिदासकवितायाः सकृदपि आस्वादनेन सहृदयः तस्य कवितासौन्दर्यं न विस्मरति। अतः कालिदासस्य श्रेष्ठता निर्विवादा एव। तदुक्तं कालिदासप्रशस्तौ यथार्थतः -

**पुराकवीनां गणनाप्रसङ्गे**
**कनिष्ठिकाधिष्ठितकालिदासः।**
**अद्यापि तत्तुल्यकवेरभावा-**
**दनामिकासार्थवतीबभूव**

❖ **कालिदासस्य समयः -**

कालिदासस्य स्थितिसमये विदुषां परस्परम् ऐक्यमत्यं नास्ति। स्वयमपि कालिदासः स्वस्य निरभिमानितया कुत्रापि आत्मपरिचयं प्रत्यक्षतः परोक्षतः वा नलिखति। अतःसमीक्षकाःस्वस्वानुमानेन कालिदासस्य समयं पुरस्कुर्वन्ति। ईशपूर्वद्वितीयशतके कालिदासो बभूवेति प्रसिद्धःसमीक्षकः डॉ.कुन्हनराजा अभिप्रयति। ईशातःडविंशतिवर्षेभ्यः पूर्वं विक्रमसंव त्संस्थापकः उज्जयिनीनरेशः विक्रमादित्यसंज्ञकः कालिदासस्य आश्रयदाता आसीदिति ईशपूर्वप्रथमशतकमेव कालिदासस्य समय इति केचन वदन्ति। रघुवंशस्थकतिपयश्लोकानामाधारेण कालिदासः ईशवीयतृतीयशतके अभूदिति प्रसिद्धज्योतिःशास्त्रविचारकैः केतकरमहोदयैःभणितम्। आचार्यके.वी.पाठकमहोदयानुसारेण रघुवंशस्य कतिपयश्लोकानां प्रमाणेन कालिदासः ईशवीयपञ्चमशतके स्थित आसीत्।एतादृशानि अनेकमतानि कालिदाससमयनिर्धारणे समीक्षकैःप्रदर्शितानि। परन्तु अद्यापि कालिदासस्य कालनिर्धारणं न स्पष्टतया प्रमाणितं विद्यते।

❖ **कालिदासस्य कृतयः -**

यद्यपि अनेकेषां ग्रन्थानां रचयितृत्वेन कालिदासस्य नाम विद्यते, तथापि सप्त एव कृतयः कालिदासेन रचिता इति समीक्षकाः प्रमाणयन्ति। ताःसप्त यथा - १.कुमारसम्भवम् २.रघुवंशम् ३. अभिज्ञानशाकुन्तलम् ४.विक्रमोर्वशीयम् ५.मालविकाग्निमित्रम् ६. ऋतुसंहारम् ७.मेघदूतम्

❖ **महाकविकालिदासस्य ग्रन्थे प्रकृतिवर्णनम्–**

साम्प्रतम्आधुनिके भौतिकवादीयुगे जनाःप्रकृतिं विस्मरन्ति। प्रकृतिः मानवस्य सहचरी तथा च साक्षात्परमात्मनः रूपम् एवं च प्रकृत्या सह तादात्म्य-सम्बन्धः भवति चेत्परमानन्दस्य प्राप्तिःभवति। विश्वकविकालिदासेन स्वीयकाव्ये प्रकृतिचित्रणस्य दृश्यावल्याः सजीव-साक्षात्रूपेण वर्णितम्।

**१. ऋतुसंहारम्**

ऋतूनां संहारः समुदायः वर्णितः यस्मिन्तत् इति विग्रहः। ऋतुसंहारम् एकं खण्डकाव्यमस्ति। अत्र ग्रीष्मात्आरभ्य वसन्तं यावत्षण्णां ऋतूनां रमणीयैः पद्यैःवर्णनं विद्यते। वर्णनं च एषामत्यन्तं प्राकृतिकमेव।

महाकविकालिदासेन स्वीयकाव्ये नाटके च प्रकृतेःनिरूपणं कृतम्। परन्तु स्वतन्त्ररूपेण ऋतुसंहारे प्रकृतेःचित्रणं वर्णितम्। ऋतुसंहारे कविना बाह्यसौन्दर्याणामपेक्षया मानवानामुपरि प्रभावितानां तत्त्वानाम् अधिकाधिकंवर्णनं कृतंतथा च ऋतूनां स्वतन्त्रचित्रणं कवेःप्रकृतिप्रेम्णःद्योतकं भवति। ऋतुसंहारस्य प्रथमपद्ये ग्रीष्मऋतोःसजीवचित्रणं वर्तते। यथा–

**"प्रचण्डसूर्यः स्पृहयणीयचन्द्रमाः सदावगाहक्षतवारिसञ्चयः।**
**दिनांतरम्योऽभ्युपशांतमन्मथो निदाघकालोऽयमुपगतः प्रिय** "[१]

यदि पृथिव्या: तथा स्वर्गलोकस्य समग्रसौन्दर्यं, लावण्यं रमणीयताम्एवमेव नाम्ना व्यक्तकर्तुमिच्छति चेत्कलाया: अतलस्पर्शानुभूते प्रामाणिकं नाम **ऋतुसंहारम्** अनेन कथनेन सर्वं स्पष्टं जायते यत्महाकवे:प्रथमरचना। यस्मिन्अनायासेन प्रकृते:अनेकानेकचित्रं परिलक्ष्यते। यथोक्तम्–

**"विपांडूरंकीटरजस्त्रिन्नावितमंभुजंग्वाद्रकगतिप्रसर्पितम्"।**

अर्थात्वृष्टे:जलं गृहस्य भित्युपरि प्रथमवारं वक्ररेखा अङ्कयित्वा शुष्कपत्राणामुपरि गच्छतितदा भुजङ्ग: वने विचरणं करोति इति प्रतिभाति।

**२. मेघदूतम्–**

मेघ एव दूत: यस्मिन्तत्इति विगत:। मेघदूतमपि कालिदासकृतमपूर्वं खण्डकाव्यमेकमस्ति। मेघदूतं पूर्वमेघ:, उत्तरमेघश्चेति द्विधाविभक्तम्।पूर्वमेघे ६७ पद्यानि, उत्तरमेघे च ५५ पद्यानि सन्ति। मेघदूते मेघप्रवाहद्वारेण राष्ट्रस्य समग्रभौगोलिकीस्थिति:कालिदासेन प्रदर्शिता वर्तते। परन्तु कवि:वस्तुविधानं रुचिपूर्णकाल्पनिकदृष्ट्या करोति। यक्ष: कश्चित्कुवेरस्य वर्षभोग्येण शापेन अलकापुरीस्थीता प्रियया विरहित:रामगिरे:आश्रमेषु निवसति। तत्र आषाढस्य प्रथमदिवसे नवीनंमेघमाकाशे वीक्ष्य दूरस्थिताया: प्रियाया: निकटे कुशलसमाचारं प्रापयितुं तम्अनुरुणद्धि। तस्य मार्गे आगतानां स्थानानां रमणीयं वर्णनमपि तन्मुखेन दर्शयति कवि:।

मेघदूतेऽपि प्रकृते:अनुपमं वर्णनस्य दृश्यम्अत्यन्तं प्रभावयति। कश्चित्यक्ष: यदा पर्वतशिखरे मेघं पश्यति तदास: अस्य मेघस्योपरि अत्यन्तं प्रभावितमभवत् एवं तस्मिन् समये यक्ष्य: उक्तवान्-

**"धूमज्योतिस्सलिलमरुतां संनिपात:क्वमेघ:,**
**सन्देशार्था:क्वपटुकरणै:प्राणिभि: प्रापणीया:।**
**इत्यौत्सुक्यादपरिगणयन्गुह्यकस्तं ययाचे,**
**कामार्ताहिप्रकृतिकृपणास्चेतनाचेतनेष** "[२]

एवं प्रकारेणधूम:, अग्नि:, जलम्, वायु: आदि समन्वितरूपं मेघस्य महाकविकालिदासेन वर्णितं मन्यते यथा अम्बरे मेघ: स्वयमेव पर्वतशिखरेणैव सजीव्यते। न केवलं मेघ:अपितु मानचित्रत: हिमालयस्य तराईत:अलका पर्यन्तमपि वर्णनं कालिदासेन प्रकृते:विभिन्न क्षेत्राणां वर्णनम्एतादृश: हृदयस्पर्शी कृतं यत्पाठका:आत्ममुग्धा: भविष्यन्ति।

**३. कुमारसम्भवम्–**

कुमारस्य कार्तिकेयस्य सम्भव: यस्मिन्तत् इति अस्य विग्रह:।इदमेकं महाकाव्यम्।कुमारसम्भवे सप्तदशसर्गा:सन्ति। अत्र शिव: नायक:, पार्वती च नायिका। अङ्गी रस: शृङ्गार:। पार्वती-शिवयो: प्रणयात्उत्पन्न:कुमार: कार्तिकेय: स्वर्गे उपद्रवकारिणं तारकासुरं हन्तीति अयमेव संक्षिप्त:विषय: अस्य महाकाव्यस्य।

यदि वयं महाकविकालिदासस्य कुमारसम्भवस्य अध्ययनं कुर्म: चेत् तत्र तेन प्रकृतिचित्रणं प्रथमसर्गस्य प्रथमश्लोके यथा –

**अस्त्युत्तरश्यां दिशिदेवतात्मा हिमालयो नामनगाधिराज:।**
**पूर्वापरोतोयानिधिवगाह्य स्थित: पृथिव्या इवमानदण्ड:**[3]

श्लोकेऽस्मिन्कविना हिमालयस्य सुमनोहरविशदचित्रणं वर्णितम्। प्रकृतिमापनाय विशालशुभ्रदण्ड इव हिमालयस्य तुलना कविना कृता।

कुमारसम्भवे कविकालिदासेन भगवन्त:शिवस्य महिमामयस्वरूपदर्शने प्रकृतिचित्रणं वर्णितम्।

**४. रघुवंशम्-**

रघो:वंश:वर्णित: यस्मिन्तत्इति अस्य विग्रह:। इदमेकम्ऐतिहासिकमहाकाव्यम् अस्मिन्एकोनविंशतिसर्गा:सन्ति। अत्रइक्ष्वाको: आरभ्य अग्निवर्णं यावत्समेऽपि रघुवंशीया राजान: क्रमेणवर्णिता:सन्ति। अस्मिन्महाकाव्ये दिलीपस्य

पुत्रप्राप्ति:,रघो: दिग्विजय:, इन्दुमत्यीस्वयंवर:, रामचरितं चेत्यादिविषया विशेषतोवर्णिता:सन्ति ।

रघुवंशं कालिदासस्य अनुपमाकृति:। रघुवंशस्य रचनाशैलीतावती गङ्गारूपां स्रोतसदृशावर्तते। रक्तसमुद्रे कवय: भासमाना:सर्वदा प्रतीयन्ते। रघुवंशस्य द्वितीयसर्गस्य श्लोक: –

**"पुरस्कृतावर्त्मनिपार्थिवेन प्रत्युद्गता पार्थिवधर्मपत्न्या।**
**तदन्तरेसाविरराज धेनुर्दिनक्षपामध्यगतेव सन्ध्याe** "४

श्लोकेऽस्मिन्राजादिलीप:तथाधर्मपत्नीसुदक्षिणा इत्यनयोर्मध्ये नन्दिनीगो: चरित्रचित्रणम्एतादृशंवर्तते, यथा दिवसरात्रयो: मध्ये सन्ध्याकालीन लालिमासदृशा। एतादृशं चरित्रचित्रणंकेवल अद्वितीयकविकुलगुरुकालिदास: एवकर्तुं शक्नोति।

**५. अभिज्ञानशाकुन्तलम्-**

अभिज्ञानेनगृहीताशकुन्तला यस्मिन्तत्इतिविग्रह:। इदमस्तिविश्वप्रसिद्धनाटकम्अस्मिन्सप्त अङ्का:सन्ति। अत्र शकुन्तला-दुष्यन्तयो: प्रणयगाथा नाटकीयशैल्या वर्णितावर्तते। अत्र नायिका-नायकयो: नाटकादौमेलनंततोविरह:, अन्ते च पुनर्मेलनम्इतिसुखान्तमिदंनाटकम्, शृङ्गारोऽत्र अङ्गीरस:। कण्व:, अनसूया, प्रियंवदा, शार्ङ्गरव:, शारद्वत:, मारीच: इत्यादय: प्रमुखपात्राणिसन्ति।

नाटकेऽस्मिन्प्राकृतिकसौन्दर्यस्य अनुपसादृश्यं वर्णितम् अभिज्ञानशाकुन्तलस्य नायिका अप्रतिमसुन्दरीशकुन्तलासाक्षात्प्रकृते:पुत्रिस्वरूपा प्रतियते। तपोवनस्य मृगाणां-लतापादपानां-पशुपक्षिणांप्रति तस्या हृदयं बान्धवस्नेहेनप्लावितंभवति। तपोवनस्य पावनप्रकृत्या: पालितनिसर्गकन्या शकुन्तला यदा आश्रमेतरुणामुपिरजलंसिञ्चतितदा आश्रमस्य वृक्षाणांप्रति शकुन्तलाया: स्नेह:सहोदरएवप्रतिभाति।

**६. मालविकाग्निमित्रम्-**

मालविका च अग्निमित्रश्च नायिकानायकौ यस्मिन्तत्इतिविग्रह:। इदमेवएकंनाटकम्अत्रविद्यन्ते पञ्चाङ्का:। अत्र मालविकाग्निमित्रयो: नायिकानायकयो: प्रणय: चित्रितोवर्तते। गणदासस्य सङ्गीतशालायां मालविकां विलोक्य अग्निमित्रस्य अनुराग:उत्पद्यते। अन्तिमाङ्के मालविकाऽग्निमित्रयो: विवाह:सम्पद्यते। धारिणी-गणदास-परिचारिका:-विदूषकादय: अत्र अन्यपात्राणि भवन्ति। अङ्गा रसोऽत्र शृङ्गार:। सुखान्तमिदंनाटकम्।

**७. विक्रमोर्वशीयम्-**

विक्रमश्च उर्वशी च नायकनायिके वर्णिते यस्मिन्तत्इदमपिएकनाटकम्।अत्रसन्ति पञ्चाङ्का:। उर्वशी-पुरुरवसो: प्रणयगाथा अत्रवर्णिता। पुरुरवसा दैत्यात्उर्वश्या: रक्षणकारणात्तंप्रति तस्या अनुरागउत्पद्यते। परस्तात्द्वयो: एक:पुत्र: जायते। इन्द्रस्याज्ञया उर्वशी एतस्य जन्मन:समाप्तिं यावत्पुरुरवस:निकटेनिवसतीतिनाटकमिदंसुखान्तं पर्यवसति। अङ्गी रसोऽत्र शृङ्गार:। राक्षस-विद्याधरकुमारी-परिचारिका-इन्द्रादीनिअत्र अन्यपात्राणि। नाटकेऽस्मिन्प्रथमे अङ्के –

**"आविर्भूतेशशिनी तमसामुच्यमानेव रात्रि:।**

अत्र चन्द्रमुदितसमये एवं रात्र्यन्धकाराच्छन्नआवरणात्बहिरागच्छति।तथा धूम्रस्यावरणं क्रमश: अदृश्यं भवति।तथा नद्यां पतिते प्रकृते: अभिव्यक्तिं प्रदर्शयति। इदमपि अन्यत्र दुर्लभम्।

❖ **निष्कर्ष: –**

महाकविकालिदासेन स्वस्य काव्येषु नाटकेषु च प्राकृतिकदृश्यानाम् एवं चित्रणं कृतं यस्य सौन्दर्यम् अद्भुतंच वर्तते। कालिदासस्य सौन्दर्यदृष्टिरपि भारतीयसंस्कृते: मूल्यानाम्आदर्शानाञ्च अनुरूपं पवित्रा तथा उदारा। तपस्या द्वाराअर्जितं सौन्दर्यमेव महाकविकालिदासस्य साफल्यं मन्यते।कालिदासस्य साहित्यस्य सौन्दर्यं तथा तस्य सौन्दर्यदृष्टिरनुपमा अतुलनीया। यस्य अनुकिर्त्तनं बहुकालात्पूर्वं भवतिस्म तथा अग्रेऽपि सदैव भविष्यति।

**सन्दर्भग्रन्थसूची**

१. संस्कृतसाहित्येतिहासः - आचार्यारामचन्द्रमिश्रः, चोखम्बाविद्याभवनम्, वाराणसी, १९८८
२. मेघदूतम् - सत्यनारायणचक्रवर्त्ती, संस्कृतपुस्तकभण्डारः, २०११
३. ऋतुसंहारम् - शिवप्रसादद्विवेदी, चौखम्बासुरभारतीप्रकाशनम्, वारणासी
४. रघुवंशम् - डॉ. श्रीकृष्णमणित्रिपाठी, चौखम्बासुरभारतीप्रकाशनम्, २०१२
५. कुमारसम्भवम् - Edited by C.R. Devadhaer, Motilal BanaerasiDass Publishers Pvt. Ltd., Delhi
६. अभिज्ञानशाकुन्तलम् - सत्यनारायणचक्रवर्त्ती, संस्कृतपुस्तकभण्डारः, २०११
७. विक्रमोर्वशीयम् - कालिदासग्रन्थावली, डॉ. ब्रह्मानन्दित्रपाठी, चौखम्बासुरभारतीप्रकाशनम् १९९६
८. मालविकाग्निमित्रम् - Edited by KashinathPandueranga Paerab, NiernayasagaerPeress, Mumbai, 1924


**(Footnotes)**

[1]ऋ.सं.-१/१ [2]मे .दू.- १/५
[3]कु.स.-१/१ [4]रघु.-२/२०


शोधच्छात्रः,साहित्यविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः, पुरी,




# माठरवृत्तिदिशा दुःखस्वरूपम्

सुमित्रा पण्डा

भारतीयदर्शनानां मुख्यप्रयोजनं वर्तते अज्ञानस्य दूरीकरणेन मोक्षप्राप्तिः एव। अतः विविधेषु दर्शनेषु मोक्षस्य नाम अपि विविधभूत्वा अस्ति। मोक्षं कैवल्यम् अपवर्गः आर्हतः ईश्वरप्राप्तिः प्रभृति नाम्नाः दार्शनिकाः कथ्यन्ते। देहस्य नाश्यैव मोक्षपदवाच्यो केचन वदन्ति। अपि च केचन सम्यक्ज्ञानेन सम्यक् चरित्रेण सम्यक्दर्शनिन च आर्हतप्राप्तिः मोक्षः वदन्ति। अत्र सांख्याचार्याः वदन्ति दुःखानामात्यन्तिकनिवृत्तिरेव मोक्षः। अतः मनसि शंका भवति दुःखं नाम किम्? कानि दुःखानि भवन्ति? किं तेषां स्वरूपम्? दुःखस्य निवृत्यर्थं सांख्यस्य कः उपायो विद्यते। इदृशानां प्रश्नानां समाधानानार्थं सांख्यकारिकाकारः ईश्वरकृष्णः प्रथमकारिकायामुच्यते यत्–

**दुःखत्रयाभिघात्जिज्ञासा तदपघातके हेतौ।**
**दृष्टे साऽपार्था चेन्नैकान्तात्यन्तोऽभावात्।।**[1]

अस्याः कारिकायाः निरूपणप्रसङ्गे माठरवृत्तिकारैःउक्तं यत् भगवान् महर्षिः कपिलः धर्मज्ञानवैराग्यैश्वर्यसम्पन्नः आसीत्। भगवतः पञ्चमावतारभूतः कपिलः देवहूतीकर्दमयोः पुत्रः आसीत्। भवव्याधेः ज्ञानचिकित्सकमाध्यमेन निराकरणाय अविद्यान्धकारप्रध्वंसनाय अस्य जन्म बभूव। दुःखदौर्मनेषु निमग्नान् जनान् विलोक्य अस्य मनसि करूणा उत्पन्ना। तदा सः चिन्तयति इदम् जगत् अनादिकालात् स्वतः अविद्यान्धकारे निमग्नं विद्यते। अविद्यायां निमग्नस्य अस्य जगतस्यः उद्धारराथं मनसि विधाय चिन्तया निमग्ना आसीत्।[2]स एव विचिन्तयन् आसुरिसगोत्रं ब्राह्मणविशेषं ब्रह्मोपदेशविद्यां दत्तवान्। तैः उक्तं

यत् – भो भो आसुरे रमसे गृहस्थधर्मेण, आसुरि उवाच – रमे भो।[३]

आसुरेः ऋषेः पार्श्वे ईषद्विवेकः ईषद्वैराग्यं च विद्यते इति ज्ञात्वा निर्गम्य पुनः द्वितीये वर्षसहस्रे पूर्णे प्रत्यागत्य तथैव उवाच भो भो आसुरे रमसे गृहस्थधर्मेण। आसुरि उवच – रमे भो। एवं तृतीयवर्षसहस्रे सम्पूर्णेऽपि आसुरिपार्श्वे आगत्य तथैव उक्तवान् कपिलेन उक्तं यत् कथं ? पुनः आसुरिणा उक्तम् – दुःखत्रयाभिघातात् इति। तदनन्तरं कपिलः अवदत् यत् दुःखत्रयाणाम् अभिघातस्य उपायं वक्ष्यामि तत् श्रृणु। दुःखत्रयाणां निवृत्तिः सांख्यशास्त्रेणैव कर्तुं शक्यते। तत्र दुःखत्रयं किम् इति प्रश्नेन भगवान् कपिल आह आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्चेति भेदात् त्रिविधं दुःखम्।

आध्यात्मिकं दुःखं द्विविधं शारीरीकं मानसिकं चेति। वाचस्पत्तिश्लेषणां देहधातूनां वैषम्याद् यत् दुःखमात्मनं शरीरमधिकृत्य ज्वरातिसारादिः वर्तते तत् दुःखं शारीरम्। प्रियवियोगादप्रियसंयोगाच्च मानसं दुःखं भवति। तथा च आत्मानं वा शरीरमधिकृत्य यद् दुःखं भवति तद् आध्यात्मिकम्। भूतानि अधिकृत्य यत् प्रवर्तते तत् आधिभौतिकदुःखम्। यथा मानुषपशुपक्षिसरीसृपस्थावरनिमित्तम् आधिभौतिकदुःखं भवति। देवमधिकृत्य यत् प्रवर्तते तत् आधिदैविकदुःखं यथा शीतोष्णवातवर्षादिकम्। एवं त्रिविधदुःखविषयेण जिज्ञासा आसुरिसगोत्रं समुत्पन्ना[४], स च ब्राह्मणः वदति, तेषां त्रयाणां दुःखानाम् अभिघातकः वा विनाशकः कः असौ हेतुः विद्यते ? एतानि दुःखानि किं शरीरे विद्यते ? आहोस्वित् शरीरात् व्यतिरिक्तः कश्चन जीवात्मा विद्यते। यस्य इमानि त्रीणि दुःखानि उत्पद्यन्ते, अस्य विनाशस्य उपायः अस्ति न वा ?

एतादृशं प्रश्नानां समाधानं कपिलः ददाति व्यक्ताव्यक्तज्ञविज्ञानात् इत्यनेन दुःखत्रयस्य निवृत्त्यर्थं त्रयः उपायाः सन्ति, यथा – लौकिकोपायः वैदिकोपायः सांख्यशास्त्रोपायश्च। आसुरिं प्रति महर्षि कपिलः उच्यते यत् दृष्टे साऽपार्था चेत्। चेदित्ययं अस्याशयः माठरवृत्तिकारैः विवच्यते यत् दृष्टे साऽपार्था चेदित्ययं निपातः शङ्कायाः वर्तते। इह लोके सकलसमुत्पन्नदुःखानां प्रतिकारोऽस्तेव, किं तदर्थं कपिलोपसर्पणेनेति भावः।[५] तमेव हेतुं दृष्टं दर्शयति शारीराध्यात्मिकानां ज्वरातीसारादिसकलव्याधीनां सन्त्येयवागदहङ्कारा अष्टाङ्गायुर्वेदविदो भिषजः कायशल्यशलाकाविषोन्मादक्लीवजराकुमारचिकित्सानिपुणाः। मानसस्याध्यात्मिकतापस्य प्रतीकारः प्रियवस्तुसंयोगादप्रियस्य दूरतः परिहरणाच्च। आधिभौतिकस्य तु ग्रामनगरादिकल्पनया प्रहणोपपत्तिः। आधिदैविकस्याभिवातयातप्रावरणावरणादिभिः। अतस्तदभिघातकारणात् किं कपिलोपसर्पणेन। तथा च लौकिकानामाभाणकः –

**अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।**
**इष्टस्य लीलया सिद्धौ को विद्वान् यत्नमाश्रयेत्।।**[६]

माठरवृत्तिग्रन्थस्य अयं आशयो विद्यते यत् शारीरिकदुःखनिवृत्तिः चिकित्सकमाध्यमेन कर्तुं शक्यते। मानसिकदुःखानां निवृत्तिः प्रियवस्तुसंयोगात् अप्रियवस्तुपरिहारात् एव भवतुमर्हति। आधिभौतिकस्य दुःखस्य ध्वंसः ग्रामनगरवासेभ्यः एव कर्तुं शक्यते। यथा व्याघ्रसर्पादिजन्यं यद् दुःखं तस्य निवृत्तिः नगरवासेनैव कर्तुं शक्यते। आधिदैविकस्य अग्न्यादिजन्यस्य दुःखत्रयस्य निवृत्तिः लौकिकोपायेनैव भवितुमर्हति तर्हि सांख्यशास्त्रस्य उपायो व्यर्थः। यतो हि गृहस्य कोणे एव मधुपदार्थस्य प्राप्तिः सम्भवति तर्हि किमर्थं मधुप्राप्त्यर्थं पर्वतं कश्चन गच्छेत् इति आसुरिमहाशयस्य जिज्ञासा अभवत्। अत्र सांख्याचार्यैः उच्यते – दुःखत्रयाणां निवृत्तिः लौकिकोपायेन न सम्भवति। अत एव तैः उच्यते यतश्चिकित्सकानां सुप्रयुक्तागदानां यथाशक्ति कदाचिज्जन्तुर्विपद्यते कदाचिज्जीवति। वैद्यगृहेऽपि वधूपुत्रकलत्रभ्रातृपितृप्रभृतीनामपरिहार्यमरणदर्शनान्नायमैकान्तिकप्रतीकार आध्यात्मिकस्य। अपरम्, अत्यन्ततोऽपि नासौ प्रतीकारः। अगदेन नीरूकृतानामपि ज्वरादीनां पुनः कतिपयदिवसैरूत्पत्तिदर्शनात्। अतः सर्वथा आत्यन्तिकोऽपि न दृष्टः प्रतीकारः कोऽपि दुःखानां प्रतीकारः समर्थः।

लोके ये चिकित्सिकाः लोभवशेन अधिकद्रव्यं प्राप्यते। स्वशक्तिख्यापनाय च स्वल्पमपि रोगं पुरस्ताद्वर्धयन्ति तेन रोगःअसाध्यतामाप्नोति तेषां कृते शास्त्रे उक्तम् –

वैद्य वैद्य नमस्तुभ्यं क्षपिताशेषमानव।
त्वयि विन्यस्तभारोऽयं कृतान्तः सुखमेधते।।[७]

उपरोक्तग्रन्थस्य विवेचनेन प्रतिभाति यत् शरीरस्य वा आध्यात्मिकदु:खस्य निवृत्ति: एकान्तिक: निवृत्ति: लौकिकोपायेन न भवितुमर्हति। कदाचित् स्यात् तथापि आत्यन्तिकनिवृत्ति: लौकिकोपायेन न सम्भवति। एमाधिभौतिकस्य आधिदैविकस्यापि कदाचित् निवृत्ति: न सम्भवति। सम्भवेऽपि आत्यन्तिकनिवृत्ति: लौकिकोपायेन न भवति। अत: लौकिकोपाय: त्याज्य:। अत्र केचन वदन्ति आनुश्रविकोपायेन दु:खस्य निवृत्ति: भवितुमर्हति। गुरूणोक्तं – पश्चाद् श्रृण्वोन्ति शिष्या इत्यतनुश्रवो वेद:। तत्र भव आनुश्रविक:। आनुश्रविकोपाय: स्वर्गादिषु कस्य साधनं भवति। यतो हि वेदे उक्तम् –

तरति मृत्युं, तरति शोकं, तरति पाप्मानं, तरति ब्रह्महत्यां योऽश्वमेधेन यजते।[८]

अन्यच्च –

**अपामसोमममृता अभूमागन्म ज्योतिरविदाम देवान्।**
**किं नूनमस्मान् कृणवदराति: किमु धूर्तिरभूत् मर्त्यस्य।।**[९]

तथा च सुखस्वरूपं स्वर्गन् अस्ति। स्वर्गप्राप्त्यनन्तरं दु:खस्यात्यन्तिकनिवृत्ति: सम्भवति। यतो हि सांख्यतत्त्वकौमुदीग्रन्थे वाचस्पतिना उक्तम् –

**यन्न दु:खेन सम्भिन्नं न च ग्रस्तमनन्तरम्।**
**अभिलाषोपनीतं च तत् सुखं स्वपदास्पदम्।।**[१०]

दु:खस्यात्यन्तिकनिवृत्ति: स्वर्गादिना सम्भवति। अस्य मतस्य समर्थनं कुर्वन् आह माठरवृत्तिकार: – कदाचित् किलेन्द्रो देवानुपस्थितान्निशम्य इत्यवोचत् – भो भो दतत्वादन्यदपि किमप्यस्ति सुखम्। ततस्ते देवा ऊचु: – नास्त्यन्यत्सुखम्। अत एवास्मिन्निवासस्य नाक इत्यभिधानम्। कमिति सुखनाम, तस्य निषेध: अकम् असुखं तन्न इति नाकम्। केवल सुखमेव।

सोम यज्ञे सोमरसं, तेन तत्पानेन अमृता अमरा अभूम सम्पन्ना: किं च अन्म प्राप्तवन्त: ज्योति: स्वर्गम्। अन्यञ्च अविदाम जानीमो देवान्। अस्मिन् स्वर्गे इत्यन्तो देवा इति विद्ध:। किमित्यापेक्षे। नूनं निश्चितम्। अस्मान् अस्माकं विभक्तिविपरिणाम:। कृण्वत् कर्ता। अराति: शत्रुर्मृत्यु:। किं वा धृतिर्जरा अस्माकं करिष्यति। अमृतमर्त्यस्य अमृतपायिनां मर्त्यानाम् इति। बहुलं छन्दसी इति वचनविपरिणाम:। एवमन्योऽपि य: सोमं पास्यति तस्यैकान्तिकोऽवश्यमात्यन्तिक: सर्वथा दु:खत्रयाभिघातो भविष्यति।[११]

उपरोक्तग्रन्थेन माठरवृत्तिकार: वैदिकोपायस्य फलं प्रतिपादितवान्। अत्र जिज्ञासा जायते यत् यदि वैदिकोपायेनैव त्रिविधदु:खानामात्यन्तिकनिवृत्ति: सम्भवति चेत् सांख्यशास्त्रस्योपाय: व्यर्थ:। लौकिकोपायवत् वैदिकोपायेनऽपि दु:खस्य निवृत्ति: न कर्तुं शक्यते। यतो हि वैदिकोपाये अविशुद्धक्षयातिशयदोषा: सन्ति। यथा स्वर्गकामो यजते इति श्रुतिवाक्यात् स्वर्गार्थिन: यागं कुर्यात् इत्यर्थो लभ्यते। केचन स्वर्गार्थिन: सन् अश्वमेधयागान् सम्पादयन्ति। कश्चन एकमेव यागं सम्पादयति। य: शतयागान् करोति स: इन्द्रपदं प्राप्नोति। अत: स्वर्गे अतिशयदोषो विद्यते। यज्ञे पशुहिंसा भवति तत: मा हिंस्यात् सर्वभूतानि इति श्रुत्या अधर्मस्य उत्पत्तिर्भवति। अत: कैश्चित् दु:खस्य प्राप्ति: तत्रापि विद्यते इति मन्यते।

अत: आनुश्रविकोपायेन यस्य स्वर्गस्य प्राप्ति: भवति स च स्वर्ग: क्षयातिशय: युक्त:। अत: तेनोपायेन दु:खस्यात्यन्तिकनिवृत्ति: न सम्भवति। अत एव माठरवृत्तिकार: - य एष आनुश्रविक: श्रौतोऽग्निहोत्रादिक: स्वर्गसाधनतया तापत्रयप्रतीकारहेतुरूक्त:, सोऽपि दृष्टवदनैकान्तिक: प्रतीकार:। तथा हि – मध्यमपिण्डं पुत्रकामा पत्नी प्राशनीयात् आधत्त पितरोगर्भम्[१२]तदेवं वेदवचसा बहून् पिण्डान् पर: शतानश्नाति यावदेकोऽपि पुत्रो न जायते। तथा पश्येम शरद: शतं जीवेम शरद: शतम्[१३] परं गर्भोस्थो जातमात्रो बालो युवाापि कुमारो म्रियते। किं चान्यत् – स श्रोतो हेतु: अविशुद्ध: पाशुहिंसात्मकत्वात्। क्षययुक्त: पुन: पातात्। अतिशययुक्त: तत्रापि स्वामिभृत्यभावश्रवणात्।[१४] उक्तं च –

**षट्शतानि नियुज्यन्ते पशूनां मध्यमेऽहनि।**
**अश्वमेधस्य वचनादुनानि पशुभिस्त्रिभि:।।**

पशुवधोऽग्निष्टोमे मानुषवधः गोव्यवस्था सौत्रामण्यां सुरापानं रण्डया सह स्वेच्छालापश्च ऋत्विजाम्। कल्पसूत्रेऽन्यदप्यकृत्यं भूरिकर्तव्यतयोदिश्यते। ब्रह्मणे ब्राह्मणमालभेत क्षत्राय राजन्यं मरूद्भ्यो वैश्यं तपसे तस्करं नारकाय वीरहणम् इत्यादिश्रवणात्।[१५]

किञ्च –

**यथा पङ्केन पङ्काभ्यः सुरया वा सुराकृतम्।**
**भूतहत्यां तथैवेमां न यज्ञैर्मार्ष्टुमहीति।।**

न हि हस्तावसृदिग्धौ रूधिरेणैव शुध्यतः। तद्यथाऽस्मिन् लोके मनुष्याः पशूनस्ति तथाभिभुञ्जत एवममुष्मिन् लोके पशवो मनुष्यानश्नन्ति।[१६]

**वृक्षान् छित्वा पशून् हत्वा कृत्वा रूधिरकर्दमम्।**
**यज्ञैश्चद्गम्यते स्वर्गो नरकः केन गम्यते।।**

इत्यविशुद्धयुक्तः सर्वथा श्रौतो दुःखत्रयप्रतीकारहेतुः। अथ अपाम सोमममृता अभूम इति प्रयुक्तम्। तत्रेदं प्रत्युत्तरम्। सोमपायिनामपि नृगनहुषेन्द्रययतीनां बेधबन्धपरिक्लेशा बहुविधाः। क्रमेण उपभोगादितरेषां पतनं च। एकाहादीनां सत्राणां दिनपरिमाणवतां कारणानां परिमाणवदेव स्वर्गादिकार्यं दृष्टम्। कारणानुगमत्वात्कार्यस्य। परिमाणवन्मृत्पिण्डात्परिमाणवानेव घटः स्यात्। एवमानुश्रविकाणां फलपरिमाणत्वात् पुनः क्षयः अतिशययुक्तश्च। यथा आढ्यमवलोक्य दरिद्रस्य दुःखं स्यात्, सुरूपं च वीक्ष्य कुरूपस्य, प्राज्ञ दृष्ट्वा मूर्खस्य, तथा शताप्सरसं स्वर्गिणं दृष्ट्वा पञ्चाप्सरसस्तं दृष्टवैकाप्सरसो दुःखमुत्पद्यते। एवमयं दृष्टवत्।[१७]

तदेवमन्योन्यातिशयात् स्वर्गेऽपि दुःखमव्यावृत्तम्। तस्मात्। तद्विपरीतः श्रेयान्। ताभ्यां दृष्टानुश्रविकाभ्यां हेतुभ्यां विपरीतो विसदृश ऐकान्तिक - आत्यन्तिको विशुद्धोऽज्ञयोऽनन्तफलः कैवल्यान्निरतिशयो हेतुः स श्रेयान् प्रशस्यः। कथं पुनरसौ भवतीत्याह – व्यक्ताव्यक्तज्ञविज्ञानात्। व्यक्तं चाव्यक्तं च ज्ञश्च तेषां त्रयाणां विज्ञानादनुभवात्। भवति ह्यसौ अवश्यं फलदानादैकान्तिकः, प्रकृतिज्ञानादात्यन्तिकः, यमनियमादिमत्त्वाच् शुद्धः, शरीरभेदे पुनरनावेश्यत्वादक्षयफलमः। कैवल्यादनुत्तरत्वाच्च निरतिशयफलमिति वाक्यशेषः। तत्र व्यक्तं बुध्यहङ्कारेन्द्रियतन्मात्रभूतभेदात्त्रयोविंशतिकम्। अव्यक्तं प्रधानम्। व्यक्तोत्पत्तिकारणम्। न ह्यकारणं कार्यमित्यस्य सिद्धिः। ज्ञः पुरूषः। सन्निधिसत्तामात्रेण चुम्बक इव लोहस्य प्रवृत्तिकारणम्। अतः प्रधानस्य जडस्य प्रवृत्तिहेतुरयमस्तीति सिद्धिः। एतानि पञ्चविंशतितत्त्वानि व्यक्ताव्यक्तज्ञसंज्ञकानि। यद्विज्ञानादवश्यं सर्वथा तापत्रयेण विमुच्यते।[१८]

**पादटिप्पणी**

| | | |
|---|---|---|
| १.सां.का. – १ | २.मा.वृ.पृ. – १ | ३.मा.वृ.पृ. – २ |
| ४.मा.वृ.पृ. – २ | ५.मा.वृ.पृ. – ३ | ६.मा.वृ.पृ. – ३ |
| ७.मा.वृ.पृ.- ४ | ८.शा.ब्रा. - १३/३/१/१ | ९.ऋ.सं. - ८/४८/३ |
| १०.सां.त.कौ.पृ. – १० | ११.मा.वृ.पृ. -५ | १२.आ.श्रो. - २/७/१४ |
| १३.ऋ.सं. - ७/६६/१६ | १४.मा.वृ.पृ. – ६ | १५.तै.ब्रा. - ४/११ |
| १६.शा.ब्रा. – ११/२ | १७.मा.वृ.पृ. – ६ | १८.मा.वृ.पृ. - ७ |

शोधच्छात्रा-सांख्ययोगविभाग
केन्द्रीयसंस्कृतविश्वविद्यालयः, श्रीसदाशिवपरिसरः,पुरी ।

